तां शोकसलिले मग्नामुत्तारयितुमर्हसि। तथा द्रष्टुं प्रियसुतं वसुदेवं सुदुःखितं। ४४०५
पुत्रयोगेन संयोज्य कृष्ण धर्म्ममवाप्स्यसि। यथा नागः सुदुर्दान्तो दमितो यमुनाह्रदे।
विमूलश्च कृतः शैलो यथा वै भूधरस्तथा। दर्पोत्सिक्तश्च बलवानरिष्टो विनिपातितः।
परप्राणहरः केशी दुष्टात्मा च यथा हतः। एतेनैव प्रयत्नेन हृष्टावुद्धृत्य दुःखितौ।
यथा धर्म्ममवाप्नोषि तत् कृष्ण परिचिन्त्यतां। निर्भर्त्स्यमानो वैवृद्धः पिता ते कंससंसदि।
ते सर्व्वे यदुरश्मयः ते नैर्दुःखान्विता भृशं। गर्भावक्रान्तनादीनि दुःखानि सुबहूनि या। ४४१०
माता ते देवकी कृष्ण कंसस्य सहते ऽवशा। मातापितृभ्यां सर्व्वेण जातेन तनयेन वै।
स्वयं वै प्रतिकर्त्तव्यं यथा योगमुदाहृतं। एवं ते कुर्व्वतः कृष्ण मातापित्रोरनुग्रहं।
परित्यजेतां तौ शोकं स्याच्च धर्म्मस्तवातुलः।
॥ वैशम्पायन उवाच ॥ कृष्णस्तु विदितार्थो वै तमाहाभितदक्षिणं। बाढमित्येव तेजस्वी न च चुक्रोध केशवः।
ते च गोपाः समागम्य नन्दगोपपुरःसराः। अक्रूरवचनं श्रुत्वा सर्व्वेऽपि कंसशासनात्। ४४१५
गमनाय च ते सज्जा बभूवुर्व्रजवासिनः। सज्जश्चोपायनं कृत्वा गोपवृद्धाः प्रतस्थिरे।
करस्थाननुहः सर्पिर्व्विविधांश्चोपनायिकान्। यथासारं यथायूथमुपानीय पयोघृतं।
तं सज्जयित्वा कंसस्य करश्चोपायनानि च। ते सर्व्वे गोपपतयो गमनायोपतस्थिरे।
अक्रूरस्य कथाभिस्तु सह कृष्णेन जाग्रतः। रौहिणेयतृतीयस्य निशा सा व्यत्यवर्त्तत।
ततः प्रभाते विमले पक्षिव्याहारसंकुले। नैशाकरे रश्मिजाले चन्द्रालयसंवृते। ४४२०
नभस्यरुणसंस्तीर्णे पर्य्यस्ते ज्योतिषां गणे। प्रत्यूषपवनासारैः क्लेदिते धरणीतले।
क्षीणाकारासु तारासु सुप्तनिश्चितिभासु च। नैशमन्तर्द्धधे रूपमुदगच्छद्दिवाकरः।
शीतांशुः शान्तकिरणो निष्प्रभः समपद्यत। एको नाशयते रूपमेको वर्द्धयते वपुः।
गोभिः समवकीर्णासु व्रजनिर्य्याणभूमिषु। मन्थनावर्त्तपूर्णेषु गर्गरेषु नदत्सु च।
दामभिर्य्यन्त्र्यमानेषु वत्सेषु तरुणेषु च। गोपैरापूर्य्यमाणासु चावरथ्यासु सर्व्वशः। ४४२५
तत्रैव गुरुकं भाण्डं शकटारोपितं बहु। त्वरिताः पृष्ठतः कृत्वा जग्मुः स्यन्दनवाहनाः।
कृष्णोऽथ रौहिणेयश्च स चैवामितदक्षिणः। त्रयो रथगता जग्मुस्त्रिलोकपतयो यथा।
अथाह कृष्णमक्रूरो यमुनातीरमाश्रितः। स्यन्दनं तात रक्षस्व यत्नश्च कुरु वाजिषु।
हयेभ्यो यवसं दत्वा क्षयभाण्डे रथे तथा। प्रगाढं यत्नमादाय क्षणं तात प्रतीक्ष मां।
यमुनाया ह्रदे ह्यस्मिन् स्तोष्यामि भुजगेश्वरं। दिव्यैर्भागवतैर्मन्त्रैः सर्व्वलोकप्रभुं यतः। ४४३०
गुह्यं भागवतं देवं सर्व्वलोकस्य भावनं। श्रीमत्स्वस्तिकमूर्द्धानं प्रणमिष्यामि भोगिनं।
सहस्रशिरसं देवमनन्तं नीलवाससं। यस्य दिव्यस्य तस्यास्य चरितं प्रभविष्यति।
सर्व्वं तदमृतप्रख्यमशिष्याम्यमरो यथा। स्वस्तिकायतनं दृष्ट्वा द्विजिह्वं शोभिभूषितं।
समाजस्तत्र सर्पाणां शाश्वतं वै भविष्यति। चास्यां मां समुद्वीक्षन्तौ भवन्तौ पद्मतावुभौ।

निवृत्तो भुजगेन्द्रस्य यावदस्मि ह्रदोत्तमात् । तमाह कृष्णः संहृष्टो गच्छ धर्म्मिष्ठ मा चिरं । ४४३५
आवां खल्वु न शक्तौ स्वस्त्वया हीनावुपासितुं । स ह्रदे यमुनायास्तु ममज्जामितदर्शिनः ।
रसातले स ददृशे नागलोकमिमं यथा । तस्य मध्ये सहस्रास्यं हेमतालोच्छ्रितध्वजं ।
लाङ्गलासक्तहस्ताग्रं मुषलापाश्रितोदरं । असिताम्बरसंवीतं पाण्डुरं पाण्डुराननं ।
कुण्डलैकधरं मत्तं सुप्तमम्बुजलेक्षणं । भोगोत्करासने शुभ्रे स्वेन देहेन शोभिते ।
स्वासीनं स्वस्तिकाभ्यास्य वराहीभ्यां महीधरं । किञ्चित्सव्यापवृत्तेन मौलिना हेमचूलिना । ४४४०
जातरूपमयैः पद्मैर्मालया स्कन्नवक्षसं । रक्तचन्दनदिग्धाङ्गं दीर्घबाहुमरिन्दमं ।
पद्मनाभं सिताभ्राभं भाभिर्ज्वलितवर्चसं । ददर्श भोगिनां नाथमेकमेकार्णवेश्वरं ।
पूज्यमानं द्विजिह्वैर्वासुकिप्रमुखैः प्रभुं । कम्बलाश्वतरौ नागौ तौ चामरकरावुभौ ।
आवीजयेतां तं देवं धर्म्मासनगतं प्रभुं । तदभ्यासगतो भाति वासुकिः पन्नगेश्वरः ।
वृतोऽन्यैः सचिवैः सर्पैः कर्कोटकपुरःसरैः । तं घटैः काञ्चनैर्दिव्यैः पद्मजोद्गतमस्तकैः । ४४४५
राजानं स्नापयामासुः स्नातमेकार्णवाम्बुभिः । तस्योत्सङ्गे घनश्यामं श्रीवत्साच्छादितोरसं ।
पीताम्बरधरं विष्णुं स्वुपविष्टं ददर्श ह । अपरश्चैव सोमेन तुल्यसंहननं प्रभुं ।
सङ्कर्षणमिवासीनं तं दिव्यं विष्टरं विना । स कृष्णं तत्र तरसा व्याहर्त्तुमुपचक्रमे ।
तस्य संस्तम्भयामास वाक्यं कृष्णः स्वतेजसा । सोऽनुभूय भुजङ्गानां तं भागवतमव्ययं ।
उदतिष्ठत् पुनस्तोयात् विस्मितोऽमितदर्शिनः । स तौ रथस्थावासीनौ तत्रैव बलकेशवौ । ४४५०
निरीक्षमाणावन्योन्यं ददर्शाद्भुतरूपिणौ । अथामज्जत् पुनस्तत्र तदाऽक्रूरः कुतूहलात् ।
दृश्यते यत्र देवोऽसौ नीलवासाः सिताननः । तथैवासीनमुत्सङ्गे सहस्रास्यधरस्य वै ।
ददर्श कृष्णमक्रूरः पूज्यमानं तदा प्रभुं । भूयश्च सहसोत्थाय तस्मिन्नम्भसि सहसा वदन् ।
रथं तेनैव मार्गेण जगामामितदर्शिनः । तमाह केशवो हृष्टः स्थितमक्रूरमागतं ।
कीदृशं नागलोकस्य वृत्तं भागवते ह्रदे । चिरन्तु भवता कालं व्याक्षेपेण विलम्बितं । ४४५५
मन्ये दृष्टं त्वयाश्चर्य्यं हृदयं ते यथाऽचलं । प्रत्युवाच स तं कृष्णमाश्चर्य्यं भवता विना ।
किं भविष्यति लोकेषु स्थावरेषु चरेषु च । तत्राश्चर्य्यं मया दृष्टं कृष्ण यद्भुवि दुर्लभं ।
तदिहापि यथा तत्र पश्यामि च रमामि च । सङ्गतश्चास्मि लोकानामाश्चर्य्येणेह रूपिणा ।
अतः परतरं कृष्ण नाश्चर्य्यं द्रष्टुमुत्सहे । तदागच्छ गमिष्यामः कंसराजपुरीं प्रभो ।
यावन्नास्तं प्रजत्येष दिवसान्ते दिवाकरः । ४४६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अक्रूरस्य नागलोकदर्शने त्र्यशीतोऽध्यायः ॥ ८३ ॥
॥ वैशम्पायन उवाच ॥ स तु युक्त्वा रथवरमारुह्यामितदर्शिनः । कृष्णेन सार्द्धं संप्रायात्तथा सङ्कर्षणेन च ।
आससाद पुरीं रम्यां मथुरां कंसपालितां । विविशुस्तां पुरीं रम्यां काले रक्तदिवाकरे ।
तौ तु स्वभवनं वीरौ कृष्णसंकर्षणावुभौ । प्रवेशितौ बुद्धिमता अक्रूरेणार्कतेजसा ।

तावाह वरवर्णाभौ भीतो दासपतिस्तदा। त्यक्तव्या तात गमने वसुदेवस्य हे सुता।
युवयोर्हि कृते वृद्धः कंसेन स निरस्यते। भर्त्स्यते च दिवारात्रौ नैव स्थातव्यमित्यपि। ४४२५
तद्युवाभ्यां हि कर्त्तव्यं पित्रर्थं सुखमुत्तमं। यथा सुखमवाप्नोति तद्धि कार्य्यं हितान्वितं।
तमुवाच ततः कृष्णो यास्यावावामतर्किंतौ। प्रेक्षन्तौ मथुरां वीर राजमार्गञ्च धार्म्मिक।
तथैव तु गृहं साधो गच्छावो यदि मन्यसे।
॥ वैशम्पायन उवाच ॥ अनुशिष्टौ च तौ वीरौ प्रस्थितौ प्रेक्षकावुभौ। शालाभ्यामिवोन्मुक्तौ कुञ्जरौ युद्धकाङ्क्षिणौ।
तौ तु मार्गगतं दृष्ट्वा रजकं रङ्गकारकं। अयाचेतां ततस्तानि वासांसि रुचिराणि वै। ४४३०
रजकः स तु तौ प्राह युवां कस्य वनेचरौ। राज्ञो वासांसि यौ मोहाद्याचेतां निर्भयावुभौ।
अहं कंसस्य वासांसि नानादेशभवानि वै। कामरागाणि शतशो रञ्जयामि विशेषतः।
युवां कस्य वने जातौ मृगैः सह विवर्द्धितौ। जातरागाविदं दृष्ट्वा रक्तमाच्छादनं बहु।
अहो वां जीवितं त्यक्तं यौ भवन्ताविहागतौ। मूर्खौ प्राकृतविज्ञानौ वासो याचितुमिच्छथः।
तस्मै चुक्रोध वै कृष्णो रजकायाल्पमेधसे। प्राप्तायिष्टाय मूर्खाय सृजते वाङ्मयं विषं। ४४३५
तलेनाशनिकल्पेन स तं मूर्द्ध्न्यताडयत्। स गतासुः पपातोर्व्व्यां रजको व्यस्तमस्तकः।
तं हतं परिदेवन्त्यो भार्य्यास्तस्य विचुक्रुशुः। त्वरितं मुक्तकेश्यश्च जग्मुः कंसनिवेशनं।
तावप्युभौ सुवसनौ जग्मतुर्माल्यकारणात्। वीथ्यौ माल्यापणानां वै गन्धाघ्रातौ द्विपाविव।
गुणको नाम तत्रासीन्माल्यवृत्तिः प्रियंवदः। प्रभूतमाल्यापणवान् लक्ष्मीवान् प्रियदर्शनः।
तं कृष्णः श्लक्ष्णया वाचा माल्यार्थमभिसृत्य वा। देहीत्युवाच तत्कालं मालाकारमकातरं। ४४४०
ताभ्यां प्रीतो ददौ माल्यं प्रभूतं माल्यजीवकः। भवतोः स्वमिदञ्चेति प्रोवाच प्रियदर्शने।
प्रीतस्तु मनसा कृष्णो गुणकाय वरं ददौ। श्रीस्त्वां मत्संश्रया सौम्य धनौघैरभिवर्त्स्यते।
स लब्ध्वा वरमव्यग्रो माल्यवृत्तिरधोमुखः। कृष्णस्य पतितो मूर्द्ध्ना प्रतिजग्राह तं वरं।
यक्षाविमाविति तदा स मेने माल्यजीवकः। स भृशं भयसंविग्नो नोत्तरं प्रत्यपद्यत।
वसुदेवसुतौ तौ च राजमार्गगतावुभौ। कुब्जां ददृशतुर्भूयः सानुलेपनभाजनां। ४४४५
तामाह कृष्णः कुब्जेति कस्येदमनुलेपनं। नयस्यम्बुजपत्राक्षि शिघ्रमाख्यातुमर्हसि।
सा स्मिताक्षिचणी भूत्वा प्रत्युवाचाम्बुजेक्षणं। कृष्णं जलदगम्भीरं विद्युत्कुटिलगामिनि।
राज्ञः स्नानगृहं यामि तद्गृहाणानुलेपनं। स्थिताऽस्म्यागच्छ भद्रं ते वरयस्यासि मे प्रियः।
कुतस्त्वागम्यते सौम्य यन्मां त्वं नावबुध्यसे। महाराजस्य दयितां नियुक्तामनुलेपने।
तामुवाच हसन्नीव कृष्णः कुब्जामवस्थितां। आवयोर्गात्रसदृशं दीयतामनुलेपनं।
वयं हि देशातिथयो मल्लाः प्राप्ता वरानने। द्रष्टुं धनुर्महं दिव्यं राष्ट्रञ्चैव महर्द्धिमत्।
प्रत्युवाचाथ सा कृष्णं प्रियोऽसि मम दर्शने। राजार्हमिदमव्यग्रं तद्गृहाणानुलेपनं।
तावुभावनुलिप्ताङ्गौ चारुगात्रौ विरेजतुः। तीर्थगौ पङ्कदिग्धाङ्गौ यमुनायां यथा वृषौ।

तां च कुब्जां स्तनोद्देशे द्व्यङ्गुलेनाग्रपाणिना । शनैः सन्ताडयामास कृष्णो लीलाविधानवित् ।
सा तु मत्वा ऋजुं मार्गं स्वायताङ्गी ह्यवस्थिता । जघनोद्वहनतटी ऋजुयष्टिर्लता यथा । ४८९५
प्रणयाच्चापि कृष्णं सा बभाषे मत्तकाशिनी । क्व यास्यसि मया बद्धः कान्त तिष्ठ स्वराव मां ।
तौ जातहर्षावन्योन्यं सतलाक्षेपमव्ययौ । वीक्षमाणौ प्रहसितौ कुब्जायाः श्रुतविस्तरौ ।
कृष्णस्तु कुब्जां कामार्त्तां सस्मितं विससर्ज्ज ह । ततस्तौ कुब्जया मुक्तौ प्रविष्टौ राजसंसदं ।
तावुभौ व्रजसंवृद्धौ गोपवेशविभूषितौ । गूढचेष्टाननौ भूत्वा प्रविष्टौ नृपवेश्म तत् ।
धनुःशालाकृतौ तौ तु बालावपरितर्कितौ । हिमवद्वनसंभूतौ सिंहाविव बलोत्कटौ । ४९००
दिदृक्षू तौ महत्तत्र धनुरायोगभूषितं । पप्रच्छतुश्च तौ वीरावायुधागारिकं तदा ।
भोः कंसधनुषां पाल श्रूयतामावयोर्व्वचः । कतरत्तद्धनुः सौम्य महोऽयं यस्य वर्त्तते ।
आयोगभूतं कंसस्य दर्शयस्व यदीच्छसि । स तयोर्दर्शयामास तद्धनुः शक्रसन्निभं ।
अनारोप्यमसङ्क्षोभ्यं देवैरपि सवासवैः । तद्गृहीत्वा ततः कृष्णस्तुलयामास वीर्य्यवान् ।
दोर्भ्यां कमलपत्राक्षः प्रहृष्टेनान्तरात्मना । तुलयित्वा यथाकामं तद्धनुर्दैत्यपूजितं । ४९०५
आरोपयामास बली नामयामास चासकृत् । आनाम्यमानं कृष्णेन प्रहर्षादुरगोपमं ।
द्विधाभूतमभून्मध्ये धनुरायोगभूषितं । भङ्क्त्वा तु तद्धनुःश्रेष्ठं कृष्णस्त्वरितविक्रमः ।
निश्चक्राम महावेगः स च संकर्षणो युवा । धनुषो भङ्गनादेन वायुनिर्घोषकारिणा ।
चचालान्तःपुरं सर्व्वं दिशश्चैव पुपूरिरे । स त्वायुधागारनरो भीतस्त्वरितविक्रमः ।
समीपं नृपतेर्गत्वा काकोच्छ्वासोऽभ्यभाषत । श्रूयतां मम विज्ञाप्यमाश्चर्य्यं धनुषो गृहे । ४९१०
निर्वृत्तमस्मिन् काले यद्भागतः संभ्रमोपमं । नरौ कस्यापि सदृशौ श्रिशाविततमूर्द्धजौ ।
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ । तावन्तःपुरमज्ञातौ प्रविष्टौ कामवेशिनौ ।
देवपुत्रोपमौ वीरौ बालाविव हुताशनौ । स्थितौ धनुर्गृहे सौम्यौ सहसा खादिवागतौ ।
मया दृष्टौ परिव्यक्तं रुचिराच्छादनस्रजौ । तयोरेकस्तु पद्माक्षः श्यामः पीताम्बरस्रजः ।
जग्राह तद्धनूरत्नं दुर्ग्राह्यं दैवतैरपि । तत् स बालो महाचापं बलादुन्नमितायतं । ४९१५
आरोपयित्वा वेगेन नामयामास लीलया । आकृष्यमाणं तत्तेन विचार्य्य बाहुशालिना ।
मुष्टिदेशेन कूजित्वा द्विधाभूतमभज्यत । ततः प्रचलिता भूमिर्न प्रभाति च भास्करः ।
धनुषो भङ्गनादेन भ्रमतीव नभस्तलं । तदद्भुतमहं दृष्ट्वा विस्मयं परमं गतः ।
भयाद्धृदयं शत्रूणां तदिहाख्यातुमागतः । न जानामि महाराज कौ तावमितविक्रमौ ।
एकः कैलाससदृशश्च एकोऽञ्जनगिरिप्रभः । स तु तच्चापरत्नन्तु भङ्क्त्वा स्तम्भमिव द्विपः । ४९२०
निष्पपातानिलगतिः सानुगोऽमितविक्रमः । स धनुस्तद्द्विधा कृत्वा न जाने क्वापि निर्गतः ।
श्रुत्वैवं धनुषो भङ्गं कंसो विदितविस्तरः । विसृज्यायुधपालं वै प्रविवेश गृहोत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि धनुर्भङ्गे चतुरशीतोऽध्यायः ॥ ८४ ॥

॥ वैशम्पायन उवाच ॥ स चिन्तयित्वा भगवो भङ्गं भोजविवर्द्धनः । बभूव विमना राजा चिन्तयन् स्वदुःखितः ।
कथं बालो विगतभीरवमन्य महाबलं । प्रेक्ष्यमाणस्तु पुरुषैर्द्धनुर्भङ्क्त्वा विनिर्गतः ।
यस्यार्थे दारुणं कर्म्म कृत्वा लोकविगर्हितं । पितृस्वसात्मजान् भीतः सर्व्वांस्तान् व्यपोथयं । ४५२५
दैवं पुरुषकारेण न शक्यमतिवर्त्तितुं । नारदोक्तन्तु वचनं नूनं मह्यमुपस्थितं ।
एवं राजा विचिन्त्यैव निष्क्रम्य स गृहोत्तमात् । प्रेक्षागारं जगामाशु मल्लानामवलोककः ।
स दृष्ट्वा सर्व्वनिर्युक्तं प्रेक्षागारं नृपोत्तमः । श्रेणीनां दृढसंयुक्तैर्मञ्चवाटैर्निरन्तरं ।
उत्तरागारयुक्ताभिर्म्मञ्चभीभिर्व्विभूषितं । कूटीभिश्च महत्त्वाभिरेकस्तम्भैश्च भूषितं ।
सर्व्वतः सारनिर्युक्तं स्वायतं सुप्रतिष्ठितं । उदयाक्लिष्टसुश्लिष्टं महारोहणमुत्तमं । ४५३०
नृपासनपरिक्षिप्तं महाप्रपथसङ्कुलं । कक्षं तद्वेदिकाभिश्च मानवौघभरक्षमं ।
स दृष्ट्वा भूषितं रङ्गमाज्ञापयत बुद्धिमान् । श्वः सचिवाः समाजाश्च सपताकास्तथैव च ।
सुवासिता वपुष्मन्त उपनीतोत्तरच्छदाः । क्रियन्तां मञ्चवाटाश्च वरुण्या बोध्यतां तथा ।
रङ्गवाटे करीषस्य कल्प्यन्तां राशयोऽव्ययाः । घण्टातोरणशोभाश्च वलयश्चानुरूपतः ।
स्थाप्यन्तां सुनिखातांश्च पानकुम्भा यथाक्रमं । उदभारधराः सर्व्वे सकाञ्चनघटोत्तराः । ४५३५
वलयश्चोपकल्प्यन्तां कषायाश्चैव कुम्भशः । प्राश्निकाश्च निमन्त्र्यन्तां श्रेण्यश्च सपुरोगमाः ।
आज्ञा च देया मल्लानां प्रेक्षकाणां तथैव च । समाजे मञ्चशोभाश्च कल्प्यन्तां सूपकल्पिताः ।
एवमाज्ञाप्य राजा स समाजविधिमुत्तमं । समाजवाटान्निष्क्रम्य विवेश स्वं निवेशनं ।
आह्वानं तत्र सम्यक् तस्य मल्लद्वयस्य वै । चाणूरस्याप्रमेयस्य मुष्टिकस्य तथैव च ।
तौ मल्लौ सुमहावीर्य्यौ बलिनौ बाहुशालिनौ । कंसस्याज्ञां पुरस्कृत्य हृष्टौ विविशतुस्तदा । ४५४०
तौ समीपगतौ दृष्ट्वा मल्लौ जगति विश्रुतौ । उवाच कंसो नृपतिः सोपन्यासमिदं वचः ।
भवन्तौ मम विख्यातौ मल्लौ वीरध्वजोचितौ । पूजितौ च यथान्यायं सत्कारार्हौ विशेषतः ।
तद्भवन्तौ यदि सत्काराः स्मर्य्यन्ते सुकृतानि वा । कर्त्तव्यं मे महत् कर्म्म भवद्भ्यां स्वेन तेजसा ।
यावेतौ मम संवृद्धौ व्रजे गोपालकावुभौ । सङ्कर्षणश्च कृष्णश्च बालावपि जितश्रमौ ।
एतौ रङ्गगतौ युद्धे युध्यमानौ वनेचरौ । निपातानन्तरं शीघ्रं हन्तव्यौ नात्र संशयः । ४५४५
बालाविमौ चपलकावक्रियाविति सर्व्वथा । नावज्ञा तत्र कर्त्तव्या कर्त्तव्यो यत्न एव हि ।
ताभ्यां युधि निरस्ताभ्यां गोपाभ्यां रङ्गसन्निधौ । आयत्याञ्च तदात्वे च श्रेयो मम भविष्यति ।
नृपतेः स्नेहसंयुक्तैर्व्वचोभिर्वर्द्धमानसौ । जगदतुर्युद्धसामन्तौ मल्लौ चाणूरमुष्टिकौ ।
यद्यावयोस्तौ प्रमुखे स्थास्येते गोपकिल्बिषौ । हतावित्यवगन्तव्यौ प्रेतरूपौ तपस्विनौ ।
यद्यावां प्रतियोत्स्येते तावरिष्टपरिप्लुतौ । आवाभ्यां रोषयुक्ताभ्यां प्रमुखे तौ वनौकसौ । ४५५०
एवं वाग्विषमुत्सृज्य तावुभौ मल्लपुङ्गवौ । अनुज्ञातौ नरेन्द्रेण स्वगृहं प्रतिजग्मतुः ।
महामात्रं ततः कंसो बभाषे हस्तिजीविनं । हस्ती कुवलयापीडः समाजद्वारि तिष्ठतु ।

बलवान्मदलोलाक्षश्चपलः क्रोधनो नृषु । दानोत्कटकटस्तम्भः प्रतिवारणवारणः ।
स सन्नोदयितव्यस्ते तावुद्दिश्य वनौकसौ । वसुदेवसुतौ गोपौ यथा स्यातां गतायुषौ ।
त्वया चैव गजेन्द्रेण यदि तौ गोपु जीविनौ । भवेतां घातितौ रङ्गे न पश्येयं मदोत्कटौ । ३१५५
ततस्तौ पातितौ दृष्ट्वा वसुदेवः सबान्धवः । छिन्नमूलो निरालम्बः सभार्य्यो विनशिष्यति ।
ये चैने यादवा मूर्खाः सर्व्वे कृष्णपरायणाः । ते नशिष्यन्ति छिन्नाशा दृष्ट्वा कृष्णं निपातितं ।
एतौ हत्वा गजेन्द्रेण मल्लैर्वा स्वयमेव वा । पुरीं निर्यादवां कृत्वा विचरिष्याम्यहं सुखी ।
पिताऽपि मे परित्यक्तो यादवानां कुलोद्वहः । शेषाश्च मे परित्यक्ता यादवा कृष्णपक्षिणः ।
न चाहमुग्रसेनेन जातः किल सुतार्थिना । मानुषेणाल्पवीर्य्येण यथा मामाह नारदः । ३१६०
॥ महामात्र उवाच ॥ कथमुक्तं नारदेन राजन् देवर्षिणा पुरा । आश्चर्यमेतत् कथितं त्वत्तः श्रुतमरिन्दम ।
कथमन्येन जातस्त्वमुग्रसेनात् पितुर्विना । तव माता कथं राजन् कृतं कर्म्मेदमीदृशं ।
अन्याऽपि प्राकृता नारी न कुर्य्यात्तु जुगुप्सितं । विस्तरं श्रोतुमिच्छामि परं कौतूहलं हि मे ।
॥ कंस उवाच ॥ यथा कथितवान्विप्रो महर्षिर्नारदः प्रभुः । तथाऽहं सम्प्रवक्ष्यामि यदि ते श्रवणे मतिः ।
आगतः शक्रसदनात् स वै शक्रसखो मुनिः । चन्द्रांशुशुक्लवसनो जटामण्डलमुद्वहन् । ३१६५
कृष्णाजिनोत्तरीयेण रुक्मयज्ञोपवीतवान् । दण्डी कमण्डलुधरः प्रजापतिरिवापरः ।
गाता चतुर्णां वेदानां विद्वान् गन्धर्व्ववेदवित् । स नारदोऽथ देवर्षिर्ब्रह्मलोकचरोऽव्ययः ।
तमागतमृषिं दृष्ट्वा पूजयित्वा यथाविधि । पाद्यार्घमासनं दत्त्वा सम्प्रवेश्योपविश्य च ।
सुखोपविष्टोऽथ मुनिः पृष्ट्वा च कुशलं मम । उवाच मां प्रीतमना देवर्षिर्भावितात्मवान् ।
पूजितोऽहं त्वया वीर विधिदृष्टेन कर्म्मणा । इदमेकं मम वचः श्रूयतां प्रतिगृह्यतां । ३१७०
गतोऽहं देवसदनं सौवर्णे मेरुपर्व्वते । सोऽहं कदाचिद्देवानां समाजे मेरुमूर्द्धनि ।
तत्र मन्त्रयतामेवं देवतानां मया श्रुतः । भवतः सानुगस्यैह वधोपायः सुदारुणः ।
तत्रैष देवकीगर्भो विष्णुर्लोकनमस्कृतः । योऽस्या गर्भोऽष्टमः कंस स ते मृत्युर्भविष्यति ।
देवानां स तु सर्व्वस्वं त्रिदिवस्य गतिश्च सः । परं रहस्यं देवानां स ते मृत्युर्भविष्यति ।
यत्नश्च क्रियतां कंस गर्भाणां पातनं प्रति । नावज्ञा रिपवे कार्य्या दुर्ब्बले स्वजनेऽपि वा । ३१७५
न चायमुग्रसेनस्तु पिता तव महाबल । द्रुमिलो नाम तेजस्वी सौभस्य पतिरूर्ज्जितः ।
श्रुत्वाऽहं तद्वचस्तस्य किञ्चित्क्रोधसमन्वितः । भूयोऽपृच्छं कथं ब्रह्मन् द्रुमिलो नाम दानवः ।
मम मात्रा कथं तस्य ब्रूहि विप्र समागमः । एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
॥ नारद उवाच ॥ हन्त ते वर्णयिष्यामि शृणु राजन् यथार्थतः । द्रुमिलस्य च मात्रा ते संवादश्च समागमं ।
सुयामुनं नाम गिरिं तव माता रजस्वला । प्रेक्षितुं सहिता स्त्रीभिर्गता वनकुतूहलात् । ३१८०
सा तत्र रमणीयेषु रुचिरद्रुमसानुषु । चचार नगश्रृङ्गेषु कन्दरेषु नदीषु च ।
किन्नरोद्गीतमधुराः प्रतिश्रुत्याऽभिनादिताः । शृण्वती कामजननीर्व्वाचः श्रोत्रसुखावहाः ।

बर्हिणाञ्चैव विरुतं खगानाञ्च विकूजितं । अभीक्ष्णमभिगच्छन्ती क्रोधर्षीं सा व्यरोचयत्।
एतस्मिन्नन्तरे वायुर्वनराजिविनिःसृतः । ववौ कुसुमगन्धाढ्यो वशी मन्मथबोधनः ।
द्विरेफाभरणाश्चैव कदम्बा वायुघट्टिताः । मुमुचुर्गन्धमधिकं सन्ततासारमूर्च्छिताः । ८५८५
केसराः पुष्पवर्षैश्च वपुष्मद्वोधनाः । नीपा दीपा इवाभान्ति पुष्पकर्णिकधारिणः ।
मही नवतृणच्छन्ना शक्रगोपविभूषिता । यौवनस्थेव वनिता सन्दधाराज्ज्वलं वपुः ।
अथ सौभपतिः श्रीमान् द्रुमिलो नाम दानवः । भविष्यद्दैवयोगेन विधात्रा यश्च नोद्यते ।
कामगेन रथेनाशु तप्तादित्यवर्चसा । यदृच्छया गतस्तत्र सुधामृगविदूरया ।
विहायसा कामगमो मनसोऽप्याशुगामिना । स तं प्राप्य पर्व्वतेन्द्रं ह्यवतीर्य रथोत्तमात्। ८५९०
पर्व्वतोपवने न्यस्य रथं परपुरञ्जयः । उभौ तौ सूतसहितौ चेरतुर्नगमूर्द्धनि ।
ततो बहून्यपश्येतां काननानि वनानि च । सर्व्वर्त्तुगुणसम्पन्ने नन्दनस्येव कानने ।
चेरतुर्नगशृङ्गेषु कन्दरेषु नदीषु च । नानाधातुपिनद्धैश्च शृङ्गैर्व्योमाभिलङ्घितैः ।
नानावर्णविचित्रैश्च काञ्चनाञ्जनराजतैः । नानाकुसुमगन्धाढ्यान्नानासत्त्वगणैर्युतान्।
नानाद्विजगणाद्युष्टान्नानापुष्पफलद्रुमान् । नानौषधिसमायुक्तानृषिसिद्धानुसेवितान्। ८५९५
विद्याधरान् किम्पुरुषान्यक्षान्नरराक्षसान् । सिंहान् व्याघ्रान् वराहांश्च महिषाञ्छरभाञ्छशान्।
चमरांश्चमरव्यद्गुल्मानद्भान् पवराचलान् । एवं बहुविधान् पश्यंश्चरमाणो नगोत्तमं ।
दूराद्ददर्श नृपतिर्द्देवीं सुरसुतोपमां । क्रीडमानां सखीभिश्च पुष्पश्चैव प्रचिन्वतीं ।
ततश्चरन्तीं सुश्रोणीं सखीभिः सह संवृतां । दृष्ट्वा सौभपतिर्दूराद्विस्मयन् सूतमब्रवीत्।
कस्येयं मृगशावाक्षी वनान्तरविचारिणी । रूपौदार्य्यगुणोपेता मन्मथस्य रतिर्यथा । ८६००
शचीव पुरुहूतस्य उताहो वा तिलोत्तमा । नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी ।
ऐलस्य दयिता देवी यो विद्रुतं किमुर्व्वशी । क्षीरार्णवे मथ्यमाने सुरासुरगणैः सह ।
मन्थानं मन्दरं कृत्वा अमृतार्थेति नः श्रुतं । ततोऽमृतात् समुत्पन्ना देवी श्रीर्लोकभाविनी ।
नारायणाङ्कललिता किं श्रीरेषा वरानना । नीलमेघान्तरगता द्योतन्तीवाचिरप्रभा ।
तथा योषिद्गणान्मध्ये रूपं प्रद्योतयद्वनं । अतीव सुकुमाराङ्गी सुप्रभेन्दुनिभानना । ८६०५
दृष्ट्वा रूपमनिन्द्याङ्ग्या विभ्रान्तो व्याकुलेन्द्रियः । कामस्य वशमापन्नो मनो विक्लवतीव मे ।
भृशं हनन्ति मेऽङ्गानि कुसुमायुधसायकाः । भित्त्वा हृदि शराः पञ्च निर्द्दहन्तीव मे तनुं ।
तच्छयाग्निर्व्वर्द्धयति आश्वसिक्त इवानलः । कथमद्य भवेत् कार्य्यं प्रमाथे मन्मथाग्निना ।
केनोपायेन किं कर्म भजेन्मा मत्तकामिनी । एवं सञ्चिन्तयानो नोपलभ्य च दानवः ।
सूतमाह मुहूर्त्तं त्वं तिष्ठ धीरमिहानघ । अहं यास्यामि तां द्रष्टुं कस्येयमिति सुन्दरी । ८६१०
प्रतीक्षमाणस्तिष्ठस्व यावदागमनं मम । श्रुत्वा तु वचनं सूतस्तथाऽस्त्विति च सोऽब्रवीत्।
एवमुक्त्वा दानवेन्द्रो गमनाय मनो दधे । तच्छयाविष्टहृदयो दृष्ट्वा तामसितेक्षणां ।

बलवान्मदलोभाच्चपलः क्रोधनो नृप । दानोत्कटकटस्थलः प्रतिवारणवारणः ।
स सञ्चोदयितव्यस्ते तावुद्दिश्य वनौकसौ । वसुदेवसुतौ गोपौ यथा स्यातां गतायुषौ ।
त्वया चैव गजेन्द्रेण यदि तौ गोप जीविनौ । भवेतां घातितौ रङ्गे न पश्येयं मदोत्कटौ । ३३५५
ततस्तौ पातितौ दृष्ट्वा वसुदेवः सबान्धवः । छिन्नमूलो निरालम्बः सभार्य्यो विनशिष्यति ।
ये चैते यादवा मूर्खाः सर्व्वे कृष्णपरायणाः । ते नशिष्यन्ति छिन्नाशा दृष्ट्वा कृष्णं निपातितं ।
एतौ हत्वा गजेन्द्रेण मल्लैर्वा स्वयमेव वा । पुरीं निर्यादवां कृत्वा विचरिष्याम्यहं सुखी ।
पिताऽपि मे परित्यक्तो यादवानां कुलोद्वहः । शेषाश्च मे परित्यक्ता यादवा कृष्णपक्षिणः ।
न चाहमुग्रसेनेन जातः किल सुतार्थिना । मानुषेणाल्पवीर्य्येण यथा मामाह नारदः । ३३६०
॥ महामात्र उवाच ॥ कथमुक्तं नारदेन राजन् देवर्षिणा पुरा । आश्चर्य्यमेतत् कथितं त्वत्तः सुतमरिन्दम ।
कथमन्येन जातस्त्वमुग्रसेनात् पितुर्विना । तव माता कथं राजन् कृतं कर्म्मेदमीदृशं ।
अन्याऽपि प्राकृता नारी न कुर्य्यात्तु जुगुप्सितं । विस्तरं श्रोतुमिच्छामि स्यात् कौतूहलं हि मे ।
॥ कंस उवाच ॥ यथा कथितवान्विप्रो महर्षिर्नारदः प्रभुः । तथाऽहं सम्प्रवक्ष्यामि यदि ते श्रवणे मतिः ।
आगतः शक्रसदनात् स वै शक्रसखो मुनिः । चन्द्रांशुशुक्लवसनो जटामण्डलमुद्वहन् । ३३६५
कृष्णाजिनोत्तरीयेण रुक्मयज्ञोपवीतवान् । दण्डी कमण्डलुधरः प्रजापतिरिवापरः ।
गाता चतुर्णां वेदानां विद्वान् गन्धर्व्ववेदवित् । स नारदोऽथ देवर्षिर्ब्रह्मलोकचरोऽव्ययः ।
तमागतमृषिं दृष्ट्वा पूजयित्वा यथाविधि । पाद्यार्घमासनं दत्त्वा सम्प्रवेश्योपविश्य च ।
सुखोपविष्टोऽथ मुनिः पृष्ट्वा च कुशलं मम । उवाच मां प्रीतमना देवर्षिर्भावितात्मवान् ।
पूजितोऽहं त्वया वीर विधिदृष्टेन कर्म्मणा । इदमेकं मम वचः श्रूयतां प्रतिगृह्यतां । ३३७०
गतोऽहं देवसदनं सौवर्णं मेरुपर्व्वते । सोऽहं कदाचिद्देवानां समाजे मेरुमूर्द्धनि ।
तत्र मन्त्रयतामेवं देवतानां मया श्रुतः । भवतः सानुगस्येह बधोपायः सुदारुणः ।
तत्रैष देवकीगर्भो विष्णुर्लोकनमस्कृतः । योऽस्या गर्भोऽष्टमः कंस स ते मृत्युर्भविष्यति ।
देवानां स तु सर्व्वस्वं त्रिदिवस्य गतिश्च सः । परं रहस्यं देवानां स ते मृत्युर्भविष्यति ।
यत्नश्च क्रियतां कंस गर्भाणां पातनं प्रति । नावज्ञा रिपवे कार्य्या दुर्ब्बले स्वजनेऽपि वा । ३३७५
न चायमुग्रसेनस्तु पिता तव महाबल । द्रुमिलो नाम तेजस्वी सौभस्य पतिरूर्ज्जितः ।
श्रुत्वाऽहं तद्वचस्तस्य किञ्चिद्रोषसमन्वितः । भूयोऽपृच्छं कथं ब्रह्मन् द्रुमिलो नाम दानवः ।
मम मात्रा कथं तस्य ब्रूहि विप्र समागमः । एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
॥ नारद उवाच ॥ हन्त ते वर्णयिष्यामि शृणु राजन् यथार्थतः । द्रुमिलस्य च मात्रा ते संवादश्च समागमं ।
सुयामुनं नाम गिरिं तव माता रजस्वला । प्रेक्षितुं सहिता स्त्रीभिर्गता वनकुतूहलात् । ३३८०
सा तत्र रमणीयेषु रुचिरद्रुमसानुषु । चचार नगशृङ्गेषु कन्दरेषु नदीषु च ।
किन्नरोद्गीतमधुराः प्रतिश्रुत्याऽभिनादिताः । शृण्वती कामजननीर्व्वाचः श्रोत्रसुखावहाः ।

बलतश्च क्रियातश्च बाहुयुद्धविधिर्युधि । निपातानन्तरं किञ्चिन्न कर्त्तव्यं कदाचन ।
तदिदं प्रस्तुतं रङ्गे युद्धं कृष्णान्ध्रमल्लयोः । बालः कृष्णो महानन्ध्रः कथं न स्याद्विचारणा ।
ततः किलकिलाशब्दः समाजे समवर्त्तत । प्रावल्गत च गोविन्दो वाक्यञ्चेदमुवाच ह ।
अहं बालो महानन्ध्रो वपुषा पर्व्वतोपमः । युद्धं समानेन सह रोचते बाहुशालिना ।
युद्धव्यतिक्रमः कश्चिन्न भविष्यति मत्कृतः । न ह्यहं बाहुयोधानां दूषयिष्यामि यन्मतं । ४८०५
योऽयं करीषधर्म्मश्च तोयधर्म्मश्च रङ्गजः । कषायस्य च संसर्गः समयो ह्येष कल्पितः ।
संयमः स्थिरता शौर्य्यं व्यायामः सत्क्रिया बलं । रङ्गे च नियता सिद्धिरेतद्युद्धविदां मतं ।
यद्ययं बाहुयुद्धं वै सवैरं कर्त्तुमुद्यतः । अत्र वै निग्रहः कार्य्यस्तोषयिष्याम्यहं जगत् ।
करूषेषु प्रसूतोऽयं चाणूरो नाम नामतः । बाहुयोधी शरीरेण कर्म्मभिश्चात्र चिन्त्यतां ।
एतेन बहवो मल्ला निपातानन्तरं हताः । रङ्गप्रतापकामेन मल्लमार्गश्च दूषितः । ४८१०
शस्त्रसिद्धिश्च योधानां संग्रामे शस्त्रयोधिनां । रङ्गे सिद्धिस्तु मल्लानां प्रतिमल्लनिपातजा ।
रणे विजयमानस्य कीर्त्तिर्भवति शाश्वती । हतस्यापि रणे शस्त्रैर्नाकपृष्ठं विधीयते ।
रङ्गे त्वभयतः सिद्धिर्हतस्यैव मृतोऽपि वा । सा हि प्राणान्तिकी यात्रा महद्भिः साधुपूजिता ।
अयन्तु मार्गो बलतः क्रियातश्च विनिःसृतः । मृतस्य रङ्गे कः स्वर्गो जयतो वा कुतो रतिः ।
ये तु केचित् स्वदोषेण राज्ञः पण्डितमानिनः । प्रतापार्थे हता मल्ला मल्लचन्तुर्वधो हि सः । ४८१५
एवं सञ्जल्पतस्तस्य ताभ्यां युद्धं सुदारुणं । उभाभ्यामभवद्घोरं वारणाभ्यां यथा वने ।
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सकङ्कटैः । सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।
तावुभावपि संश्लिष्टौ यथा शैलमयौ तथा । क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिःस्वनैः ।
कीलैर्व्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च । शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभ्याञ्चावघट्टितैः । तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा । ४८२०
बाहुप्राणेन शूराणां समाजोत्सवसन्निधौ । अरज्यत जनः सर्व्वः सोत्क्रुष्टनिनदोत्थितः ।
साधुवादांश्च सत्त्वेषु घोषयन्त्यपरे जनाः । ततः प्रस्विन्नवदनः कृष्णप्रणिहितेक्षणः ।
न्यवारयत तूर्य्याणि कंसः सव्येन पाणिना । प्रतिषिद्धेषु तूर्य्येषु मृदङ्गादिषु तेषु वै ।
खे सङ्गतान्यवाद्यन्त दिव्यतूर्य्याण्यनेकशः । युध्यमाने हृषीकेशे पुण्डरीकनिभेक्षणे ।
स्वयमेव प्रवाद्यन्त तूर्य्यघोषास्तु सर्व्वशः । अन्तर्द्धानगता देवा विमानैः कामरूपिणः । ४८२५
चेरुर्व्विद्याधरैः सार्द्धं कृष्णस्य जयकाङ्क्षिणः । जयस्व कृष्ण चाणूरं दानवं मल्लरूपिणं ।
इति सप्तर्षयः सर्व्वे ऊचुश्चैव नभोगताः । चाणूरेण चिरं कालं क्रीडित्वा देवकीसुतः ।
बलमाहारयामास कंसस्याभावदर्शिवान् । ततश्चचाल वसुधा सस्वाश्चैव जघूर्णिरे ।
मुकुटश्चापि कंसस्य पपात मणिसत्तमः । दोर्भ्यामानम्य कृष्णश्च चाणूरं पूर्णजीवितं ।
प्राहरन्मुष्टिना मूर्द्ध्नि वक्षस्याहत्य जानुना । निःसृते चास्य रुधिरे तस्य नेत्रे सबन्धने । ४८३०

तापनीये यथा घण्टे कक्षोपरि विलम्बिते । पपात स तु रङ्गस्य मध्ये निःसृतलोचनः ।
चाणूरो विगतप्राणो जीवितान्ते महीतले । देहेन तस्य मल्लस्य चाणूरस्य गतायुषः ।
सन्निरुद्धो महारङ्गः स शैलेनेव लक्ष्यते । रौहिणेयो हते तस्मिंश्चाणूरे बलदर्पिते ।
जग्राह मुष्टिकं रङ्गे कृष्णस्तोषलकं पुनः । सन्निपाते तु तौ मल्लौ प्रथमे क्रोधमूर्च्छितौ ।
समेयातां रामकृष्णौ कालस्य वशवर्त्तिनौ । निर्घातावनतो भूत्वा रङ्गमध्ये ववल्गतुः । ४०३५
कृष्णस्तोषलमुद्यम्य गिरिकूटोपमं बली । भ्रामयित्वा शतगुणं निष्पिपेष महीतले ।
तस्य कृष्णाभिपन्नस्य पीडितस्य बलीयसः । मुखाद्रुधिरमत्यर्थमुज्जगाम मुमूर्षतः ।
सङ्कर्षणस्तु सुचिरं योधयित्वा महाबलः । अन्ध्रमल्लं महामल्लो मण्डलानि व्यदर्शयत् ।
मुष्टिनैकेन तेजस्वी साशनिस्तनयित्नुना । शिरस्यभ्यहनद्वीरो वज्रेणेव महागिरिं ।
स निष्पतितमस्तिष्को निमग्ननयनाननः । पपात निहतस्तेन ततो नादो महानभूत् । ४०४०
अन्धतोषलकौ हत्वा कृष्णसङ्कर्षणावुभौ । क्रोधसंरक्तनयनौ रङ्गमध्ये ववल्गतुः ।
समाजवाटो निर्मल्लः सोऽभवद्भीमदर्शनः । अन्ध्रे तदा महामल्ले मुष्टिके च निपातिते ।
ये च सम्प्रेक्षका गोपा नन्दगोपपुरोगमाः । भयत्रोभितसर्व्वाङ्गाः सर्व्वे तत्रावतस्थिरे ।
हर्षजं वारि नेत्राभ्यां वर्षमाणा प्रवेपती । प्रस्नवोत्पीडिता कृष्णं देवकी समुदैक्षत ।
कृष्णदर्शनमुक्तेन बाष्पेणाकुलितेक्षणः । वसुदेवो जरां त्यक्त्वा स्नेहेन तरुणायते । ४०४५
वारमुख्याश्च ताः सर्व्वाः कृष्णस्य मुखपङ्कजं । पपुर्हि नेत्रभ्रमरैर्निमेषान्तरगामिभिः ।
कंसस्याथ मुखस्वेदो भ्रूभेदान्तरगोचरः । अत्रभद्रोपनिर्धौमः कृष्णानन्ददर्शनेरितः ।
केशहायामधूमेन रोषनिश्वासवाहिना । दीप्तमन्तर्गतं तस्य हृदयं मानमानिना ।
तस्य प्रस्फुरितौष्ठस्य स्विन्नालिकतलस्य वै । कंसवक्त्रस्य रोषेण रक्तसूर्य्यायते वपुः ।
क्रोधरक्तान्मुखात्तस्य प्रसृताः स्वेदविन्दवः । यथा रविकरस्पृष्टा तुषारस्यापविन्दवः । ४०५०
सोऽज्ञापयत संक्रुद्धः पुरुषान् व्यायतान् बहून् । गोपावेतौ समाजौघान्निष्क्राम्यतां वनेचरौ ।
नैवैतौ द्रष्टुमिच्छामि विहतौ पापदर्शनौ । गोपानामपि मे राज्ये न कश्चित् स्थातुमर्हति ।
नन्दगोपश्च दुर्म्मेधाः पापेष्वभिरतो मम । आयसैर्निगडाकारैर्लोहपाशैर्निगद्यतां ।
वसुदेवश्च दुर्वृत्तो नित्यमप्रचरो मम । अवृद्धार्हेण दण्डेन क्षिप्रमद्यैव शास्यतां ।
ये चेमे प्राकृता गोपा दामोदरपरायणाः । ह्रियन्तां गाव एतेषां यच्चास्ति वसु किञ्चन । ४०५५
एवमाज्ञापयानं तं कंसं परुषभाषिणं । ददर्शायतनयनः कृष्णः सत्यपराक्रमः ।
क्षिप्ते पितरि चुक्रोध नन्दगोपे च केशवः । ज्ञातीनाञ्च व्यथां दृष्ट्वा विसंज्ञामिव देवकीं ।
स सिंह इव वेगेन केशवो जातविक्रमः । आरुरुक्षुर्महाबाहुः कंसनाशार्थमच्युतः ।
रङ्गमध्यादुत्पपात कृष्णः कंसासनान्तिके । अवष्टब्धायुतानिलिनो यथा खस्थो घनाघनः ।
ददृशुस्तं हि तं सर्व्वे रङ्गमध्यादवप्लुतं । केवलं कंसपार्श्वस्थं ददृशुः पुरवासिनः । ४०६०

सोऽपि कंसस्तदा यत्तः परीतः कालधर्म्मणा। आकाशादिव गोविन्दं मेने तमागतं विभुम्।
स कृष्णेनायतं कृत्वा बाहुं परिघसन्निभं। मूर्द्धजेषु परामृष्टः कंसो वै रङ्गसंसदि।
मुकुटश्चापतत्तस्य काञ्चनो वज्रभूषितः। शिरसस्तत्र कृष्णेन परामृष्टस्य पाणिना।
स हस्तग्रस्तकेशस्य कंसो निर्यत्नतां गतः। तथैव च विसंमूढो विह्वलः समपद्यत।
निगृहीतस्य केशेषु गतासुरिव निश्वसन्। न शशाक मुखं द्रष्टुं कंसः कृष्णस्य वै तदा। ४७६५
विकुण्डलाभ्यां कर्णाभ्यां छिन्नहारेण वक्षसा। प्रलम्बाभ्याञ्च बाहुभ्यां गात्रैर्विस्रस्तभूषणैः।
भ्रंशितेनोत्तरीयेण सहसा चलिताननः। चेष्टमानः समाक्षिप्तः कंसः कृष्णेन तेजसा।
चकर्ष च महारङ्गे समाक्रम्य केशवः। केशेषु तं बलात्कृष्य कंसं क्रोशार्त्तताड़ितं।
कृष्यमाणः स कृष्णेन भोजराजो महाद्युतिः। समाजवाटे परिखां देहकृष्टाञ्चकार ह।
समाजवाटे विक्रीड्य विकृष्य च गतायुषं। कृष्णो विसर्ज्जयामास कंसदेहमदूरतः। ४७७०
धरण्यां मृदितः शिष्य कंसदेहः सुखोचितः। क्रमेण विपरीतेन पांशुभिः पक्षीकृतः।
तस्य तद्वदनं श्यामं सुप्राक्षं मुकुटं विना। न विभाति विपर्य्यस्तं विपत्राग्रं यथाऽम्बुजं।
असंग्रामे हतः कंसः स वाटीरपरिक्षतः। कण्ठयन्त्रान्निरस्तासुर्व्वीरमार्गान्निराकृतः।
तस्य देहे प्रकाशन्ते सहसा केशवार्पिताः। मांसच्छेदघनाः सर्व्वे नखाग्रा जीवितच्छिदः।
तं हत्वा पुण्डरीकाक्षः सहर्षाद्द्विगुणप्रभः। ववन्दे वसुदेवस्य पादौ निहतकण्टकः। ४७७५
मातुश्च शिरसा पादौ निपीड्य यदुनन्दनः। साऽसिञ्चत् प्रस्रवोत्पीडैः कृष्णमातानन्दनिःस्वनैः।
यादवांश्चैव तान् सर्व्वान् यथाश्रेष्ठं यथावयः। पप्रच्छ कुशलं कृष्णो दीप्यमानः स्वतेजसा।
बलदेवोऽपि धर्म्मात्मा कंसभ्रातरमूर्ज्जितं। बाहुभ्यामेव तरसा सुनामानमशातयत्।
तौ जितारी जितक्रोधौ चिरविप्रोषितौ व्रजे। स्वपितुर्भवनं वीरौ जग्मतुर्हृष्टमानसौ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसवधे सप्ताशीतोऽध्यायः ॥ ८७ ॥
॥ वैशम्पायन उवाच ॥ भर्त्तारं पतितं दृष्ट्वा क्षीणपुण्यमिव ग्रहं। कंसपत्न्यो हतं कंसं समन्तात् पर्य्यवारयन्। ४७८०
तं महीशयनं सुप्तं क्षितिनाथं गतायुषं। भार्य्याः स्म दृष्ट्वा क्रोशन्ति मृग्यो मृगपतिं यथा।
हा हताः स्म महाबाहो हताशा हतबान्धवाः। वीरपत्न्यो हते वीरे त्वयि वीरव्रतप्रिये।
इमामवस्थां पश्यन्त्यः पश्चिमां तव नैष्ठिकीं। कृपणं राजशार्दूल विलपामः सबान्धवाः।
छिन्नमूलाः स्म संवृत्ताः परित्यक्तास्त्वया विभो। त्वयि पञ्चत्वमापन्ने नाथेऽस्माकं महाबले।
को नः शोकपरीताङ्गी रतिसंसर्गलालसाः। लता इव विचेष्टन्तीः शयनीयानि नेष्यति। ४७८५
इदन्ते सदृशं सौम्य शयनिश्वाससमाहतं। दृश्यतेऽर्क्क मुखं कान्तं निस्तोयमिव पङ्कजं।
इमे ते श्रवणे शून्ये न शोभेते विकुण्डले। शिरोधरायां संसक्ते सततं कुण्डलप्रिय।
क्व ते स मुकुटो वीर सर्व्वरत्नविभूषितः। यत्नार्थं शिरसो लक्ष्मीं यो दधारार्कसप्रभः।
अनेन हि कलत्रेण त्वदन्तःपुरशोभिना। कथं हीनेन कर्त्तव्यं त्वयि लोकान्तरं गते।

ननु नाम स्त्रियः साध्व्यः प्रियभोगेष्ववञ्चिताः । पतीनामपरित्याज्यास्त्वमनु सन्त्यज्य गच्छसि । ४७९०
अहो कालो महावीर्य्यो येन पर्य्यायकर्म्मणा । कालतुल्यः सपत्नानां त्वं क्षिप्रमपनीयसे ।
वयं दुःखेष्वनुचिताः सुखेष्वेव त्वयैधिताः । वत्स्याम विधवा नाथ कथं कार्पण्यमाश्रिताः ।
स्त्रीणामार्य्यप्रसूतानां पतिरेकः परा गतिः । त्वं हि नः सा गतिश्छिन्ना कृतान्तेन बलीयसा ।
वैधव्येनाभिभूताः स्म शोकसन्तप्तमानसाः । अहो कृतान्तस्य वशं गन्तव्यं सर्व्वजन्तुभिः ।
शोचितव्ये ध्रुवे मग्नाः क गच्छामस्त्वया विना । सह त्वया गतः कालस्त्वदङ्के क्रीडितं गतं । ४७९५
क्षणेनाद्य विहीनाः स्म अनित्या हि नृणां गतिः । अहो वत विपन्नाः स्म विपन्ने त्वयि मानद ।
एकदुष्कृतकारिण्यः सर्व्वा वैधव्यलक्षणाः । त्वया स्वर्गप्रतिच्छन्दे लालिताः स्म रतिप्रियाः ।
त्वयि कामवशाः सर्व्वाः स नस्त्यज्य क गच्छसि । अस्माकं त्वमनाथानां नाथो ह्यसि सुरोपम ।
आर्त्तं विलपमानानां कुररीणामिव प्रभो । प्रतिवाक्यं जगन्नाथ दातुमर्हसि मानद ।
एवमार्त्तकलत्रस्य शान्यमानेषु बन्धुषु । गमनं ते महाराज दारुणं प्रतिभाति नः । ४८००
नूनं कान्ततराः कान्त परलोके वरस्त्रियः । यतस्त्वं प्रस्थितो वीर विहायेमं गृहे जनं ।
किन्न ते करुणा वीर भार्य्यास्वेतासु भूरिषु । आर्त्तनादं रुदन्तीषु यन्नेहाद्यावबुध्यसे ।
अहो निष्करुणा याचा नराणामौर्द्ध्वदेहिकी । यत् परित्यज्य दारान् स्वान्निरपेक्षा व्रजन्ति ह ।
अपतित्वं खलु श्रेयो न तु शूरः स्त्रियाः पतिः । स्वर्गस्त्रीणां प्रियाः शूरास्तेषामपि च ताः प्रियाः ।
अहो क्षिप्रमदृश्येन नयता त्वां रणप्रियं । प्रहृतं नः कृतान्तेन सर्व्वासामन्तरात्मसु । ४८०५
हत्वा जरासन्धबलं जित्वा यक्षांश्च संयुगे । कथं मानुषमात्रेण हतस्त्वं जगतीपते ।
इन्द्रेण सह गङ्गायां कृत्वा सायकविग्रहं । अमर्त्त्यैरजितो युद्धे मर्त्त्येनासि कथं हतः ।
त्वया सागरमक्षोभ्यं विक्षोभ्य शरवृष्टिभिः । रत्नसर्व्वस्वहरणं जित्वा पाशधरं कृतं ।
त्वया पौरजनस्यार्थे मन्दं वर्षति वासवे । सायकैर्जलदान् भित्त्वा बलाद्वर्षं प्रवर्त्तितं ।
प्रतापावनताः सर्व्वे तव तिष्ठन्ति पार्थिवाः । प्रेषयन्तो वरार्हाणि रत्नान्याच्छादनानि च । ४८१०
तवैवं देवकल्पस्य दृष्टवीर्य्यस्य शत्रुभिः । कथं प्राणान्तिकं घोरमीदृशं भयमागतं ।
प्राप्ताः स्मो विधवाशब्दं त्वयि नाथे निपातिते । अप्रमत्ताः प्रमत्तेन कृतान्तेन निराकृताः ।
यद्येवं नाथ गन्तव्यं यदि वा विस्मृता वयं । वाङ्मात्रेणापि यामीति वक्तव्ये कः परिश्रमः ।
प्रसीद नाथ भीताः स्म पादौ ते याम मूर्द्धभिः । अलं दूरप्रवासेन निवर्त्त मथुराधिप ।
अहो वीर कथं शेषे निषण्णस्तृणपांशुषु । शयानस्य हि ते भूमौ कस्मान्नो द्विजते वपुः । ४८१५
केन सुप्तप्रहारोऽयं दत्तोऽस्माकमतर्कितः । प्रहृतं केन सर्व्वासु नारीष्वेवं सुदारुणं ।
इदितानुशयो नार्य्यो जीवन्त्याः परिदेवनं । किं वयं सति गन्तव्ये सह भर्त्रा रुदामहे ।
एतस्मिन्नन्तरे दीना कंसमाता प्रवेपती । क मे वत्सः क मे पुत्त्र इति रोरुदती भृशं ।
साऽपश्यन्निहतं पुत्त्रं निष्प्रभं शशिनं यथा । हृदयेनावदीर्णेन शाम्यमाना पुनः पुनः ।

पुत्रं समभिवीक्षन्ती हा हताऽस्मीति वाशती । कृपणामार्त्तनादेन विललाप रुरोद च । ४८२०
सा तस्य वदनं दीनमुत्सङ्गे पुत्रगृद्धिनी । कृत्वा पुत्रेति कारुण्यं विललापार्त्तया गिरा ।
पुत्र शूरव्रते युक्त ज्ञातीनां नन्दिवर्द्धन । किमिदं त्वरितं वत्स प्रस्थानं कृतवानसि ।
प्रसुप्तश्चासि विवृतो किं पुत्र नियमं विना । वत्स नैवंविधा भूमौ शेरते कृतलक्षणाः ।
रावणेन पुरा गीतः श्लोकोऽयं साधुसम्मतः । बलज्येष्ठेन लोकस्य राजमानां समागमे ।
एवमूर्ज्जितवीर्य्यस्य ममामरविघातिनः । बान्धवेभ्यो भयं घोरं दुर्निवार्य्यं भविष्यति । ४८२५
तथैव ज्ञातिलुब्धस्य मम पुत्रस्य धीमतः । ज्ञातिभ्यो भयमुत्पन्नं शरीरान्तकरं महत् ।
सा पतिं नृपतिं वृद्धमुग्रसेनं विचेतसं । उवाच रुदती वाक्यं विवत्सा हरिणी यथा ।
एह्येहि राजन् शुद्धात्मन् पश्य पुत्रं जनेश्वरं । शयानं वीरशयने वज्राहतमिवाचलं ।
अस्य कुर्म्मो महाराज निर्याणमदूर्ध्वीं क्रियां । प्रेतत्वमुपपन्नस्य गतस्य यमसादनं ।
वीरभोज्यानि राज्यानि वयश्चापि पराजिताः । गच्छ विज्ञापयैनं कृष्णः कंससत्कारकारणात् । ४८३०
मरणान्तानि वैराणि शान्ते शान्तिर्भविष्यति । प्रेतकार्य्याणि कार्य्याणि सुतः किमपराध्यति ।
एवमुक्त्वा पतिं भोजं केशानाकृष्य दुःखिता । पुत्रस्य मुखमीक्षन्ती विललापैव सा भृशं ।
इमास्ते किं करिष्यन्ति भार्य्या राजन् सुखोचिताः । त्वां पतिं नृपतिं प्राप्य या विपन्नमनोरथाः ।
इमं ते पितरं वृद्धं कृष्णस्य वशवर्त्तिनं । कथं द्रक्ष्यामि शुष्यन्तं कामारमलिनं यथा ।
अहं ते जननी पुत्र किमर्थं नाभिभाषसे । प्रस्थितो दीर्घमध्वानं परित्यज्य प्रियं जनं । ४८३५
अहो वीराल्पभाग्यायाः कृतान्तेनाभिवर्त्तिना । आक्षिप्य मम मन्दाया नीयसे नयकोविदः ।
दानमानसहस्रोतानि हृतान्येतानि ते गुणैः । रुदन्ति तव भृत्यानां कुलानि कुलयूथप ।
उत्तिष्ठ नृपशार्दूल दीर्घबाहो महाबल । चाहि दीनं जनं सर्व्वं पुरमन्तःपुरं तथा ।
एवं विलपतीनान्तु कंसस्त्रीणां सुविस्तरं । जगामास्तं दिनकरः सन्ध्यारागेण रञ्जितः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंसस्त्रीविलापे अष्टाशीतोऽध्यायः ॥ ८८ ॥
॥ वैशम्पायन उवाच ॥ उग्रसेनस्तु कृष्णस्य समीपं दुःखितो ययौ । पुत्रशोकाभिसन्तप्तो विवर्णो इव सज्जन् ।
स ददर्श ग्टहे कृष्णं यादवैः परिवारितं । पश्चात्तापाद्ध्यायन्तं कंसस्य निधनाविलं ।
कंसनारीप्रलापांश्च श्रुत्वा सकरुणान् बहून् । गर्हमाणं तथात्मानं तस्मिन् या दवसंसदि ।
अहो मयाऽतिबालेन सवरोषानुवर्त्तिना । वैधव्यं स्त्रीसहस्राणां कंसस्यास्य हते कृतं ।
कारुण्यं खलु नारीषु प्राकृतस्यापि जायते । एवमासां रुदन्तीषु मया भर्त्तरि पातिते ।
परिदेवितमात्रेण शोकः खलु विधीयते । कृतान्तस्यानभिज्ञानां स्त्रीणां कारुण्यसम्भवः । ४८४५
कंसस्य निधनः श्रेयान् प्रागेवाभिमतो मम । सतामुद्वेजनीयस्य पापेष्वभिरतस्य च ।
लोके पतितवृत्तस्य परुषस्याप्यभिधमः । श्लिष्टं मरणं श्रेयो न विद्विष्टस्य जीवितं ।
कंसः पापरुचिश्चैव साधूनामप्यसम्मतः । धिक्स्वपतितस्यैव जीविते तस्य का दया ।

स्वर्गे तपोभृतां वासः फलं पुण्यस्य कर्मणः । इहापि यशसा युक्तास्तपसैवेह धार्यते ।
यदि स्युर्निर्भृता लोकाः स्युः स्वकर्मपरायणाः । नरा धर्मप्रवृत्ताश्च न राज्ञामनयः स्मृतेत् ।
निग्रहे दुष्टवृत्तीनां कृतान्तः कुरुते वधं । दृष्टधर्मेषु लोकेषु कर्तव्यं पारलौकिकं ।
अतीव देवा रक्षन्ति नरं धर्मपरायणं । कर्त्तारः सुलभा लोके दुष्कृतस्य हि कर्मणः ।
हतः सोऽयं मया कंसः साध्वितदवगम्यतां । मूलच्छेदः कृतस्तस्य विपरीतस्य कर्मणः ।
तदेष सान्त्व्यतां सर्व्वः शोकार्त्तः प्रमदाजनः । पौराश्च पुर्य्यां श्रेण्यश्च सान्त्व्यतां सर्व्व एव हि ।
एवं ब्रुवति गोविन्दे विवेशावनताननः । उग्रसेनो यदून् दृष्ट्वा पुत्रकिल्बिषलज्जितः ।
स कृष्णं पुण्डरीकाक्षमुवाच यदुसंसदि । बाष्पसन्दिग्धया वाचा दीनया सज्जमानया ।
पुत्रो नियातितः क्रोधो नीतो याम्यां दिशं रिपुः । स्वधर्माच्चिगता कीर्त्तिर्नाम विश्रावितं भुवि ।
स्थापितं सत्त्व माहात्म्यं शङ्किता रिपवः कृताः । स्थापितो यादवो वंशो गर्व्विताः सुहृदः कृताः ।
सामन्तेषु नरेन्द्रेषु प्रतापस्ते प्रकाशितः । मित्राणि त्वां भजिष्यन्ति संश्रयिष्यन्ति पार्थिवाः ।
प्रकृतयोऽनुयास्यन्ति स्तोष्यन्ति च द्विजातयः । सन्धिविग्रहमुख्यास्त्वां प्रणमिष्यन्ति मन्त्रिणः ।
हस्त्यश्वरथसम्पूर्णं पदातिगणसङ्कुलं । प्रतिगृह्णाण कृष्णेदं कंसस्य बलमव्ययं ।
धनं धान्यञ्च यत्किञ्चिद्रत्नान्याच्छादनानि च । मत्तो गृह्णन्तु नियुक्ता वै त्वदीयाः कृष्ण पूरुषाः ।
स्त्रियो हिरण्यं यानानि यच्चान्यदस्ति किञ्चन । एवं सुविहिते योगे पर्य्याप्ते कृष्ण विग्रहे ।
प्रतिष्ठितायां मेदिन्यां यदूनां मधुसूदन । त्वं गतिश्चागतिश्चैव यदूनां यदुनन्दन ।
शृणुष्व ब्रुवतां वीर कृपणानामिदं वचः । अस्य त्वत्कोपदग्धस्य कंसस्याशुभकर्मणः ।
तव प्रसादाद्गोविन्द प्रेतकार्य्यं क्रियेत ह । तस्य कृत्वा नरेन्द्रस्य त्रिपक्षस्यौर्द्ध्वदेहिकं ।
सस्नुषोऽहं सभार्य्यश्च चरिष्यामि मृगैः सह । प्रेतसत्कारमात्रेण कृते बान्धवकर्मणि ।
आनृण्यं लौकिकं कृष्ण गताः किल भवन्ति ह । अस्याग्निं पश्चिमं कृत्वा चरिष्यामि विधानतः ।
तोयप्रदानमात्रेण कंसस्यानृण्यमाप्नुयां । एतन्मे कृष्ण विज्ञाप्यं स्नेहोऽत्र मयि युज्यतां ।
प्राप्नोतु सुगतिं तव कृपणः पश्चिमां क्रियां । एतच्छ्रुत्वा वचस्तस्य कृष्णः परमविस्मितः ।
प्रत्युवाचोग्रसेनं वै सान्त्वपूर्व्वमिदं वचः । कालयुक्तमिदं तात त्वयैतत् प्रतिभाषितं ।
सदृशं राजशार्दूल वृत्तस्य च कुलस्य च । यत्त्वमेवंविधं ब्रूषे गतेऽर्थे दुरतिक्रमे ।
प्राप्स्यते नृपसत्कारं कंसः प्रेतगतोऽपि सन् । कुले महति ते जन्म वेद्यं विदितवानसि ।
कथं न ज्ञायते तात नियतिर्दुरतिक्रमा । स्थावराणाञ्च भूतानां जङ्गमानाञ्च पार्थिव ।
पूर्व्वजन्मकृतं कर्म्म कालेन परिपच्यते । श्रुतवन्तोऽर्थवन्तश्च दातारः प्रियदर्शनाः ।
सत्यप्रज्ञा नयसम्पन्ना दीनानुग्रहकारिणः । लोकपालसमास्तात महेन्द्रसमविक्रमाः ।
क्षितिपालाः कृतान्तेन नीयन्ते नृपसत्तम । धार्म्मिकाः सर्व्वभावज्ञाः प्रजापालनतत्पराः ।
स्वधर्म्मरता दान्ताः कालेन निधनं गताः । स्वयमेव कृतं कर्म्म शुभं वा यदि वाऽशुभं ।

प्राप्तकालस्य तत् सर्व्वं दृश्यते खलु देहिनः । एषा चान्तर्हिता माया दुर्व्विज्ञेया सुरैरपि ।
यथाऽयं मुह्यते लोको यच्च कर्म्मैव कारणं । कालेनाभिहतः कंसः पूर्व्वकर्म्मप्रचोदितः । ४८८०
न चाहं कारणं तत्र कालः कर्म्म च कारणं । सुर्य्यलोकमयं तात कृत्स्नं स्थावरजङ्गमं ।
कालेन निधनं गत्वा कालेनैव च जायते । कालस्तु सर्व्वभूतानां नियच्छप्रचोदकः ।
तस्मात् सर्व्वाणि भूतानि कालस्य वशगानि वै । सर्व्वान्तरेणैव रजसस्य सुनोस्तव नराधिप ।
नाहं वै कारणं तत्र कालस्तत्र तु कारणं । अथवाऽहं भविष्यामि कारणं नात्र संशयः ।
परायणपरः कालः किं करिष्यत्यकारणः । कालस्तु बलवान् राजन् दुर्व्विज्ञेया हि सा गतिः । ४८८५
परावरविशेषज्ञा यां यान्ति समदर्शिनः । गतिं कालस्य ये विद्युः मोक्षनयस्य पारगाः ।
ब्रवीमि यदहं तात तदनुष्ठीयतां वचः । न हि राज्येन मे कार्य्यं नाप्यहं नृप काङ्क्षितः ।
न चापि राज्यलुब्धेन मया कंसो निपातितः । किन्तु लोकहितार्थाय कीर्त्त्यर्थञ्च सुतस्तव ।
व्यङ्गभूतः कुलस्यास्य सानुगो विनिपातितः । अहं स एव गोमध्ये गोपैः सह वनेचरः ।
प्रीतिमान् विचरिष्यामि कामचारी यथा गजः । एतावच्छतशोऽप्येवं सत्येनैतद्ब्रवीमि ते । ४८९०
न मे कार्य्यं नृपत्वेन विज्ञाप्यं क्रियतामिदं । भवानाजाऽस्तु मान्यो मे यदूनामग्रणीः प्रभुः ।
विजयायाभिषिच्यस्व स्वराज्ये राजसत्तम । यदि ते मत्प्रियं कार्य्यं यदि वा नास्ति ते व्यथा ।
मया निसृष्टं राज्यं स्वं चिराय प्रतिगृह्यतां ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं नोत्तरं प्रत्यभाषत । व्रीडिताधोमुखं तस्तु राजानं यदुनन्दि ।
अभिषेकेण गोविन्दो योजयामास धर्म्मवित् । स बद्धमुकुटः श्रीमानुग्रसेनो महीपतिः । ४८९५
चकार सह कृष्णेन कंसस्य निधनक्रियां । तं सर्व्वे यादवा मुख्या राजानं कृष्णशासनात् ।
अनुजग्मुः पुरीमार्गे देवा इव शतक्रतुं । रजन्याञ्च निवृत्तायां ततः सूर्य्ये विराजति ।
पश्चिमं कंससत्कारं चक्रुस्ते यदुपुङ्गवाः । शिविकायामथारोप्य कंसदेहं यथाक्रमं ।
नैष्ठिकेन विधानेन चक्रुस्ते तस्य सत्क्रियां । स नीतो यमुनातीरमुत्तरं नृपतेः सुतः ।
सत्कृतश्च यथान्यायं नैधनेन चिताग्निना । तथैव भ्रातरञ्चास्य सुनामानं महाभुजं । ४९००
सत्कारं लम्भयामासुः सह कृष्णेन यादवाः । ताभ्यान्ते सलिलञ्चक्रुर्दुष्ट्यन्धकपुरोगमाः ।
अक्षयञ्चापि प्रेतेभ्यो भाषमाणाः पुनः पुनः । तयोस्ते सलिलं दत्त्वा यादवा दीनमानसाः ।
पुरस्कृत्योग्रसेनं वै विविशुर्मथुरां पुरीं ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कंससत्कारे उग्रसेनाभिषेके ऊननवतितमोऽध्यायः ॥ ८९ ॥
॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान्वीरो विशेषेण संवृतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् ।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया ज्वलन् । चचार मथुरां वीरः रत्नाकरभूषणां । ४९०५
कस्यचित्त्वथ कालस्य सहितौ रामकेशवौ । गुरुं सान्दीपनिं काश्यमवन्तिपुरवासिनं ।
धनुर्वेदचिकीर्षार्थमुभौ तावभिजग्मतुः । निवेद्य गोत्रं स्वाध्यायमाचारेणाभ्यलङ्कृतौ ।

शुश्रूषू निरहङ्कारावुभौ रामजनार्द्दनौ । प्रतिजग्राह तौ काश्यो विद्याः प्राहाच केवलाः ।
तौ च श्रुतिधरौ वीरौ यथावत् प्रत्यपद्यतां । अहोरात्रैश्चतुःषष्ट्या साङ्गं वेदमधीयतां ।
चतुष्पादं धनुर्व्वेदं शस्त्रग्रामं ससंग्रहं । अचिरेणैव कालेन गुरुस्तावभ्यशिक्षयत् । ४९१०
अतीवामानुषीं मेधां चिन्तयित्वा तयोर्गुरुः । मेने तावागतौ वीरौ देवौ चन्द्रदिवाकरौ ।
ददर्श च महात्मानावुभौ तावपि पर्व्वसु । पूजयन्तौ महादेवं साक्षाद्विष्णुमवस्थितं ।
गुरुं सान्दीपनिं कृष्णः कृतकृत्योऽभ्यभाषत । गुर्व्वर्थं किं ददानीति रामेण सह भारत ।
तयोः प्रभावं स ज्ञात्वा गुरुः प्रोवाच हृष्टवत् । पुत्त्रमिच्छाम्यहं दत्तं योऽमृतो लवणाम्भसि ।
पुत्त्र एको हि मे जातः स चापि तिमिना हृतः । प्रभासे तीर्थयात्रायां तमेव पुनरानय । ४९१५
तथेत्येवाब्रवीत् कृष्णो रामस्यानुमते स्थितः । गत्वा समुद्रं तेजस्वी विवेशान्तर्ज्जलं हरिः ।
समुद्रः प्राञ्जलिर्भूत्वा दर्शयामास तं तदा । तमाह कृष्णः क्वासौ भो पुत्त्रः सान्दीपनेरिति ।
समुद्रः प्रत्युवाचेदं दैत्यः पञ्चजनो महान् । तिमिरूपेण तं बालं ग्रस्तवानिति भारत ।
स पञ्चजनमासाद्य जघान पुरुषोत्तमः । न चाससाद तं बालं गुरुपुत्त्रं तदाऽच्युतः ।
स तु पञ्चजनं हत्वा शङ्खं लेभे जनार्द्दनः । यः स देवमनुष्येषु पाञ्चजन्य इति श्रुतः । ४९२०
ततो वैवस्वतं देवं गतः स पुरुषोत्तमः । ततो यमोऽप्युपागम्य ववन्दे च गदाधरं ।
किमागमनकृत्यन्ते किङ्करोमीति चाब्रवीत् । तमुवाचाथ गोविन्दो गुरुपुत्त्रः प्रदीयतां ।
श्रुत्वा न तद्वचो युद्धमकरोत् सुमहत्तरा । ततो वैवस्वतं देवं निर्ज्जित्य पुरुषोत्तमः ।
आससाद च तं बालं गुरुपुत्त्रं तदाऽच्युतः । आनिनाय गुरोः पुत्त्रं चिरनष्टं यमक्षयात् ।
ततः सान्दीपनेः पुत्त्रः प्रसादादमितौजसः । दीर्घकालगतः प्रेतः पुनरासीच्छरीरवान् । ४९२५
तदशक्यमचिन्त्यञ्च दृष्ट्वा सुमहदद्भुतं । सर्व्वेषामेव भूतानां विस्मयः समजायत ।
स गुरोः पुत्त्रमादाय पाञ्चजन्यञ्च माधवः । रत्नानि च महार्हाणि पुनरायाज्जगत्प्रभुः ।
रावणैस्तत्र रत्नानि महार्हाणि बहूनि च । आनाय्य वेदयामास गुरवे वासवानुजः ।
गदापरिघयुद्धेषु सर्व्वास्त्रेषु च तावुभौ । अचिरान्मुख्यतां प्राप्तौ सर्व्वलोके धनुष्मतां ।
ततः सान्दीपनेः पुत्त्रं तद्रूपवयसं तथा । प्रादात् कृष्णः प्रतीतात्मा सह रत्नैरुदारधीः । ४९३०
चिरनष्टेन पुत्त्रेण काश्यः सान्दीपनिस्तदा । समेत्य मुमुदे राजन् पूजयन्नामकेशवौ ।
कृतास्त्रौ तावथो वीरौ गुरुमामन्त्र्य सुव्रतौ । आयातौ मथुरां भूयो वसुदेवसुतावुभौ ।
ततः प्रत्युद्ययुः सर्व्वे यादवा यदुनन्दनौ । सबला हृष्टमनसः उग्रसेनपुरोगमाः ।
श्रेण्यः प्रकृतयश्चैव मन्त्रिणः सपुरोहिताः । सबालवृद्धयुवतिः पुरी समभिवर्त्तत ।
नन्दितूर्य्याण्यवाद्यन्त तुष्टुवुश्च जनार्द्दनं । रथ्याः पताकामालिन्यो भ्राजन्ते स्म समन्ततः । ४९३५
प्रहृष्टमुदितं सर्व्वमन्तःपुरमशोभत । गोविन्दागमनेऽत्यर्थं यथैवेन्द्रमहे तथा ।
मुदिताश्चाप्यगायन्त राजमार्गेषु गायनाः । स्तवाशीःप्रथिता गाथा यादवानां प्रियङ्कराः ।

गोविन्दरामौ सम्प्राप्तौ भ्रातरौ लोकविश्रुतौ । स्वपुरे निर्भयाः सर्व्वे क्रीडध्वं सह बान्धवैः ।
न तत्र कश्चिद्दीनो वा मलिनो वा विचेतनः । मथुरायामभूद्राजन् गोविन्दे समुपस्थिते ।
वयांसि साधुवाक्यानि प्रहृष्टा गोहयद्विपाः । नरनारीगणाः सर्व्वे भेजिरे मनसः सुखं । ४९४०
शिवाश्च वाताः प्रववुर्विरजस्का दिशो दश । दैवतानि च हृष्टानि सर्व्वेष्वायतनेषु च ।
यानि लिङ्गानि लोकस्य बभुः कृतयुगे पुरा । तानि सर्व्वाण्यदृश्यन्त पुरीं प्राप्ते जनार्द्दने ।
ततः काले शिवे पुण्ये स्यन्दनेनारिमर्द्दनः । हरियुक्तेन गोविन्दो विवेश मथुरां पुरीं ।
विशन्तं मथुरां रम्यां तमुपेन्द्रमरिन्दमं । अनुजग्मुर्यदुगणाः शक्रं देवगणा इव ।
वसुदेवस्य भवनं ततस्तौ यदुनन्दनौ । प्रविष्टौ हृष्टवदनौ चन्द्रादित्याविवाचलं । ४९४५
परेण तेजसोपेतौ रवीन्द्राविव रूपिणौ । तावायुधानि विन्यस्य गृहे ह्य स्वैरचारिणौ ।
मुमुदाते यदुवरौ वसुदेवसुतावुभौ । उद्यानेषु विचित्रेषु फलपुष्पावनामिषु ।
चेरतुः सुमहात्मानौ यादवैः परिवारितौ । रैवतस्य समीपे तु सरित्सु विमलासु च ।
पद्मपत्रसमृद्धासु कारण्डवयुतासु च । एवं तावेकनिर्म्माणौ मथुरायां शुभाननौ ।
उग्रसेनानुगौ भूत्वा किञ्चित् कालमथोषतुः । ४९५०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि कृष्णप्रत्यागमने नवतितमोऽध्यायः ॥ ९० ॥
॥ वैशम्पायन उवाच ॥ स कृष्णस्तत्र बलवान् रौहिणेयेन सङ्गतः । मथुरां यादवाकीर्णां पुरीं तां सुखमावसत् ।
प्राप्तयौवनदेहस्तु युक्तो राजश्रिया विभुः । चचार मथुरां वीरः सवनाकरभूषणां ।
कस्यचित्त्वथ कालस्य राजा राजगृहेश्वरः । शुश्राव निहतं कंसं दुहितृभ्यां महीपतिः ।
ततो नातिचिरात् कालाज्जरासन्धः प्रतापवान् । आजगाम षडङ्गेन बलेन महता वृतः ।
जिघांसुर्वै यदून् क्रुद्धः कंसस्यापचितिं स्मरन् । अस्तिः प्राप्तिश्च नाम्नास्तां मागधस्य सुते नृप । ४९५५
जरासन्धस्य कन्ये द्वे पीनश्रोणिपयोधरे । उभे कंसस्य ते भार्य्ये प्रादाद्बार्हद्रथो नृपः ।
स ताभ्यां मुमुदे राजा बद्धा पितरमाहुकं । समाश्रित्य जरासन्धमनादृत्य च यादवान् ।
शूरसेनेश्वरो राजा यथा ते बहुशः श्रुतः । ज्ञातिकार्य्यार्थमिच्छ्यर्थमुग्रसेनहिते रतः ।
वसुदेवोऽभवन्नित्यं कंसो न सम्मवे च तं । रामकृष्णौ व्यपाश्रित्य हते कंसे दुरात्मनि ।
उग्रसेनोऽभवद्राजा भोजवृष्ण्यन्धकैर्वृतः । दुहितृभ्यां जरासन्धः प्रियाभ्यां बलवान्नृपः । ४९६०
चोदितो वीरपत्नीभ्यामुपायान्मथुरां ततः । कृत्वा सर्व्वमनुद्योगं क्रोधादग्निसमो ज्वलन् ।
प्रतापावनता ये च जरासन्धस्य पार्थिवाः । मित्राणि ज्ञातयश्चैव संयुक्ताः सुहृदस्तथा ।
तमेवानुययुः सर्व्वे सैन्यैः समुदितैर्वृताः । महेष्वासा महावीर्य्या जरासन्धप्रियैषिणः ।
कारूषो दन्तवक्त्रश्च चेदिराजश्च वीर्य्यवान् । कलिङ्गाधिपतिश्चैव पौण्ड्रश्च बलिनाम्बरः ।
आकृतिः कैशिकश्चैव भीष्मकश्च नराधिपः । पुत्रश्च भीष्मकस्यापि रुक्मी मुख्यो धनुर्भृतां । ४९६५
वासुदेवार्ज्जुनाभ्यां यः स्पर्द्धते स महाहवे । वेणुदारिः श्रुतर्व्वा च क्राथश्चैवांशुमानपि ।

अङ्गराजश्च बलवान् वङ्गानामधिपस्तथा । कौशल्यः काशिराजश्च दशार्णाधिपतिस्तथा ।
सुह्मेश्वरश्च विक्रान्तो विदेहाधिपतिस्तथा । मद्रराजश्च बलवांस्त्रिगर्त्तानामधीश्वरः ।
शाल्वराजश्च विक्रान्तो दरदश्च महाबलः । यवनाधिपतिश्चैव भगदत्तश्च वीर्य्यवान् ।
सौवीरराजः शैब्यश्च पाण्ड्यश्च बलिनाम्बरः । गन्धारराजः सुबलो नग्नजिच्च महाबलः । ४९७०
काश्मीरराजो गोनर्द्दो दरदाधिपतिर्नृपः । दुर्य्योधनादयश्चैव धार्त्तराष्ट्रा महाबलाः ।
एते चान्ये च राजानो बलवन्तो महारथाः । तमन्वयुर्ज्जरासन्धं विदिषन्तो जनार्द्दनं ।
ते शूरसेनानाविश्य प्रभूतयवसेन्धनान् । ऊषुः संरुध्य मथुरां पुरस्कृत्य बलं तदा ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि मथुरोपरोधे जरासन्धोद्योगे एकनवतोऽध्यायः ॥ ९१ ॥
॥ वैशम्पायन उवाच ॥ मथुरोपवने मत्वा निविष्टांस्तान्नराधिपान् । अपश्यन् यादवाः सर्व्वे पुरस्कृत्य जनार्द्दनं ।
ततो हृष्टमनाः कृष्णो रामं वचनमब्रवीत् । त्वरते खलु कार्य्यार्थी देवतानां न संशयः । ४९७५
यथाऽयं सन्निकृष्टो हि जरासन्धो नराधिपः । लक्ष्यन्ते हि ध्वजाग्राणि रथानां वातरंहसां ।
एतानि शशिकल्पानि नृपाणां विजिगीषतां । छत्राण्यार्य्य विराजन्ते प्रोच्छ्रितानि सितानि च ।
अहो नृपरथोदग्रा विमला छत्रपङ्क्तयः । अभिवर्त्तन्ति नः शुभ्रा यथा खे हंसपङ्क्तयः ।
काले खलु नृपः प्राप्तो जरासन्धो महीपतिः । आवयोर्युद्धनिकषः प्रथमः समरातिथिः ।
आर्य्य तिष्ठाव सहितावनुप्राप्ते महीपतौ । युद्धारम्भः प्रयोक्तव्यो बलन्तावत् विमृश्यतां । ४९८०
एवमुक्ता ततः कृष्णः सुस्थः संग्रामलालसः । जरासन्धमभिप्रेप्सुश्चकार बलदर्शनं ।
वीक्षमाणस्तु तान् सर्व्वान्नृपान् यदुवरोऽव्ययः । आत्मनैवात्मना वाक्यमुवाच हरि मन्त्रवित् ।
इमे ते पृथिवीपालाः पार्थिवे वर्त्मनि स्थिताः । ये विनाशं गमिष्यन्ति शास्त्रदृष्टेन कर्म्मणा ।
प्रोच्छितान् खल्विमानन्ये मृत्युना नृपपुङ्गवान् । स्वर्गगामीनि चाप्येषां वपूंषि प्रचकाशिरे ।
स्थाने भारपरिश्रान्ता वसुधेयं दिवङ्गता । एषां नृपतिमुख्यानां बलौघैरभिपीडिता । ४९८५
भूमिर्निरन्तरा चेयं बलराशाभिसन्तता । स्वल्पेन खलु कालेन विविक्तं पृथिवीतलं ।
भविष्यति नरेन्द्रौघैः शतशो विनिपातितैः ।
॥ वैशम्पायन उवाच ॥ जरासन्धस्ततः क्रुद्धः प्रभुः सर्व्वमहीक्षितां । नराधिपसहस्रौघैरनुयातो महाद्युतिः ।
व्यायतोदग्रतुरगैः सादिभिः सुसमाहितैः । रथैः संग्रामिकैर्युक्तैरसङ्गगतिभिः क्वचित् ।
हेमकक्षैर्महाघण्टैर्व्वारणैर्व्वारिदोपमैः । महामात्रोत्तमारूढैः कल्पितैरणकोविदैः । ४९९०
समारूढैः सादिभिर्युक्तैः प्रेङ्खमानैः प्रवल्गितैः । वाजिभिर्व्वेगसङ्काशैः प्लवद्भिरिव पर्व्वतैः ।
खड्गचर्म्मधरोदग्रैः पत्तिभिर्व्वल्गिताम्बरैः । सहस्रसङ्ख्यासंयुक्तैरुत्पतद्भिरिवोरगैः ।
एवं चतुर्व्विधैः सैन्यैः कम्पमानैरिवाम्बुदैः । नृपोऽभियातो बलवान् जरासन्धो धृतव्रतः ।
स रथौघनिर्घोषैर्गजैश्च मदशिञ्जितैः । हेषमाणैश्च तुरगैः क्ष्वेडमानैश्च पत्तिभिः ।
नादयानो दिशः सर्व्वास्तस्थौ पुर्य्याः वनानि च । स राजा सागराकारः ससैन्यः प्रत्यदृश्यत । ४९९५

तद्बलं पृथिवीशानां दृप्तयोधजनाकुलं । चोदितास्फोटितरवैर्घोषवेन्यमिवाबभौ ।
रथैः पवनसम्पातैर्गजैश्च जलदोपमैः । तुरगैश्च जवोपेतैः पत्तिभिः खगमोपमैः ।
विमिश्रं सर्व्वतो भाति मत्तद्विपरथाकुलं । घर्म्मान्ते सागरगतं यथाभ्रपटलं तथा ।
सबलास्ते महीपाला जरासन्धपुरोगमाः । परिवार्य्य पुरीं सर्व्वे निवेशायोपचक्रमुः ।
सभौ तस्य निविष्टस्य बलस्यौः शिबिरस्य वै । शुक्लपर्व्यन्तपूर्णस्य यथा रूपं महोदधेः । ५०००
वीतरागे ततः काले समुत्तस्थुर्महोक्षितः । आरोहणार्थं पुर्य्यास्ते समीयुर्युद्धलालसाः ।
समवायीकृताः सर्व्वे यमुनामनु ते नृपाः । निविष्टा मन्त्रयामासुर्युद्धकाले कुतूहलात् ।
तेषां स तुमुलः शब्दः शुश्रुवे पृथिवीक्षितां । युगान्ते भिद्यमानानां सागराणामिव स्वनः ।
तेषां सकञ्चुकोष्णीषाः स्थविरा वेत्रपाणयः । चेरुर्मा शब्द इत्येवं ब्रुवन्तो राजशासनात् ।
तस्य रूपं बलस्यासीन्निःशब्दस्तिमितस्य वै । लीनमीनभुजङ्गस्य निःशब्दस्य यथोदधेः । ५००५
निःशब्दस्तिमिते तस्मिन् योगादिव महार्णवे । जरासन्धो महद्वाक्यं बृहस्पतिरिवाददे ।
शीघ्रं समभिवर्त्तन्तां बलानि पृथिवीक्षितां । सर्व्वतो नगरी चेयं जनौघैः परिवार्य्यतां ।
अश्मयन्त्राणि युज्यन्तां क्षेपणीयाश्च मुद्गराः । कार्य्या भूमिसमा सर्व्वा जनौघैश्च परिप्लुता ।
ऊर्द्धञ्चापि निवाप्यन्तां प्रासा वै तोमरास्तथा । दार्य्यताञ्चैव टङ्कौघैः खनित्रैश्च पुरी कृतं ।
नृपाश्च युद्धमार्गज्ञा विन्यस्यन्तामकृत्रतः । अद्यप्रभृति सैन्यैर्मे पुरीरोधः प्रवर्त्यतां । ५०१०
यावदेतौ रणे गोपौ वसुदेवसुतावुभौ । सङ्कर्षणश्च कृष्णश्च घातयामि शितैः शरैः ।
आकाशमपि टङ्कौघैर्निःसम्पातं यथा भवेत् । मयाऽनुशिष्टास्तिष्ठन्तु पुरीभूमिषु भूमिपाः ।
तेषु तेष्ववकाशेषु शीघ्रमारुध्यतां पुरी । मद्रः कलिङ्गाधिपतिश्चेकितानः सबाह्लिकः ।
कश्मीरराजो गोनर्द्दः करूषाधिपतिस्तथा । द्रुमः किम्पुरुषश्चैव पर्व्वतीयो ह्यनामयः ।
नगर्य्याः पश्चिमं द्वारं शीघ्रमारोधयन्त्विति । पौरवो वेणुदारिश्च वैदर्भः सोमकस्तथा । ५०१५
रुक्मी च भोजाधिपतिः सूर्य्याक्षश्च समालवः । विन्दानुविन्दावावन्त्यौ दन्तवक्रश्च वीर्य्यवान् ।
छागलिः पुरुमित्रश्च विराटश्च महीपतिः । कौशाम्ब्यो मालवश्चैव शतधन्वा विदूरथः ।
भूरिश्रवास्त्रिगर्त्तश्च बाणः पञ्चनदस्तथा । उत्तरं नगरद्वारमेते दुर्गमहा नृपाः ।
आरुह्य चाभिमर्द्दन्तां वज्रप्रतिमगौरवाः । उलूकः कैतवेयश्च वीरश्चांशुमतः सुतः ।
एकलव्यो बृहत्क्षत्रः क्षत्रधर्म्मा जयद्रथः । उत्तमौजाश्च शल्यश्च कौरवाः कैकयास्तथा । ५०२०
वैदिशो वामदेवश्च साकेतश्च शिनीपतिः । पूर्व्वं नगरनिर्धूहमेतेष्वायन्तमस्तु नः ।
दारयन्तोऽभिधावन्तु वाता इव बलाहकान् । अहञ्च दरदश्चैव चेदिराजश्च वीर्य्यवान् ।
दक्षिणं नगरद्वारं पालयामः सुदंशिताः । एवमेषा पुरी क्षिप्रं समन्तादेष्टिता बलैः ।
वज्रावपातविषमं प्राप्नोतु तुमुलं भयं । गदिनो ये गदाभिस्ते परिघैः परिघायुधाः ।
अपरे विविधैः शस्त्रैर्दारयन्तु पुरीमिमां । अद्यैव नगरी ह्येषा विषमोच्चयसङ्कटा । ५०२५

हितवश्च मया तस्य दर्शिता भो: समासत:। न चावगतवान्देव: सत्यमेतद्ब्रवीमि ते।
उपेन्द्रोऽहं महेन्द्रेण लालनीय: सदति मां। उवाच पुण्डरीकाक्षस्तदनन्तरमेव च। ७२९०
पुन: पुनर्म्मया चास्य हितवो देव दर्शिता:। नैव बुद्धिश्च व्यावृत्ता वृत्रनाशन तस्य वै।
अपि चाप्युक्तवान्देवो वाक्यान्त मधुसूदन:। प्रहस्य पुरुषश्रेष्ठ: सरोषमिव वासव।
न देवगन्धर्व्वगणा न राक्षसा न चासुरा नैव च पन्नगोत्तमा:। मम प्रतिज्ञामपहन्तुमुद्यता मुने समर्था: खलु भद्रमस्तु ते।
स पारिजातं यदि न प्रदास्यति प्रयाच्यमानो भवताऽमरेश्वर:। तत: शचीव्यामृदितानुलेपने गदां विमोक्ष्यामि पुरन्दरोरसि।
उपेन्द्रस्य महेन्द्रार्थं भ्रातुस्ते निश्चय: पर:। यदत्र मन्यसे न्याय्यं संप्रधार्य्य कुरुष्व तत्। ७२९५
तत्त्वं हितञ्च देवेश शृण्वतो वदतो मम। नयनं पारिजातस्य द्वारकां मम रोचते।
नारदेनैवमुक्तस्तु प्रत्युवाचबलदेहहा। रोषाविष्टो देवराज: सहस्राक्षोऽब्रवीदिदं।
अनागसि मयि ज्येष्ठे सोदरे यदि केशव: एवं प्रवृत्त: किं शक्यं कर्त्तुमत्र तपोधन।
बहूनि प्रतिलोमानि पुरा स कृतवान्मयि। कृष्णो नारद सोढानि भ्रातेति तस्य नारद।
खाण्डवे चार्ज्जुनरथं पुरा वाहयता सता। मदीया वारिता मेघा: शमयन्तोऽग्निमुद्धतं। ७३००
गोवर्द्धनं धारयता विप्रियञ्च कृतं मम। तथा वृत्रवधे प्राप्ते साहाय्यार्थं वृतो मया।
समोऽहमिति सर्व्वेषां भूतानामिति चोक्तवान्। खयाक्षस्यमाश्रित्य वृत्रश्च निहतो मया।
देवासुरेषु प्राप्तेषु संग्रामेषु च नारद। युध्यत्यात्मेच्छया कृष्णो मुने सुविदितं तव।
बहुनाऽत्र किमुक्तेन तस्मादिष्या प्रवर्त्ततां। ज्ञातिभेदो न न: कार्य्य: साक्षी त्वं मम नारद।
ममोरसि गदां मोक्तुं प्रोद्यतो यदि केशव:। अनुग्रहाय पौलोमीं गुण: क इह दृश्यते। ७३०५
उदवासं गतो धीमान् पिता न: कश्यप: प्रभु:। अदित्या सह मे माता तयोर्व्वाच्यमिदं भवेत्।
अजितात्मा मम भ्राता रजसा तमसा वृत:। कामेन च स्त्रियो वाक्यादेवं मामुक्तवान् गुरुं।
धिक् स्त्रियं सर्व्वथा विप्र धिग्जो धिक् तमस्तथा। यत्राधिचिन्तवान् विष्णुरेवं मां स्त्रीजितो द्विज।
न दृष्टं कश्यपकुलं व्यपदेश्यं महामुने। नैव दक्षकुलं दृष्टं मातुर्म्मे यत्र सम्भव:।
न ज्येष्ठता न राजत्वं देवानां प्रतिमानितं। कामरागाभिभूतेन कृष्णेन खलु नारद। ७३१०
पुत्रदारसहस्रैर्हि भ्राता ऽनघ विशिष्यते। मद्वृत्तो ज्ञानसम्पन्न इति ब्रह्मा पुरा ऽब्रवीत्।
नास्ति भ्रातृसमो बन्धुराहार्य्ये इतरो जन:। इति मामब्रवीन्माता पिता चैव प्रजापति:।
सोदरेषु विशेषस्तु पिता मे कश्यपो ऽब्रवीत्। दृष्टा नया विरुध्यन्ते दानवा: पापनिश्चया:।
काममेतन्न वक्तव्यं स्वयमात्मस्तवान्वितं। प्राप्तस्तत्समयो विप्र यदिहावोच्यते मया।
धनुर्ज्यायां मुनिश्रेष्ठ छिन्नायां हि पुराऽनघ। धन्वाभिरमराणां हि वरदानान्महामने। ७३१५
उत्कृत्तशिरसो विष्णो: पुरा देहो धृतो मया। सन्धितञ्च शिरो यस्माच्छिन्नं रौद्रेण तेजसा।
अहं विशिष्टो देवानामित्युक्त्वा पुनरच्युत:। धनुरारोप्य दर्पेण स्थितो नारद केशव:।

किं मां पिता वा माता वा वक्ष्यतीति मया मुने। स्नेहेन विधृतं विष्णोः शरीरं मुनिसत्तम।
ऐन्द्रं वैष्णवमस्यैव मुने भागमहं ददौ। यवीयांसमहं प्रेम्णा कृष्णं पश्यामि नारद।
संग्रामेषु प्रहर्त्तव्यं तेन पूर्व्वं तपोधन। राजा किलाहं समरे प्रहराम्यग्रतो ध्रुवं। ७२१०
प्रादुर्भावेषु सर्व्वेषु स्वशरीरमिवानघ। पश्याद्रक्ष्यामि धर्म्मज्ञ केशवं भक्तिमाश्रितं।
इदं भंक्त्वा मदीयञ्च भवनं विष्णुना कृतं। उपर्य्युपरि लोकानामधिकं भुवनं मुने।
अवमानः स च मया पृष्ठतः क्रियते मुने। लालनीयो मया बाल इत्येवं भ्रातृगौरवात्।
बालोऽयं मम पुत्रेति यवीयानिति नारद। पित्रा मात्रा च गोविन्दो मातीव परिभाषितः।
इष्टस्तत्र जनन्यास्तु केशवः स विशेषतः। वयं द्वेष्या न सन्देहस्तत्र स्नेहोऽतिरिच्यते। ७२१५
सर्व्वज्ञो बलवान् शूरो मान्यमानयिता तथा। केशवेत्येव च ध्यानं यत्तद्धितयतां गतं।
गच्छ नारद वक्तव्यः केशवो वचनान्मम। आहूतो न निवर्त्तेयं समरं प्रति शत्रुभिः।
यदीच्छसि तदागच्छ सज्यं ते यत्त्वमिच्छसि। प्रहरस्व च पूर्व्वं त्वं भार्य्याजित यथेच्छसि।
रथाङ्गेनाथ शार्ङ्गेण गदया नन्दकेन च। प्रहरात्मा गरुडं दृढो भूत्वा जनार्द्दन।
प्रहृते प्रहरिष्यामि यथाशक्त्या च केशव। अहो धिग्यदि मां स्नेहो विक्रान्तं न करिष्यति। ७२२०
यावन्न संग्रामगतो जितोऽहं चक्रपाणिना। पारिजातं न दास्यामि तावद्ब्रो मुनिसत्तम।
मां समाह्वयते ज्येष्ठं यवीयांस्तु तपोधन। अहं तं मर्षयिष्यामि किमर्थं स्त्रीजितं हरिं।
अद्यैव गच्छ भगवन् द्वारकां कृष्णपालितां। विवादे संश्रितः सोऽद्य इति वाच्यस्त्वयाऽच्युतः।
पलाशपत्रार्द्धमपि त्वया ऽजितो न पारिजातस्य तव प्रदास्यति। इति प्रवाच्यो मधुसूदनस्त्वया वचो मदीयं स्मरता
तपोधन।
पुनः प्रवाच्यो भगवंस्त्वयाऽच्युतो मम प्रियार्थं खलु निर्विशङ्कितं। न मायया हर्त्तुमिहार्हसि द्रुमं सुयुद्धमेवास्तु धिगस्तु
जिह्मतां। ७२२५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे इन्द्रवाक्ये ऊनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

॥ वैशम्पायन उवाच ॥ महेन्द्रवचनं श्रुत्वा नारदो वदताम्वरः। विविक्ते देवराजानमिदं वचनमब्रवीत्।
कामं प्रियाणि राजानो वक्तव्या नात्र संशयः। प्राप्तकालन्तु वक्तव्यं हितमप्रियमप्युत।
अनियुक्तपुरोभागो न स्यादिति वदन्ति हि। स लोकगतितत्त्वज्ञो नयविज्ञानकोविदः।
कार्य्याकार्य्ये समुत्पन्ने परिपृच्छति मां भवान्। यतस्ततः प्रवक्ष्यामि श्रूयतां यदि रोचते।
अयुक्तेनापि सुहृदा वक्तव्यं जानता हितं। न्याय्यञ्च प्राप्तकालञ्च पराभवमनिच्छता। ७२३०
वक्तव्यं सर्व्वथा सद्भिरप्रियं वाऽपि यद्धितं। आनृशंस्यमेतत् लोकस्य सद्भिश्च विदितं पुरा।
अनृते धर्म्मभङ्गे च न शुश्रूषति चाप्रिये। न प्रियं न हितं वाच्यं सद्भिरेते विनिन्दिताः।
सर्व्वथा देव वक्तव्यं श्रूयतां शृण्वताम्वर। श्रुत्वा च कुरु सर्व्वं त्वं मम श्रेयस्करं वचः।
अन्योन्यभेदो भ्रातॄणां सुहृदां वा बलान्तक। भवत्यानन्दकृद्धेव द्विषतां नात्र संशयः।

हितानुबन्धसहितं कार्य्यं श्रेयं सुरेश्वर । विपरीतञ्च तद्बुद्धा नित्यं बुद्धिमतां वर ।
पश्चात्तापकरं यत् स्यादारब्धं कार्य्यमीदृशं । आरम्भेऽभैव तद्विद्वानेव बुद्धिमतां नयः ।
विपाकमस्य कार्य्यस्य नानुपश्यामि शोभनं । यदत्र कारणं देव निबोध विबुधाधिप ।
य एको विश्वमध्यास्ते प्रधानं जगतो हरिः । प्रकृत्या यं परं सर्व्वे क्षेत्रज्ञं वै विदुर्बुधाः ।
तस्याव्यक्तस्य यो व्यक्तो भागः सर्व्वभवोद्भवः । तस्यात्मा प्रथमो देवो विष्णुः सर्व्वस्य धीमतः ।
प्रकृत्याः प्रथमो भाग उमा देवी यशस्विनी । व्यक्तः सर्व्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः
रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः । अव्यया प्रकृतिर्द्देवी गुणदेवो महेश्वरः ।
न विशेषोऽस्ति रुद्रस्य विष्णोश्चामरसत्तम । गुणिनश्चाव्ययायाश्च स दारप्रथमो गुणः ।
नारायणो महातेजाः सर्व्वलोकभावनः । भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः ।
ब्रह्मा देवगणाश्चान्ये पश्चात् सृष्टा महात्मना । महादेवेन देवेश प्रजापतिगणास्तथा ।
एवं पुराणः पुरुषो विष्णुर्वेदेषु पठ्यते । अचिन्त्यस्याप्रमेयस्य गुणेभ्यश्च परस्तथा ।
अदित्या तपसा विष्णुर्म्महात्माराधितः पुरा । वरेण च्छन्दिता तेन परितुष्टेन चादितिः ।
तयोक्तस्त्वत्समं पुत्रमिच्छामीति सुरोत्तम । प्रणिपत्य च विज्ञाय नारायणमधोक्षजं ।
तेनोक्ता भुवने नास्ति मत्समः पुरुषोऽपरः । अंशेन तु भविष्यामि पुत्रः स्वस्त्वहमेव ते ।
स जातः सर्व्वलोकदेवो भ्राता तव सुरेश्वर । नारायणो महातेजा यमुपेन्द्रं प्रचक्षते ।
इत्यमेष हरिर्द्देवः काश्यपत्वमुपागतः । तैस्तैर्भावैर्विकुरुते भूतभव्यभवाव्ययः ।
प्रादुर्भावं गतो देवो जगतो हितकाम्यया । माथुरं जगतां नाथः कर्त्ता हर्त्ता च केशवः ।
यथा पललपिण्डः स्याद्व्याप्तः स्नेहेन मानद । तथा जगदिदं व्याप्तं विष्णुना प्रभविष्णुना ।
सहस्रशिरा देवः सर्व्वात्मा तैस्तैर्भावैर्विकुर्व्वते । जगत्यतिगुणो देवो वैकुण्ठः सर्व्वभावनः ।
अतः समस्तदेवानां पूज्य एव च केशवः । पद्मनाभश्च भगवान् प्रजासर्गकरो विभुः ।
अनन्तो धारणार्थञ्च विभर्त्ति च महद्यशः । यज्ञ इत्यपि सद्भिश्च कथ्यते वेदवादिभिः ।
श्वेतः कृतयुगे देवो रक्तस्त्रेतायुगे तथा । द्वापरे च तथा पीतः कृष्णः कलियुगे विभुः ।
अवधीत् स हिरण्याक्षं दिव्यरूपधरो हरिः । जघ्ने हिरण्यकशिपुं नरसिंहवपुर्हरिः ।
दधाराप्सु निमज्जन्तीमेष देवो वसुन्धरां । वाराहं वपुराश्रित्य जगतो हितकाम्यया ।
जिगाय जगतीञ्चैव विष्णुर्वामनरूपधृक् । बबन्ध च बलिं देवः श्रीमान् पन्नगबन्धनैः ।
देवदानवसम्भूतामकामयदपि श्रियं । लब्धवन्तः पुरा विष्णुरुदारामितविक्रमः ।
सावशेषं ततो यस्य तं न हन्ति जनार्द्दनः । अनीकेष्वपि वर्त्तन्तं शतमेतन्महात्मनः ।
जघ्ने च दानवान्मुख्यान्देवानाञ्चैव शत्रवः । तव प्रियार्थं गोविन्दो धर्म्मनित्यः सतां गतिः ।
रामत्वमपि चावाप्य जघ्ने रावणमात्मवान् । भूत्वा कामगुणश्चैव जघान विरदं हरिः ।
हिताय जगतोऽद्यापि लोके वसति मानुषे । उपेन्द्रो जगतो नाथः सर्व्वभूतोत्तमोत्तमः ।

जटी कृष्णाजिनी दण्डी दृष्टपूर्व्वो मया हरिः । दैतेयेषु दवन्दवत्सु गोष्वग्निरिवोद्धतः ।
अद्राक्षमपि गोविन्दं दानवैकार्णवं जगत् । कुर्व्वाणं दानवैर्हीनं जगतो हितकाम्यया ।
अवश्यं पारिजातन्ते नयिष्यति जनार्द्दनः । द्वारकाममरश्रेष्ठ नानृतं ते ब्रवीम्यहं ।
भ्रातृस्नेहाभिभूतस्त्वं कृष्णे न प्रहरिष्यसि । नापि कृष्णस्त्वयि ज्येष्ठ प्रहरिष्यति वासव ।
नैव चेच्छाम्यमि प्रोक्तं मया देव कथञ्चन । पृच्छ त्वं नयधर्म्मज्ञान् ये हितास्तव मन्त्रिणः ।
नारदेनैवमुक्तस्तु महेन्द्रो जनमेजय । इदमुत्तरमीशोऽथ प्रत्युवाच जगद्गुरुं ।
एवंविधप्रभावं त्वं कृष्णं वदसि यद्द्विज । एवमेतत् सुवह्नशः श्रुतं खलु मया मुने ।
यतस्त्वेवंविधः कृष्णस्ततोऽहं तस्य तं तरुं । न प्रयच्छाम्यदातव्यं सतां धर्म्ममनुस्मरन् ।
महाप्रभावो नान्यार्थे रुष्येदिति विचिन्तयन् । व्यवस्थितोऽहं भद्रन्ते मुने सर्व्वगुणोदितः ।
महाप्रभावाः सततं भवन्ति हि महिष्णवः । श्रोतारश्चैव सततं वृद्धानां ज्ञानचक्षुषां ।
महात्मा कारणेनान्ये कृष्णो धर्म्मभृताम्बरः । भ्रात्रा ज्येष्ठेन धर्म्मज्ञो विरोधं गन्तुमर्हति ।
यथैव मम मातुः स वरं प्रादादधोक्षजः । तथैव तस्याः पुत्राणां ज्येष्ठतां सोढुमर्हति ।
यथैवोपेन्द्रतां यातः स्वयमिच्छन् जनार्द्दनः । तथैव भ्रातुरिन्द्रस्य संमानं कर्त्तुमर्हति ।
ज्यैष्ठ्यमेव तु देवेन नारब्धं किं पुरातने । अथेदानीमपीच्छेत् स ज्येष्ठोऽस्तु मधुसूदनः ।
सुनिश्चितं बलरिपुमीक्ष्य नारदो विसर्ज्जितस्त्रिदशवरेण धर्म्मवित् । ययौ पुरीं यदुनृपभाभिरर्च्चितां कुशस्थलीं धृतमतिसांस्तपोधनः ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

॥ वैशम्पायन उवाच ॥ अथैत्य द्वारकां रम्यां नारदो मुनिसत्तमः । ददर्श पुरुषश्रेष्ठं नारायणमरिन्दमं ।
स्ववेश्मनि सुखासीनं सहितं सत्यभामया । विराजमानं वपुषा सर्व्वतेजोनिगामिना ।
तमेवार्थं महात्मानं चिन्तयन्तं दृढव्रतं । केवलं योजयन्तञ्च वाक्यमात्रेण भामिनीं ।
दृष्ट्वैव नारदं देवः प्रत्युत्तस्थावधोक्षजः । पूजयामास च तदा विधिदृष्टेन कर्म्मणा ।
सुखोपविष्टं विश्रान्तं प्रहस्य मधुसूदनः । वृत्तान्तं परिपप्रच्छ पारिजाततरुं प्रति ।
अथोवाच मुनिः सर्व्वं विस्तरेण महात्मने । इन्द्रानुशायेन्द्रवाक्यं निखिलं जनमेजय ।
श्रुत्वा कृष्णस्तु तत्सर्व्वं नारदं वाक्यमब्रवीत् । अमरावतीं पुरीं यास्ये श्वोऽहं धर्म्मभृताम्बर ।
इत्युक्त्वा नारदेनैव सहितः सागरं ययौ । सन्दिदेश ततस्तत्र विविक्ते नारदं हरिः ।
महेन्द्रभवनं गत्वा वद वाक्यं तपोधन । अभिवाद्य महात्मानं मद्वाक्यादमरोत्तमं ।
न युद्धे प्रमुखे स्थातुमर्हसि त्वं मम प्रभो । पारिजातस्य नयने निश्चितं त्वमवेहि मां ।
एवमुक्तस्तु कृष्णेन नारदस्त्रिदिवं गतः । आचचक्षे च कृष्णोक्तं देवेन्द्रायामितौजसे ।
ततो बृहस्पतेः शक्रः शशंस बलनाशनः । श्रुत्वा बृहस्पतिश्चेदमुवाच कुरुनन्दन ।
अहो धिग्बलसूदन मयि याते शतक्रतो । दुर्नीतमिदमारब्धं मन्त्रभेदो हि दारुणः ।

अनाख्याय कथं नाम भवता भुवनेश्वर । ममैतत् कृत्यमारब्धं देव केनापि हेतुना ।
अथवा भवितव्येन कर्म्मांशेन प्रयुज्यते । जगद्व्रह्म न विधिः शक्यः समतिवर्त्तितुं ।
सहसैव तु कार्य्याणामारम्भो न प्रशस्यते । तदेतत् सहमारब्धं कार्य्यं दास्यति लाघवं । ७४०५
बृहस्पतिं महात्मानं महेन्द्रोऽथाब्रवीद्वचः । एवं गतेऽद्य यत् कार्य्यं तद्भवान् वक्तुमर्हति ।
तमुवाचाथ धर्म्मात्मा गतागततत्त्ववित् । अधोमुखश्चिन्तयित्वा बृहस्पतिरुदारधीः ।
यतस्व सह पुत्त्रेण योधयस्व जनार्द्दनं । तथा शक्र करिष्यामि यथा न्याय्यं भविष्यति ।
बृहस्पतिस्त्वेवमुक्त्वा क्षीरोदं सागरं गतः । आचष्ट चैव मुनये कश्यपाय महात्मने ।
तच्छ्रुत्वा कश्यपः क्रुद्धो बृहस्पतिमभाषत । अवश्यं भाव्यमेतद्धि सर्व्वथा नात्र संशयः । ७४१०
दृप्तः सदृशीं भार्य्यां भर्त्तुर्द्देवशर्म्मणः । अपध्यानकृतो दोषः पतत्येष शतक्रतोः ।
अस्य दोषस्य शान्त्यर्थमारब्धश्च मुने मया । उदवासः स दोषस्य प्राप्त एव सुदारुणः ।
तद्गमिष्यामि मात्राऽस्य सहादित्या तपोधन । उभौ तौ वारयिष्यामि देवं संवदते यदि ।
बृहस्पतिस्तु धर्म्मात्मा मारीचमिदमब्रवीत् । प्राप्तकालं त्वया तत्र भवितव्यं तपोधन ।
तथेति कश्यपश्चोक्त्वा सम्प्रस्थाप्य बृहस्पतिं । जगामार्च्चयितुं देवं रुद्रं भूतगणेश्वरं । ७४१५
तत्र सौम्यं महात्मानमानर्च्च वृषभध्वजं । वरार्थी कश्यपो धीमानदित्या सहितः प्रभुः ।
तुष्टाव च तमीशानं मारीचः कश्यपस्तदा । वेदोक्तैः स्वकृतैश्चैव स्तवैः स्तव्यं जगद्गुरुं ।
॥कश्यप उवाच॥उरुक्रमं विश्वकर्म्माणमीशं जगत्स्रष्टारं धर्म्मदृश्यं वरेशं । सशर्व्व त्वां धृतिमद्धाम दिव्यं विश्वेश्वरं भगवन्तं नमस्ये।
यो देवानामादिः पापहर्त्ता ततं विश्वं येन जगत्सहस्वात् । आपो गर्भो यस्य शुभा धरित्र्यो विश्वेश्वरं तं शरणं प्रपद्ये ।
ज्वालावृक्राम् यो यतिरूपो निजघ्ने दन्तानिन्द्रेण प्रणुदोऽहितानां । विरूपाक्षं सुदर्शनं पुण्ययोनिं विश्वेश्वरं यामि मूर्द्ध्ना
प्रपद्ये । ७४२०
भुङ्क्ते य एको विभुर्जगतो विश्वमग्र्यो धाम्नां धाम सुकृतिनाम्न ध्येयः । पुष्यात् स मां महता शाश्वतेन सोमपानां मनी
षिणां वरिष्ठः ।
अथर्व्वाणं सुशिरसं भूतयोनिं कृतिनं धीरं दानवानाञ्च बाधं । येन कृतं यज्ञियं संस्कृतं वै विश्वेश्वरेशं शरणं यामि देवं ।
जगज्जालं विततं यत्र विश्वं विश्वात्मानं प्रीतिदेवं गतानां । य ऊर्द्ध्वगं रथमास्थाय याति विश्वेश्वरः स सुमना मेऽस्तु
नित्यं ।
अनन्तश्चरं रोचनं चारुशाखं महाबलं धर्म्मनेतारमीड्यं । सहस्रनेत्रं शतवर्त्मानमग्र्यं महादेवं विश्वसृजं नमस्ये ।
शुचिं योगं शमनं शान्तपापं शर्व्वं शम्भुं शङ्करं भूतनाथं । धुरन्धरं गोपतिं चन्द्रचिह्नं रिपीकाणामयनं यामि मूर्द्ध्ना । ७४२५
आशुः शिवानां वृषभं वीरुधाणां कृतं धर्म्मं वितथं चाशु शैवं । वसुन्धरं सम्भृजीकं समं त्वां धृतव्रतं शूलधरं प्रपद्ये ।
अनन्तवीर्य्यं धृतकर्म्माणमाद्यं यज्ञश्रेयं यजताञ्चाभियाज्यं । हविर्भुजं भुवनानां सदैव ज्येष्ठं विशं धर्म्मभृतं प्रपद्ये ।
परं गुणेभ्यः प्रश्निगर्भस्वरूपं यशःश्रृङ्गं व्यूहनं कान्तरूपं । शुद्धात्मानं पुरुषं सत्यधाम सनोहनं दुष्कृतीनां नमस्ये ।
युक्तोद्धारं स्वभिरसं चारुकर्म्म दृढव्रतं दृढधन्वानमाजं । शूरं वेत्तारं धनुषोऽस्त्रातिरेकं पतिं पशूनां शमनं नमस्ये ।

एको गतिश्चैव भूतं भविष्यं सर्व्वातिथिर्यो हि भुवस्यविष्णुः । अरिन्दुदोऽनुत्तमः संविभागो विभाजको मां भगवान्
पातु देव । ७४३०
य एको याति जगतां विश्वमीशो य एकोऽन्तर्गतानां प्राणमग्र्यं । येनामृतंप्राप्य च्छाश्वतं धामजुष्टं समाजुयात् सुकृती श्रेयसेऽद्य ।
ब्रह्मा ऽसृजद्यो भुवनोस्तमीानं तृप्तो विद्वान् साक्षपः सर्व्वगम्य । स्रष्टारं सर्व्याहृतिस्थं समयं समां पायादुग्र उग्ररूपोऽरिहा नैः ।
व्यम्बनो जनोऽथ विद्वान्ममयः स्मृतिः शम्भुः प्राणदः कृत्तिवासाः । एषो ध्रुवः पवमानस्य भर्त्ता स सपत्नोशः शङ्करः सारधाता ।
त्र्यम्बकं पुष्टिदं वोऽनुवाणं धर्म्मं त्रिप्राणं वरदं यज्वनाञ्च । वराङ्करं रणजेतारमीशं देवं देवानां शरणं यामि रुद्रं ।
आस्यं देवानामन्तकं दुष्कृतीनां चित्रस्वीमं वृत्रहं कर्म्मसाध्यं । भूतायनं भूतपतिं गुरूणां गुरुं देवं शरणं यामि रुद्रं । ७४३५
अनुद्भूतं यज्ञकर्त्तारमन्तं मध्यस्थायं यज्ञगतां साम्यरूपं । देववतेषु बहुधा गीतमीशमभिविपिष्टपं शरणं यामि रुद्रं ।
महाजिनं व्रतिनं मेखलाङ्गं सुतोषणं क्रोधघ्नं विपापं । भूतं चैवश्चं गुणिनं वा कपर्दिनं नतोऽस्मीशं वन्द्यं वन्दनानां ।
देवं देवानां पावनं पावनानां क्रतिं क्रतीनां महतो महान्तं । प्रज्ञात्मानं संस्तुतं गोपतीनां पतिं देवं शरणं यामि रुद्रं ।
अनन्तस्थं पुरुषं गुह्यमंशं प्रभास्वन्तं प्रणवं विप्रदीपं । चेतुं परं परमस्यावरस्य शुद्धं देवं गुणिनं सन्नतोऽस्मि ।
प्रसूताद्भयो नेम स्तुतिश्च सूक्ष्मः पृथक् भूतेभ्यो न पृथक् चैव भूतः । स्वयम्भूतः पातु मां सर्व्वसाक्षः प्रदः स्वादः सम्मदः पातु
रक्षं । ७४४०
आमन्तः सन्ततः साधकानां श्रद्धावतां श्राद्धवृत्तिप्रणेता । पतिर्गणानां महतां मत्कृतीनां पायान्मेशः पूरणः पङ्कजानां ।
अन्तर्व्वहिर्दृष्टजिनानां निहन्ता स्वयं कर्त्ता भूतभावी विकुर्व्वन् । घृतायुधः सुकृतीनामुरूमीजाः प्रणुद्यान्मे वृजिनं देव
देवः ।
येनाहृतास्त्रिपुरा मायिनो वै दग्धा घोरेण वितथान्ताः शरेण । महत् कुर्व्वन्तो वृजिनं देवतानां ज्यायानीशः पातु विश्वो
दधाता ।
भागीयसा भागमादातुमिच्छन्साचो दाक्षो येन क्रत्तो ऽभ्यधावत् । विद्वान् यज्ञस्यादिरथान्तः स देवः पायादीशो मां दक्षय
ज्ञान्तहेतुः ।
अन्यो धन्यः संस्तुतस्त्रोतमय जगत् सृष्ट्वा योऽसि सर्व्वातिगुह्यः । स मां मखप्रमुखे पातु नित्यं विधिज्यामः प्रथमः पङ्क
णानां । ७४४५
गुणत्रैकाल्यं यस्य देवस्य नित्यं सर्व्वाद्रिको यस्य भावात् प्रसूतः । गोप्ता गोप्तॄणां सम्मदो दुष्कृतीनामाद्यो विश्वस्य बाधमानस्य
कृद्धः ।
धाम्नो यस्य हरिरग्न्योऽथ विष्णो ब्रह्मा पुत्रैः सहितश्च दिजाश्च । पराभूता भुवनेशः स धीमो जगत्येष श्रेयसे साधुगोप्ता ।
यस्माद्भूतानां भूतिरन्तोऽथ मध्य धृतिर्विभूतिः श्रुतिश्च रुद्रः । यस्याभिभूतस्य पुरुषस्येश्वरस्य महात्मनो स्तुवेद्यस्य तस्य ।
यल्लिङ्गाङ्कं त्र्यम्बकः सर्व्वमोशो भगाङ्कं यस्त्वदुमा सर्व्वधात्री । नान्यस्तृतीयं जगतोऽस्ति किञ्चिन्महादेवात् सर्व्वसत्त्वेश्वरोऽसौ ।
इति संस्तूयमानस्तु भगवान् वृषभध्वजः । दर्शयामास धर्म्मात्मा कश्यपं धर्म्मसङ्करः । ७४५०
उवाच चैनं देवेशः प्रसन्नेनान्तरात्मना । जाने संस्तोषि कार्य्येण येन मां त्वं प्रजापते ।
इन्द्रोपेन्द्रौ महात्मानौ देवौ प्रकृतिमेष्यतः । पारिजातन्तु धर्म्मात्मा नयिष्यति जनार्द्दनः ।

उपध्योता मेहन्द्रो हि मुनिना देवशर्म्मणा । अस्याकाङ्क्षन् पुरा भार्य्या तपोदीप्तस्य काश्यप ।
गम्यतां तत्र धर्म्मज्ञ दाक्षायण्या महात्मना । अदित्या शक्रसदनं श्रेयस्ते पुत्रयोर्ध्रुवं ।
इति हरवचनं निशम्य विद्वान् कमलभवात्मजसूनुरप्रमेयः । त्रिदशगणगुरुं प्रणम्य रुद्रं मुदितमनाः सुरनाकमं जगाम । ७४५५
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे महादेवस्तवने एकत्रिंशदधिकशततोऽध्यायः ॥ १३१ ॥
॥ वैशम्पायन उवाच ॥ अथ विष्णुर्महातेजा मुहूर्त्ताभ्युदिते रवौ । मृगयाव्यपदेशेन ययौ रैवतकं गिरिं ।
आरोप्यैकरथे देवः सात्यकिं शिनिपुङ्गवं । प्रद्युम्नमनुगच्छेति प्रोक्ता कुरुकुलोद्वह ।
रैवतञ्च गिरिं देवो गत्वा दारुकमब्रवीत् । मदीयं रथमेतं त्वं गृहाणेहैव दारुक ।
प्रतिपालय मां सौम्य दिनार्द्धंच्चारयन् हयान् । रथेनैवं प्रवेष्टाहं द्वारकां सूतसत्तम ।
इति सन्दिश्य भगवानारुरोह जयोद्यतः । तार्क्ष्यं स सात्यकी धीमानप्रमेयपराक्रमः । ७४६०
पृष्ठगत्येन कौरव्य प्रद्युम्नः शत्रुसूदनः । आकाशगामिना राजन् पृष्ठतः कृष्णमन्वियात् ।
निमेषान्तरमात्रेण नन्दनं काननं हरिः । देवोद्यानं ययौ धीमान् पारिजातजिहीर्षया ।
ददर्श तत्र भगवान्देवयोधान्सुरासदान् । नानायुधधरान् वीरान्नन्दनस्थानधोक्षजः ।
तेषां सम्पश्यतामेव पारिजातं महाबलः । उत्पाट्यारोपयामास पारिजातं सतां गतिः ।
गरुडं पक्षिराजानमयत्नेनैव भारत । उपस्थितो विहरवान् पारिजातस्तु केशवं । ७४६५
सान्त्वितो वासुदेवेन पारिजातश्च भारत । उक्तश्च हृत मा भैस्त्वं केशवेन महात्मना ।
तं प्रस्थितं तरुं दृष्ट्वा पारिजातमधोक्षजः । अमरावतीं पुरीं श्रेष्ठां ततश्चक्रे प्रदक्षिणं ।
ते तु नन्दनगोप्तारः पारिजातो द्रुमोत्तमः । ह्रियतेति महेन्द्राय गत्वा नृप शशंसिरे ।
अथैरावतमारुह्य निर्ययौ पाकशासनः । जयन्तेन रथस्थेन पृष्ठतोऽनुगतः प्रभुः ।
पूर्व्वमभ्यागतं द्वारं केशवं शत्रुनाशनं । दृष्ट्वोवाच प्रवृत्तं भोः किमिदं मधुसूदन । ७४७०
प्रणम्य गरुडस्थोऽथ केशवः शक्रमब्रवीत् । वध्वास्ति पुण्यकार्याय नीयतेऽयं वरद्रुमः ।
तमुवाच ततः शक्रो नैवं पुष्करलोचन । अयोधयित्वा न तद्वर्णयितव्यस्त्वयाऽच्युत ।
प्रहरस्व महाबाहो प्रथमं मयि केशव । प्रतिज्ञा सफला तेऽस्तु मुञ्च कौमोदकीं मयि ।
ततः कृष्णः शरैस्तीक्ष्णैर्देवराजगजोत्तमं । बिभेदाशनिसङ्काशैः प्रहसन्निव भारत ।
विव्याध गरुडं वज्री दिव्यैः शरवरैस्तदा । वाणांश्च वाणैश्चिच्छेद केशवस्य तरस्विनः । ७४७५
यान् यान्मुमोच देवेन्द्रस्तांस्तांश्चिच्छेद माधवः । माधवेन प्रमुक्तांश्च चिच्छेद बलवृत्रहा ।
माहेन्द्रस्य च शब्देन धनुषः कुरुनन्दन । शार्ङ्गस्य च निनादेन मुमुहुः स्वर्गवासिनः ।
तयोर्व्वर्त्तति संग्रामे गरुडस्थं महाबलः । पारिजातं जयन्तोऽथ हर्त्तुमभ्यागतद्बली ।
प्रद्युम्नमथ कंसघ्नो वारयेति तमब्रवीत् । ततस्तं वारयामास रौक्मिणेयः प्रतापवान् । ७४८०
जयन्तो जयतां श्रेष्ठो रौक्मिणेयमथेषुभिः । सर्व्वगात्रेषु विव्याधाजघान रणे स्थितः ।
रथस्थ एव रथिनं कामस्तु कमलेक्षणः । रश्मिभिर्भर्द्दयामास वाणैराशीविषोपमैः ।

स सन्निपातस्तुमुलो बभूव कुरुनन्दन । जयन्तस्य च वीरस्य रौक्मिणेयस्य चोभयोः ।
हतप्रतिहतञ्चैव चक्रतुस्तौ महाबलौ । महेन्द्रोपेन्द्रतनयौ जगत्यस्त्रभृताम्वरौ ।
देवाश्च मुनयश्चैव ददृशुर्विस्मयान्विताः । तं संग्रामं महाघोरं सिद्धाश्चैव सचारणाः ।
ततस्तु प्रवरो नाम देवदूतो महाबलः । पारिजातं पुनर्हर्त्तुमियेष कुरुनन्दन । ७४८५
सखा स देवराजस्य महास्त्रविदरिन्दमः । अवध्यो वरदानेन ब्रह्मणः कुरुनन्दन ।
ब्राह्मणस्तपसा सिद्धो जम्बुद्वीपाद्दिवं गतः । स्वशक्त्या नृपते यातः सखित्वं बलघातिना ।
तमापतन्तं संप्रेक्ष्य कृष्णः सात्यकिमब्रवीत् । तवैष एव प्रवरं शरैर्व्वारय सात्यके ।
न त्वत्र निर्द्दयं वाणा मोक्तव्याः सात्यके त्वया । अस्य ब्राह्मणचापल्यं सोढव्यं खलु सर्व्वथा ।
ततः षष्ट्या रथेषूणां गरुडस्थं दिवसदा । आजघान महाबाहो सात्यकिं प्रवरो भृशं । ७४९०
शिनेर्नप्ता धनुस्तस्य क्षिपतः सायकान्नृप । चिच्छेद पुरुषव्याघ्रो वचनञ्चेदमब्रवीत् ।
ब्राह्मणो नाभिहन्तव्यस्तिष्ठ तिष्ठ स्ववर्त्मनि । अवध्या यादवानां हि स्वपराद्धा अपि द्विजाः ।
प्रवरस्तु प्रहस्यैनमुवाच कुरुनन्दन । अलं चान्त्या नृणां शूर युध्य सर्व्वात्मना रणे ।
जामदग्न्यस्य रामस्य शिष्योऽहमपि यादव । नामतः प्रवरो नाम सखा शक्रस्य धीमतः ।
न देवा योद्धुमिच्छन्ति मन्यन्तो मधुसूदनं । आनृण्यं सौहृदस्याहमद्य गन्ताऽस्मि माधव । ७४९५
ततस्तयोस्तदा रौद्रः संग्रामो ववृधे नृप । अस्त्रैर्दिव्यैर्नरव्याघ्र शैनेयद्विजमुख्ययोः ।
द्यौश्चचाल तदा राजन् द्युचराश्च सहस्रशः । तस्मिन् वर्त्तति संग्रामे तेषामतिमहात्मनां ।
नातिश्लिष्ये रणे कार्ष्णिरैन्द्रिमस्त्रभृताम्वरं । ऐन्द्रिः कार्ष्णिं महात्मानं मायिनं शूरसम्मतं ।
हन्त शक्र प्रतीच्छेति तावुभौ योधसत्तमौ । युयुधाते नरश्रेष्ठ परस्परजयैषिणौ ।
अथ शार्ङ्गायुधसुतं शचीपुत्त्रः प्रतापवान् । विभाव्याभ्यहनद्राजन् दिव्येनास्त्रेण सत्वरः । ७५००
सोऽस्त्रं तदभिदीप्यन्तमापतन्तं शितैः शरैः । तस्तम्भे वाणजालेन तदद्भुतमिवाभवत् ।
ततस्तद्दीप्यमानन्तु पपात रणमूर्द्धनि । रौक्मिणेयस्य कौरव्य घोरं दानवमर्द्दनं ।
तेनास्त्रेण रथो दग्धः प्रद्युम्नस्य महात्मनः । नादहत्तन्तु घोरं तं रौक्मिणेयं जनाधिपः ।
दहत्यग्निं न खल्वग्निरुद्धतोऽपि विशाम्पते । दग्धाद्रथान्महाबाहू रौक्मिणेयोऽपचक्रमे ।
अथ नारायणसुतो विरथो रथिनाम्वरः । स्थितो धनुष्मानाकाशे जयन्तमिदमब्रवीत् । ७५०५
महेन्द्रपुत्त्र दिव्यं त्वं यदस्त्रं मुक्तवानसि । नाहमीदृशरूपाणां शक्यो हन्तुं शतैरपि ।
प्रयत्नं कुरु शिक्षाणां यत्नं मेऽद्य प्रदर्शय । नास्ति मेऽतिशयं कर्त्ता संग्रामेऽमरनन्दन ।
आसीन्मे साध्वसं दृष्ट्वा रथस्थं त्वां धृतायुधं । विभेमि तव नेदानीं युद्धे दृष्टबलाऽबलः ।
मनसा स्पृश्यतामेष पारिजातस्त्वया तरुः । शक्यं न खलु हस्ताभ्यां प्रष्टव्यो यस्त्वया शुभो ।
रथो मायामयो दग्धस्त्वया यो ह्यस्त्रतेजसा । ईदृशानां सहस्राणि स्रष्टुं शक्तोऽस्मि मायया । ७५१०
एवमुक्तो जयन्तस्तु मुमोचास्त्रं महाबलः । तपसोत्पादितं तेन स्वयमेवातितेजसा ।

ततप्रद्युम्नो महावेगं शरजालैरवारयत्। चलार्य्यस्त्राणि दिव्यानि मुमोच चापराणि सः।
दिक्षु सर्व्वासु रुरुधुस्तान्यस्त्राण्यथ भारत। रौक्मिणेयं महात्मानमन्तरीक्षं च पश्चमं।
महोल्कासदृशान् बाणानस्त्राण्यमरसत्तमः। मुमोच यानि घोराणि प्रद्युम्नं प्रति सर्व्वतः।
तानि सर्व्वाणि बाणौघैः कार्ष्णिरस्त्राण्यवारयत्। जयन्तश्चापरैर्ब्बाणैर्विव्याध निशितैस्तदा। ७५१५
ततो नादः समुत्सृष्टो खचरैः पुण्यकर्म्मभिः। दृष्ट्वा स्थैर्य्यञ्च शौर्य्यञ्च प्रद्युम्नस्य महात्मनः।
प्रवरस्यापि बाणेन शितेन शिनिपुङ्गवः। चिच्छेदेष्वासनं वीरो हस्तावापञ्च भारत।
ततोऽन्यत्तु जग्राह महत्तद्धनुरुत्तमं। महेन्द्रदत्तं प्रवरो महाशनिसमस्वनं।
स तेन वीरो महता धनुषा विप्रसत्तमः। शरान्मुमोच विशिखानर्करश्मिनिभांस्तदा।
चकर्त्त च धनुश्चित्रं शैनेयस्यामितौजसः। विव्याध सर्व्वगात्रेषु बाणैरपि च सात्यकिं। ७५२०
धनुरादाय शैनेयस्ततोऽन्यत् कुरुनन्दन। दृढं भारसहं धीमान् विव्याध प्रवरं रणे।
उभावकर्त्ततुरन्योन्यं वर्म्मणी तौ शितैः शरैः। गात्रेभ्यश्चैव मांसानि मर्म्मभिद्भिः शरोत्तमैः।
अथापरेण बाणेन पुनरिष्वासनं द्विधा। चिच्छेद प्रवरो वीरस्त्रिभिश्चैनमताडयत्।
अन्यदिष्वासनं तन्तु ग्रहीतुमनसं द्विजः। गदया ताडयामास लीलया लघुहस्तवत्।
सोऽसिं चर्म्म च जग्राह सात्यकिः प्रहसन्निव। न जग्राह धनुर्द्धीमान् गदयाऽभिहतो भृशं। ७५२५
ततः शरशतान्येव मुमोच प्रवरस्तदा। विहसन्निव विज्ञाय सात्यकं यदुनन्दनं।
प्रद्युम्नोऽस्य ददौ खड्गं निर्म्मलाकाशसन्निभं। तस्य चिच्छेद भल्लेन निस्त्रिंशं प्रवरस्तदा।
तद्धृद्देशेऽपातयच्च प्रवरः प्रहसन्निव। व्यधमच्च तथा वर्म्म शितैर्ब्बाणैरजिह्मगैः।
आजघान च शक्त्यैनं हृदि विप्रो ननाद च। तं विक्लवमिव ज्ञात्वा पारिजातजिहीर्षया।
तार्क्ष्याभ्याशे रथेनैव स तस्थौ प्रवरस्तदा। तं पक्षपुटवेगेन चिक्षेप गरुडस्तदा। ७५३०
गव्यूतिमात्रं स रथः पपात च मुमोह च। तं जयन्तो निपत्याथ पतितं ब्राह्मणं नृप।
समाश्वास्य रथं शीघ्रं समारोपितवांस्तदा। शैनेयमपि मुह्यन्तं पतन्तञ्च मुहुर्मुहुः।
आश्वासयानः प्रद्युम्नः पितृव्यं परिषस्वजे। तं हि पस्पर्श हस्तेन सव्येन मधुसूदनः।
नीरुजः स्पृष्टमात्रस्तु सात्यकः समपद्यत। प्रद्युम्नो दक्षिणे पार्श्वे वामे तु शिनिपुङ्गवः।
तस्थतुः पारिजातस्य युद्धोपेक्षौ तु तावुभौ। जयन्तः प्रवरश्चैव रथेनैकेन भारत। ७५३५
सम्पतन्तौ महेन्द्रेण प्रहस्योक्तौ महात्मना। नासन्नमभिगन्तव्यं गरुडस्य कथञ्चन।
बलवानेष पततां राजा च विनतासुतः। दक्षिणे चैव सव्ये च पार्श्वे मम धृतायुधौ।
उभौ स्थितौ युध्यमानं मामेवेह प्रपश्यतां। एवमुक्तौ स्थितौ वीरौ ततः शक्रस्य पार्श्वयोः।
ददृशाते युध्यमानौ देवराजजनार्द्दनौ। अथेन्द्रो गरुडं बाणैर्व्वज्राशनिसमस्वनैः।
विव्याध सर्व्वगात्रेषु महास्त्रप्रभवैस्तदा। स तान् बाणांश्च गणयन् वैनतेयः प्रतापवान्। ७५४०
ससाराभिमुखो वीरः शक्रनागमरिन्दमः। उभौ तौ बहुधा राजन् वर्षिणौ गजपक्षिणौ।

प्रयुद्धौ वीर्य्यसम्पन्नौ महाप्राणौ दुरासदौ । रदनैः पन्नगरिपुं करेण शिरसा तथा ।
ऐरावणो गजपतिर्जघान नदंस्तथा । ततो नखाङ्कुशैस्तीक्ष्णैर्वैनतेयो बलोत्कटः ।
तथा पक्षनिपातैश्च शक्रनागमताडयत् । स मुहूर्त्तं महानासीत् सम्मर्द्दो गजपक्षिणोः ।
विस्मापनीयो जगतः प्रेक्षितॄणां भयावहः । मूर्द्ध्नयथैरावणं तार्क्ष्यस्ताडयामास भारत । ७५४५
नखाङ्कुशकरालेन चरणेन महाबलः । संप्रहाराभिसन्तप्तः स पपात त्रिविष्टपात् ।
पारिपात्रे गिरिश्रेष्ठे द्वीपेऽस्मिन् जनमेजय । पतन्तमपि तं शक्रो न मुमोच महाबलः ।
कारुण्यादथ सौहार्द्दात् पूर्व्वाभ्युपगमादपि । कृष्णोऽप्यन्वागमच्चैनं पृष्ठतः प्रभवाव्ययः ।
पारिजातवता वीरो गरुडेन महाबलः । सनद्दपर्व्वते तस्थौ पारिपात्रे तु वृत्रहा ।
ऐरावणे समाश्वस्ते संग्रामो ववृधे पुनः । शरैराशीविषप्रख्यैरस्त्रयुक्तैः सुतेजितैः । ७५५०
अन्योन्यं कुरुशार्द्दूल शक्रकेशवयोर्महान् । ततो वज्रायुधो वज्रमशनिञ्च पुनः पुनः ।
मुमोच गरुडे राजन्नैरावणरिपौ नृप । वज्राशनिनिपातांस्तान् सेहे शक्रस्य नागहा ।
अवध्यो बलिनां श्रेष्ठो निसर्गेण तपोबलात् । मुमोच पत्त्रमेकैकं मानयन्नशनिं तदा ।
वज्रञ्च देवराजो वै भ्रातुः कश्यपसम्भवः । आक्रम्यमाणस्तार्क्ष्येण न्यमज्जन्नृपते गिरिः ।
विवेश धरणीं राजन् शीर्य्यमाणः समन्ततः । चुकूज वक्रमानेन कृष्णस्य स तु पर्व्वतः । ७५५५
तमब्रवीत्ततः कृष्णः किञ्चिद्दुःखसमन्वितः । तं मुक्त्वा गरुडेनाथ तस्थौ देवो विहायसि ।
प्रद्युम्नञ्च तदोवाच सर्व्वलोकैकभावनः । इतो द्वारवतीं गत्वा रथमानय माचिरं ।
स दारुकं महाबाहो मत्तेजोबलमाश्रितः । वक्तव्यो बलभद्रश्च राजा च कुकुराधिपः ।
श्वो जित्वेन्द्रमागमिष्ये द्वारकामिति मानद । तथेत्युक्त्वा तु धर्म्मात्मा प्रद्युम्नः पितरं विभुः ।
गत्वा यथोक्तमुक्त्वा च यादवेन्द्रबलावुभौ । नाडिकान्तरमात्रेण पुनस्तं देशमाययौ । ७५६०
दारुकेण समायुक्तं रथमास्थाय भारत ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे द्वात्रिंशदधिकशततोऽध्यायः ॥ १३२ ॥

॥ वैशम्पायन उवाच ॥ तमारुह्य रथं कृष्णः पारिपात्रं गिरिं ययौ । यत्रैरावणमास्थाय स्थितः सुरपतिः प्रभुः ।
पारिपात्रो गिरिश्रेष्ठो दृष्ट्वायान्तं जनार्द्दनं । शाणपादसमो भूत्वा प्रविवेश वसुन्धरां ।
प्रियार्थं वासुदेवस्य प्रभावज्ञो महात्मनः । तस्य प्रीतो हृषीकेशः पर्व्वतस्य जनाधिप ।
ततः प्रयान्तं युद्धार्थमच्युतं कुरुनन्दन । सपारिजातो गरुडः पृष्ठतोऽनुययौ बली । ७५६५
प्रद्युम्नः सात्यकिश्चापि गरुडस्थौ महाबलौ । गतावुभौ रक्षणार्थं पारिजातमरिन्दमौ ।
ततोऽस्तमगमत् सूर्य्यः प्रवृत्ता रजनी नृप । उपस्थितं पुनर्युद्धं शक्रकेशवयोः प्रभो ।
सुप्रहारहतं दृष्ट्वा विष्णुरैरावणं गजं । नातिकल्यं महातेजा देवराजानमब्रवीत् ।
गरुडाभिहतः पूर्व्वं नातिकल्यो गजोत्तमः । ऐरावणो महाबाहो रात्रिश्च समुपागता ।
श्वः प्रभाते पुनः कामं प्रवर्त्तस्व यथेच्छसि । एवमस्त्विति कृष्णाञ्च देवराजोऽब्रवीत् प्रभुः । ७५७०

उवास पुष्कराभ्याशे देवराजः पुरन्दरः । सजं गिरिमयं कृत्वा धर्म्मात्मा नृपसत्तम ।
ब्रह्मा तत्राजगामाथ कश्यपश्च महानृषिः । अदितिश्चैव सर्व्वे च देवा मुनय एव च ।
साध्या विश्वे च कौरव्य नासत्यावश्विनौ तथा । आदित्याश्चैव रुद्राश्च वसवश्च जनेश्वर ।
नारायणस्य पुत्रेण सत्यकेन च भारत । सहोवास गिरौ रम्ये पारियात्रे प्रहृष्टवत् ।
यः स शाणप्रमाणोऽस्य भक्त्या समभवन्नृप । वरं प्रादात्ततस्तस्य पर्व्वतस्य सतां गतिः । ७५७५
शाणपाद इति ख्यातो भविष्यसि महागिरे । पुण्येनार्द्धेन तुल्यश्च पुण्यो हिमवतः शुभः ।
एवमेव च भूमिष्ठो भव पर्व्वतसत्तम । मेरुणा स्पर्द्धमानो हि बहुधातुसमायुतः ।
तथा दत्त्वा वरं तस्य पर्व्वतस्य तु केशवः । दध्यौ गङ्गां सरिच्छ्रेष्ठां नमस्कृत्वा वृषध्वजं ।
अथाययौ विष्णुपदी स्मृता कृष्णेन भारत । संपूज्य तां ततः कृष्णः स्नातस्तस्यामधोक्षजः ।
उदकञ्च गृहीत्वेशो बिल्वञ्च हरिरव्ययः । देवमावाहयामास रुद्रं सर्व्वेश्वरेश्वरं । ७५८०
ततः प्राप्तो महादेवः सोमः स प्रवरो विभुः । तस्यावुपरि बिल्वस्य तथा गङ्गोदकस्य च ।
तं पारिजातकुसुमैरर्च्चयामास केशवः । तुष्टाव वाग्भिरीशेशं सर्व्वकर्त्तारमीश्वरं ।

॥ श्रीकृष्ण उवाच ॥ रुद्रो देव त्वं रुदनाद्द्रावणाच्च गोहृयमाणो द्रावणाच्चातिदेवः । भक्तं भक्तानां वत्सलं वत्सलानां कीर्त्त्या युक्तेति त्वाऽश्च प्रभवाम्यन्तरेण ।
ग्राम्यारण्यानां त्वं पतिस्त्वं पशूनां ख्यातो देवः पशुपतिः सर्व्वकर्म्मा । नान्यस्त्वत्तः परमो देवदेव जगत्पतिः सुरवीरारिहन्ता ।
यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च । तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो विद्वांसः सर्व्वशास्त्रार्थतज्ज्ञाः । ७५८५
भूतं यस्माज्जगदत्यन्तघोरं त्वत्तोऽव्यक्तादक्षरादक्षरेश । तस्मात्त्वामाहुर्भव इत्येव भूतं सर्व्वेश्वराणां महतामत्युदारं ।
यस्माज्जितैरभिषिक्तोऽसि सर्व्वैर्देवासुरैः सर्व्वभूतैश्च देव । महेश्वरं विश्वकर्म्माणमाहुस्त्वां वै सर्व्वे तेन देवातिदेव ।
पूज्यो देवैः पूज्यसे नित्यदा वै श्रेयस्कामैः काङ्क्षिभिर्वरदामेयवीर्य्यः । तस्माद्विख्यातो भगवान्देवदेवः सतामिष्टः सर्व्वभूतात्मभावी ।
भूमित्रयाणां देव यस्मात् प्रतिष्ठा पुनर्ल्लोकानां भावनोऽमेयकीर्त्तिः । त्र्यम्बकेति प्रथमं तेन नाम तवाप्रमेयस्त्रिदशेशनाथ ।
शर्व्वः शत्रूणां शासनादप्रमेयस्तथा भूयः शासनाच्चेश्वरेण । सर्व्वव्यापित्वाच्छङ्करत्वाच्च सद्भिः शब्दस्येशान् श्रीकराकोग्रतेजाः । ७५९०
सम्भक्तानां नित्यदा यत् करोषि शमं श्लाघ्यान् यज्ञनेषोःमनस्तान् । तस्माद्देव शङ्करोऽस्यप्रमेयः सद्भिर्द्विजैः कथ्यसे सर्व्वनाथ ।
दत्तः प्रहारः कुलिशेन पूर्व्वं तवेशान सुरराज्ञाऽतिवीर्य्य । कण्ठे नैल्यं तेन ते यत् प्रवृत्तं तस्मात् ख्यातस्त्वं नीलकण्ठेतिकल्यः ।
यल्लिङ्गाङ्कं यच्च लोके भगाङ्कं सर्व्वं सोमस्त्वं स्थावरं जङ्गमञ्च । प्राहुर्विप्रास्त्वां गुणिनं तत्त्वशास्त्रयाविष्योयामभिकां लोकधात्रीं ।
वेदैर्गीता सा हि तत्त्वं प्रसूता यश्चो दीक्षाणां योगिनां चातिरूपः । नात्यद्भुतं त्वत्समं देव भूतं भूतं भव्यं भवदिवाच नास्ति ।
अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्व्वे ब्रह्मणश्चातिवीराः । त्वत्तः सर्व्वे देवदेव प्रसूता एवं सर्व्वेशः कारणात्मात्वमीशः । ७५९५

इति संस्तूयमानस्तु भगवान् गोवृषध्वजः । प्रसार्य्य दक्षिणं हस्तं गोविन्दमिदमब्रवीत् ।
मनोषितानामर्थानां प्राप्तिस्तेऽस्तु सुरोत्तम । पारिजातस्य हर्त्ताऽसि मा भूत्ते मनसो व्यथा ।
यदा मैनाकमाश्रित्य तपस्त्वमकरोः प्रभो । तदा दत्तं वरं कृष्ण संस्मृत्य स्थैर्य्यमाप्नुहि ।
अवध्यस्त्वमजेयश्च मत्तः शूरतरस्तथा । भविताऽसीत्यवोचं यत्तत्तथा न तदन्यथा ।
यः संस्तवेन मां कश्चित् स्तोष्यत्यमरसत्तम । त्वया कृतेन धर्म्मज्ञ धर्म्मभाक् स भविष्यति । ७१००
समरे च जयं विष्णो प्राप्य पूजां तथोत्तमां । बिल्वोदकेश्वरो नाम भविताऽहमिहानघ ।
देशे त्वया स्थापितो वै देव सिद्धोपयाचनः । इहस्थोपोषितो विद्वान् भक्तिमान्मम केशव ।
त्रिरात्रमीप्सितान् लोकान् गमिष्यति जनार्द्दन । अविन्ध्या नाम देशेऽस्मिन् गङ्गा चैव भविष्यति ।
गङ्गास्नानसमं स्नानं सम्यक्तो भविता तथा । षट्पुरं नाम नगरं दानवानां जनार्द्दन ।
अथान्तर्द्धरणीदेशे तथाक्रम्य महाबलाः । एते हिंस्रा दुरात्मानो जगतो देव कण्टकाः । ७१०५
कृष्णा वसन्ति गोविन्द मानावस्य महागिरेः । अवध्या देवदेवानां वरेण ब्रह्मणोऽनघ ।
मानुषान्तरितस्तस्मात्त्वमेताञ्जहि केशव । एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ।
परिष्वज्य महात्मानं वासुदेवं जनाधिप । ततो याते महादेवे प्रभातायां नराधिप ।
तस्यां निशायां गोविन्दो भूयः पर्व्वतमब्रवीत् । त्वदधः पर्व्वतश्रेष्ठ निवसन्ति महासुराः ।
ते निरुद्धा मया चात्र जगतो हितकाम्यया । निर्गमिष्यन्ति ते नैव मया रुद्धा महाबलाः । ७११०
द्वारे निरुद्धे तत्रैव विनङ्क्ष्यन्ति ममाज्ञया । त्वयि सन्निहितश्चाहं भविष्यामि महागिरे ।
अधिष्ठाय महाघोरांस्त्रिवत्स्यामि च पर्व्वत । आराध्यत्यूर्द्ध्वबाहुश्च यस्त्वां पर्व्वतसत्तम ।
गोसहस्रप्रदानस्य फलं प्राप्स्यति शाश्वतं । मत्तोऽस्मभिस्य प्रतिमां कारयित्वेह भक्तितः ।
शुश्रूषिष्यन्ति ये नित्यं मम यास्यन्ति ते गतिं । इति तं पर्व्वतं कृष्णो वरदोऽनुगृहीतवान् ।
तदाप्रभृति देवेशस्तत्र सन्निहितोऽच्युतः । पाषाणैः प्रतिमां तत्र कारयित्वा च कौरव । ७११५
शुश्रूषन्ति कृतात्मानो विष्णुलोकाभिकाङ्क्षिणः ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १२३ ॥
॥ वैशम्पायन उवाच ॥ ततो रथवरं कृष्णः समारुह्य महामनाः । बिल्वोदकेश्वरं देवं नमस्कृत्य ययौ नृप ।
महेन्द्रमाह्वयामास रथस्थो मधुसूदनः । सत्कृतं पुष्कराभ्यासे सर्व्वैर्देवगणैः सह ।
ततः शक्रो जयन्तोऽथ हरिभिर्युक्तमुत्तमं । आरुरोह रथं देवः सर्व्वकामप्रदः सतां ।
तयोरथस्थयोर्युद्धमभवत् कुरुनन्दन । देवयोर्द्वैरयोगेन पारिजातकृते तदा । ७१२०
ततर्द्द तरसा विष्णुर्बाणैः शत्रुबलार्द्दनः । सैन्यानि देवराजस्य बाणजालैरजिह्मगैः ।
उपेन्द्रं न महेन्द्रोऽथ नैव विष्णुः सुरेश्वरं । ताडयामासतुर्व्वीरौ शस्त्रैः शक्तावपि प्रभो ।
एकैकमस्त्रं दशभिर्म्महेन्द्रस्य जनार्द्दनः । विव्याध विशिखैस्तीक्ष्णैरयुतैर्नैर्नेश्वर ।
सैन्यान्यपि च देवेन्द्रः शरैरमरसत्तमः । छादयामास राजेन्द्र घोरैरग्न्याभिमन्त्रितः ।

वज्री बाणसहस्रैश्च कृष्णो गजमवाकिरत् । गरुडश्च महातेजा बलभिद्धरिवाहनः । ७१२५
भूमिष्ठाभ्यां रथाभ्यान्तौ तदहः प्रभुदारणौ । युयुधाते महात्मानौ नारायणसुराधिपौ ।
चकम्पे वसुधा कृत्स्ना नौर्जलस्थेव भारत । दिशो दाहेन दिग्दशाः संवृताश्च समन्ततः ।
चेलुर्गिरिवराश्चैव पेतुश्च शतशो द्रुमाः । पेतुश्च धरणीपृष्ठे मर्त्या धर्म्मगुणान्विताः ।
निर्घाताः शतशश्चैव पेतुस्तत्र नराधिप । जग्मुश्च सरितः सर्व्वाः प्रतिस्रोतो विशाम्पते ।
विश्वग्वाता ववुश्चैव पेतुरुल्काश्च निष्प्रभाः । मुहुर्म्मुहुर्भूतगणा रवनादेन मोहिताः । ७१३०
प्रजज्वाल जले चैव वह्निर्जनपदेश्वर । युयुधुश्च घनैः सार्द्धं घना नभसि सर्व्वतः ।
ज्योतींषि शतशः पेतुः स्वर्गाच्च धरणीतले । दिशां गजाः संक्षुभिता नागाश्च धरणीतले ।
गर्द्दभारुणसंस्थानैश्छिन्नाभ्रैरावृतं नभः । विनदद्भिर्म्महारावैरुल्काशोणितवर्षिभिः ।
न भूर्न द्यौर्न गगनं नरेन्द्रसुप्रभाभवत् । स्वस्थाने सुरवीरौ तु दृष्ट्वा युद्धगतौ तदा ।
जेपुर्म्मुनिगणा मन्त्रान् जगतो हितकाम्यया । ब्राह्मणाश्च महात्मानो व्यतिष्ठंस्तेषु सत्वराः । ७१३५
ततो ब्रह्मा महातेजाः कश्यपं वाक्यमब्रवीत् । गच्छ वध्वा महादित्या पुत्रौ वारय सुव्रत ।
स तथेति तदा देवमुक्त्वा पद्मभवं मुनिः । जगाम रथमारुह्य तस्थौ नरवरान्तिके ।
स्थितन्तु कश्यपं दृष्ट्वा महादित्या तदान्तरा । उभौ रथाभ्यां धरणीमवतीर्णौ महाबलौ ।
न्यस्तशस्त्रौ तु तौ वीरौ ववन्दतुररिन्दमौ । पितरौ धर्म्मतत्त्वज्ञौ सर्व्वभूतहिते रतौ ।
उभौ ग्रहाय हस्ताभ्यामदितिस्त्वब्रवीद्वचः । प्रमोदराविवेवं किमन्योन्यं हन्तुमिच्छथः । ७१४०
स्वल्पमर्थं पुरस्कृत्य प्रवृत्तमतिदारुणं । सदृशं नेति पश्यामि सर्व्वथा मम पुत्रयोः ।
श्रोतव्यं यदि मातुश्च पितुश्चैव प्रजापतेः । न्यस्तशस्त्रौ स्थितौ भूत्वा कुरुतं वचनं मम ।
तथेत्युक्त्वा तु तौ देवौ स्नातुकामौ महाबलौ । गङ्गां जग्मतुरेवाथ कथयन्तौ परस्परं ।
॥ शक्र उवाच ॥ त्वं प्रभुः कृष्ण लोकस्य राज्येऽहं स्थापितस्त्वया । स्थापयित्वा कथं नाम पुनर्व्वामसमन्वरे ।
भ्रातृत्वमुपगम्यैवं ज्येष्ठत्वं प्रतिपूज्य च । कथं कमलपत्राक्ष निर्व्वाणं कर्त्तुमर्हसि । ७१४५
स्नात्वा तु जाह्नवीतोये पुनरभ्यागतौ नृप । यत्रादितिः कश्यपश्च महात्मानौ दृढव्रतौ ।
प्रियसङ्गमनं नाम तं देशं मुनयोऽवदन् । यत्र तौ सङ्गतौ चोभौ पितृभ्यां कमलेक्षणौ ।
ततः शक्रस्य कौरव्य दत्त्वा वाचाऽभयं तदा । यत्र देवगणाः सर्व्वे समेता धर्म्मचारिणः ।
ततो ययुर्विमानैस्तु देवाः सर्व्वे त्रिपिष्टपं । श्रद्धया परमया युक्तास्तेषामेवानुरूपया ।
कश्यपश्चादितिश्चैव तथा शक्रजनार्द्दनौ । विमानमेकमारुह्य गता राजंस्त्रिपिष्टपं । ७१५०
ते शक्रसदनं प्राप्ता रम्यं सर्व्वगुणान्वितं । जग्मुरेकत्र कौरव्य मुदिता धर्म्मचारिणः ।
शची तु कश्यपं पत्न्या सहितं धर्म्मवत्सला । उपाचरन्महात्मानं सर्व्वभूतहिते रतं ।
ततस्तस्यां प्रभातायां रजन्यामब्रवीद्धरिं । अदितिर्द्धर्म्मतत्त्वज्ञा सर्व्वभूतहितङ्करं ।
उपेन्द्र द्वारकां गच्छ पारिजातं नयस्व च । वध्वाः सम्प्रापयस्वेमं पुष्पकं हृदयेप्सितं ।

पुण्यके सत्यया प्राप्ते पुनरेव त्वया ततः । नन्दने पुरुषश्रेष्ठ स्थाप्यः स्थाने यथोचिते । ७१५५
एवमस्त्विति कृष्णेन देवमाता यशस्विनी । उक्ता धर्म्मगुणैर्युक्ता नारदेन महात्मना ।
ततोऽभिवाद्य पितरं मातरञ्च जनार्द्दनः । महेन्द्रं सह शच्या च प्रतस्थे द्वारकां प्रति ।
ददौ कृष्णाय पौलोमी नियोगात् कुरुनन्दन । सर्व्वासामेव कृष्णस्य भार्य्याणां धर्मचारिणी ।
दिव्यानां सर्व्वरत्नानां वाससाञ्च मनस्विनी । नानारागविचित्राणां सहैवाजरतामपि ।
भार्य्याणाञ्च सहस्राणि यानि षोडश माधवे । प्रतिगृह्य महातेजाः प्रययौ द्वारकां प्रति । ७१६०
संपूज्यमानो ह्यमरैः सुकर्म्मा पुण्यकर्म्मभिः । ससात्यकिः सपुत्रश्च प्राप्तो रैवतकं गिरिं ।
स तत्र स्थापयित्वा तु पारिजातं वरद्रुमं । सात्यकिं प्रेषयामास द्वारकां द्वारमालिनीं ।
॥ कृष्ण उवाच ॥ पारिजातमिहानीतं महेन्द्रभवनान्मया । निवेदय महाबाहो भैमानां भैमवर्द्धन ।
अद्य द्वारवतीञ्चैव पारिजातं वरद्रुमं । प्रवेशयिष्ये नगरे शोभा प्रक्रियतां शुभा ।
इत्युक्तः सात्यकिर्गत्वा तथोक्त्वा पुनरागतः । कुमारैरपरैः सार्द्धं साम्बप्रभृतिभिः प्रभो । ७१६५
ततोऽप्यतः पारिजातमारोप्य गरुडे तदा । प्रद्युम्नो द्वारकां रम्यां विवेश रथिनाम्वरः ।
शैव्यासुग्रीवयुक्तेन रथेनानुययौ हरिः । तस्यानु रथमुख्येन सात्यकिः साम्ब एव च ।
ये त्वन्ये नृप वार्ष्णेया यानैर्व्विविधैस्तथा । ययुः प्रहृष्टास्तत् कर्म्म पूजयन्तो महात्मनः ।
सात्यकाद्दिग्भरं श्रुत्वा यादवा नागरास्तथा । विस्मयं परमं जग्मुरप्रमेयस्य कर्म्मणा ।
तं दिव्यकुसुमं वृक्षं दृष्ट्वा मर्त्यनिवासिनः । राजन्न तत्पुर्वेहृष्टाः पश्यमाना महोदयं । ७१७०
तदद्भुतमचिन्त्यञ्च मरकेलिकिलापाण्डरं । वृक्षोत्तमं पश्यतां वै वृद्धानामगमज्जरा ।
येऽन्धाः सचक्षुषः सर्व्वे सम्बभूवुः क्षणादिव । विरोगा रोगिणश्चासन् घ्रात्वा गन्धं वनस्पतेः ।
लपन्तः कोकिलाः श्वेताः श्रुत्वा मर्त्यनिवासिनः । बभूवुर्हृष्टमनसो ववन्दुश्च जनार्द्दनं ।
नानाविधानि वाद्यानि गेयानि मधुराणि च । शुश्रुवुस्तस्य वृक्षस्य नातिदूरगता नराः ।
योऽयं संकल्पयामास गन्धं हृद्यं नरस्तदा । स तमेव समाजघ्रौ पारिजातसमुद्भवं । ७१७५
ततः प्रविश्य रम्यान्तु द्वारकां यदुनन्दनः । वसुदेवं महात्मानं ददृशे देवकीन्तदा ।
कुकुराधिपतिञ्चैव बलं भ्रातरमेव च । वृद्धांश्च यादवानन्यान् मानार्हानमरोपमान् ।
विसृज्य तान् वै भगवाननादिर्निधनोऽच्युतः । संपूज्य च यथान्यायं स्वमेव भवनं गतः ।
स सत्यभामया सार्धं विवेश मधुसूदनः । पारिजातं तरुश्रेष्ठं ददाय गदपूर्व्वजः ।
सा देवी पूजयामास प्रहृष्टा वासवानुजं । प्रतिजग्राह तच्चापि पारिजातं महाद्रुमं । ७१८०
मनोषितेन स तरुरूपो भवति भारत । महत्त्वाद्वासुदेवस्य तदद्भुतमभून्महत् ।
कदाचिद्द्वारकां सर्व्वां प्रच्छादयति भारत । कदाचिद्धस्तमात्रस्तु भवत्यङ्गुष्ठसन्निभः ।
ननन्द सत्या कौरव्य देवी प्राप्तमनोरथा । पुण्यकार्थञ्च सम्भारान् सम्यक्संमुपचक्रमे ।
यानि द्रव्याणि कौरव्य जम्बुद्वीपे तु कानिचित् । योग्यानि तानि कृष्णेन संहृतानि महात्मना ।

मुनिं तदा संस्तुतवान् स नारदं जनार्द्दनः सर्व्वगुणोदितं वशी । प्रतिग्रहार्थं व्रतकस्य सत्यया यथोपदिष्टः स पुरन्दरा
नुजः । ७१८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे चतुस्त्रिंशदधिकशततोऽध्यायः ॥ १२४ ॥

॥ वैशम्पायन उवाच ॥ अथ कृष्णस्य कौरव्य ध्यातमात्रे तपोधनः । आजगाम मुनिश्रेष्ठो नारदो वदतांवरः ।
तं पूजयित्वा विधिवद्वासुदेवो विशाम्पते । प्रतिग्रहार्थं विधिवच्छ्रीमानभ्यनिमन्त्रयत् ।
ततः काले च संप्राप्ते स्नातं देवो महामुनिं । संपूज्य माल्यैर्गन्धैश्च भोजयामास भारत ।
सार्व्वकामिकमन्नाद्यं सर्व्वभूतहृदव्ययः । सत्यया प्रियया सार्द्धं प्रहृष्टेनान्तरात्मना ।
पुष्पदामावसज्याथ कण्ठे कृष्णस्य भाविनी । बबन्ध कृष्णं सुभगा पारिजाते वनस्पतौ । ७१९०
अद्भिर्द्ददौ नारदाय ततोऽनुज्ञाप्य केशवं । देवी धेनुसहस्रस्य काञ्चनस्य च पर्व्वतं ।
हिरण्यरूप्यमिश्रस्य मणिरत्नयुतस्य च । तिलमिश्रस्य च तथा धान्यैरन्यैर्युतस्य च ।
प्रतिगृह्य तु तत् सर्व्वं नारदो मुनिसत्तमः । प्रहृष्टो वदतां श्रेष्ठो मुक्त्वा केशवमब्रवीत् ।
भोः केशव मदीयस्त्वमद्भिर्दत्तोऽसि सत्यया । स त्वं मामनुगच्छस्व कुरुष्व यद्ब्रवीम्यहं ।
प्रथमः कल्प इत्येवमब्रवीन्मधुसूदनः । अजन्ममनुवव्राज नारदश्च जनार्द्दनः । ७१९५
परिहासान् बहुविधान् कृत्वा मुनिवरस्ततः । तिष्ठस्व गच्छामीत्युक्त्वा परिहासविचक्षणः ।
अपनीय ततः कण्ठात् पुष्पदामैनमब्रवीत् । कपिलां गां सवत्सां भो निष्क्रयार्थं प्रयच्छ मे ।
तिलकृष्णाजिनं स्वर्पं प्रयच्छ त्वञ्च काञ्चनं । एषोऽत्र निष्क्रयः कृष्ण विहितो वृषकेतुना ।
तथेत्युक्त्वा हृषीकेशस्तथा चक्रे जनाधिप । उवाच तं मुनिश्रेष्ठं हसित्वा मधुसूदनः ।
वरं वरय धर्म्मज्ञ यस्ते नारद काङ्क्षितः । तव दाताऽस्मि धर्म्मज्ञ परा प्रीतिर्हि मे त्वयि । ७२००
॥ नारद उवाच ॥ नित्यमेवास्तु मे प्रीतो भवान् विष्णो सनातन । त्वत्प्रभावात्तु सालोक्यं व्रजेयं ते महामते ।
अयोनिजो भवेयञ्च नारायण सताकृते । भवेयं ब्राह्मणश्चैव देव जात्यन्तरेष्वहं ।
एवमस्त्विति तं देवो विष्णुः प्रोवाच भारत । तुतोष च ततो धीमान्नारदो मुनिसत्तमः ।
षोडशस्त्रीसहस्राणि विष्णोरतुलतेजसः । निमन्त्रितानि कौरव्य सत्यया हरिकान्तया ।
तासां ददौ सन्नियोगमेकैकं हरिवल्लभा । शच्या यो वासुदेवस्य पुरा दत्तो नराधिप । ७२०५
पारिजातो वसंस्तत्र ततः प्रवृत्ते तदा । आज्ञया वासुदेवस्य नारदेन महात्मना ।
निमन्त्रिता गणाः सर्व्वे केशवेन महात्मना । विभूतिं पारिजातस्य ददृशुः कुरुनन्दनं ।
पाण्डवांश्चानयामास सहैव पृथया हरिः । द्रौपद्या च महातेजास्तथैव च सुभद्रया ।
श्रुतश्रवाञ्च ससुतां भीष्मकं ससुतं तथा । अन्यानपि च कौरव्य मित्रसम्बन्धिबान्धवान् ।
रेमे च सह पार्थेन फाल्गुनेन जनार्द्दनः । सान्तःपुरो महातेजाः परमर्द्ध्या वसन्नृप । ७२१०
संवत्सरे ततो याते केशिहाऽमरसन्निभः । पारिजातं पुनः स्वर्गमनयत्सर्व्वभावनः ।
तत्रादितं कश्यपञ्च दृष्ट्वा स्वपितरौ प्रभुः । शक्रेण सहितो धीमानप्रमेयपराक्रमः ।

तमुवाचादितिर्व्वाता प्रणतं मधुसूदनं । सौभ्रात्रमेव वां नित्यं भवत्वमरसत्तम ।
मनोरथं मनैवं त्वं पूरयस्व जनार्द्दन । तथाऽस्त्वित्यब्रवीत्कृष्णस्ततो मातरमात्मवान् ।
आमन्त्रयित्वा पितरौ देवराजानमब्रवीत् । वासुदेवो महातेजाः कालप्राप्तमिदं वचः ।
महादेवेन देवेश सन्दिष्टोऽस्मि महात्मना । अन्तर्भूमितले ऽवध्यानसुरान् प्रति मानद ।
तदितो द्वारकाश्रेण हन्ताऽहमसुरोत्तमान् । तवोपरिष्टात् ख्यातश्च प्रवरेण महात्मना ।
जयन्तेन च वीरेण दानवानां जिघांसया । एकोऽत्र मानुषो देवो देवपुत्त्रस्तथाऽपरः ।
अवध्याः किल देवैस्ते ब्रह्मणो वरदर्पिताः । अस्माभिः किल हन्तव्या मानुषत्वमुपागतैः ।
तथेति कृष्णं स हरिः प्रीतरूपस्तदाऽब्रवीत् । सस्वजातेऽथ तौ देवावन्योन्यं जनमेजय ।
ददौ किरीटं कृष्णाय शक्रोऽमृतसमुद्भवं । प्रीतात्मा कुरुशार्दूल कुण्डलद्वयमेव च ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पञ्चविंशदधिकशततोऽध्यायः ॥ १२५ ॥

॥ जनमेजय उवाच ॥ पुण्यकानां समोत्पत्तिं कथयस्व तपोधन । द्वैपायनप्रसादेन सर्व्वं हि विदितं तव ।
॥ वैशम्पायन उवाच ॥ उमया पुण्यकविधिर्नरेन्द्रोत्पादितः पुरा । शृणु येन विधानेन लोके धर्म्मभृताम्वर ।
स्वर्गान्नीते पारिजाते कृष्णेनाक्लिष्टकर्म्मणा । यथौ द्वारवतीं धीमान्नारदो मुनिसत्तमः ।
देवासुरे नृपश्रेष्ठ संग्रामे समुपस्थिते । षट्पुरस्य बधे घोरे महादेवाश्रयेऽनघ ।
कृष्णेन सहितं विप्रं नारदं धर्म्मवित्तमं । आसीनं परिपप्रच्छ रुक्मिणी भैष्मकी नृप ।
ततो जाम्बवती देवी सत्यभामा च भाविनी । गान्धारराजपुत्त्री च योगयुक्ता नराधिप ।
देव्यश्च नृप कृष्णस्य सर्व्वशोऽन्या वै समागताः । कुलशीलगुणोपेता धर्म्मशीलाः पतिव्रताः ।
॥ रुक्मिण्युवाच ॥ मुने धर्म्मभृतां श्रेष्ठ सर्व्वज्ञ वदताम्वर । उत्पत्तिं पुण्यकानां त्वं वक्तुमर्हसि सुव्रत ।
विधिश्च फलयोगश्च दानं कालं तथैव च । कौतूहलं नः परमं तच्छिन्धि द्विपदाम्वर ।
॥ नारद उवाच ॥ शृणु वैदर्भि धर्म्मज्ञे सपत्नीभिः सहानघे । पुण्यकानां विधिः प्रोक्तो यथा देवि पुरा मया ।
चचारोमा व्रतं देवी पुण्यकार्थं शुचिव्रता । व्रतावसानेऽथ तथा सख्यो देवि निमन्त्रिताः ।
अदित्याद्याः सुताः सर्व्वा दक्षस्याक्लिष्टकर्म्मणः । पौलोमी च शची देवी ख्याता लोके पतिव्रता ।
रोहिणी च महाभागा सोमस्य दयिता सती । फाल्गुनी च तथा पूर्व्वा रेवती च विशाम्पते ।
तथा शतभिषा चैव मघा च कुरुनन्दन । एताभिर्हि महादेवी पूर्व्वमाराधिता सति ।
गङ्गा सरस्वती चैव वेणगङ्गा च निम्नगा । तथा वैतरणी चैव गण्डकी चैव भारत ।
अन्याश्च सरितो रम्या लोपामुद्रा च भारत । सत्यस्त्वान्या जगद्देवि धारयन्ति हि ताः शुभाः ।
शुभाश्च गिरिनन्दिन्यो वह्निकन्याश्च सुव्रताः । स्वाहा चाग्निप्रिया देवी सावित्री च यशस्विनी ।
ऋद्धिः कुवेरकान्ता च शचीशमहिषी तथा । भार्य्या पितृपतेश्चैव वसुपत्न्यस्तथैव च ।
श्रीर्धृतिस्तथा कीर्त्तिराशा मेधा च सुव्रता । प्रीतिर्मतिश्च ख्यातिश्च सन्नतिश्च तपोधनाः ।
देव्यः सत्यस्तथैवान्याः सर्व्वभूतहिते रताः । तासां व्रतावसाने च पूजाथनेऽम्बिका तथा ।

तिलरत्नमयं दत्त्वा पर्व्वतं सर्व्वधान्यवत्। वासोभिर्व्वहुभिर्मुख्यैर्नानारागैः सुमध्यमे ।
प्रतिगृह्य च तां पूजां दत्तां देव्या तपोधनाः । उपविष्टाः कथाश्चित्राः कुर्व्वत्यो भर्त्तृदेवते ।
पुण्यकार्थं कथास्तासामासन् देवी प्रशंस याः । विधिश्च पुण्यकस्याथ सतीनां भर्त्तृदेवते ।
तासां मतेन साध्वीनां सर्व्वासां सोमनन्दिनी। पर्य्यपृच्छदुमां देवीं पुण्यकानां विधिम्वरं ।
उमा तासां प्रियार्थन्तु पुण्यकान्यब्रवीत्तदा। समत्वं मम वैदर्भि सर्व्वभूतहिते रता ।
सत्यैव सोमया दत्तः स तदा रत्नपर्व्वतः। प्रतिगृह्य मया चैव हृतो ब्राह्मणसाच्छुभे।
उमा त्वरुन्धतीं साध्वीमामन्त्र्येदमभाषत। शृणु कल्याणि वक्ष्यामि सर्व्वाभिः सहिता शुभे ।
पुण्यकानां विधिं कृत्स्नं यथावदनुपूर्व्वशः। यथा देवि मया दृष्टः पुरा ह्येष विधिः शुभे।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ षड्विंशदधिकशततमोऽध्यायः ॥ १२६ ॥
॥ उमोवाच ॥ सर्व्वज्ञाहं यदा भर्त्तुः प्रसादेन शुचिस्मिते। तदा पुरा मया दृष्टः पुण्यकानां विधिः शुभः।
सनातनः पुण्यविधिरिति बुद्ध्याऽवगम्यतां । महादेवप्रसादेन मया दृष्टस्त्वरुन्धति ।
पुण्यकानि च सर्व्वाणि चीर्णवत्यस्म्यनिन्दिते। अनुज्ञया भगवतो भर्त्तुः सर्व्वस्य धीमतः ।
सतीत्वं धर्म्मचरणं यस्या नित्यमखण्डितं । पुण्यकानां विधिस्तस्याः पुराणे परिकीर्त्तितः ।
दानोपवासपुण्यानि सुकृतान्यप्यरुन्धति । निष्फलान्यसतीनान्तु पुण्यकानि तथा शुभे ।
या वञ्चयन्ति भर्त्तारं योनिदुष्टा ह्यसत्स्त्रियः । न तु तासां पुण्यफलमस्ति ता निरयङ्गमाः ।
साध्व्यो जगद्धारयन्ति सुशीलाः पतिदेवताः । अनन्या धर्म्मनित्याश्च सतां पन्थानमाश्रिता ।
अवाग्दुष्टाः शौचयुक्ता धृतिमत्यः शुभव्रताः । सततं साधुवादिन्यो धारयन्ति जगत् खलु ।
व्याधितः पतितो वाऽपि दीनो वाऽपि कथञ्चन । न त्यक्तव्यः स्त्रिया भर्त्ता धर्म्म एष सनातनः ।
अकार्य्यकारिणं वाऽपि पतितं वाऽपि निर्गुणं । स्त्री पतिन्तारयत्येव यथात्मानं शुभानने ।
योनिदुष्टे स्त्रिया नास्ति प्रायश्चित्तं हतैव सा। वाग्दुष्टे विहितं सद्भिः प्रायश्चित्तं पुरातनैः ।
भर्त्तुश्छन्देन कर्त्तव्यं व्रतकं सर्व्वदा स्त्रिया । उपवासोऽपि वा धन्ये काङ्क्षन्त्या सुकृताकृतिं।
कल्पान्तरसहस्रेषु न स्त्री सा लभते गतिं। तिर्य्यग्योनिसहस्रेषु पच्यते योनिविप्लवात्।
यदि सा नाम मानुष्यं स्त्री लभेदसती सती। चाण्डालयोनौ दुर्म्मेधा जायते कुक्कुराशना ।
भर्त्ता देवः सदा स्त्रीणां सद्भिर्दृष्टस्तपोधने । यस्या हि तुष्यते भर्त्ता सा सती धर्म्मचारिणी।
कौतूहलहतानान्तु स्त्रीणां लोको न शोभनः । भर्त्तर्य्येव मनो यासां सद्भावेन व्यवस्थितं।
कर्म्मणा मनसा वाचा पतिं नातिचरन्ति याः । तासां पुण्यफलं सौम्ये पुण्यकैः समुदाहृतं ।
पुण्यकानां विधिं कृत्स्नमतः प्रवक्ष्यामि शोभने । निबोध सह सर्व्वाभिर्दृष्टो यस्तपसा मया ।
स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । उपवासार्थमथ वा व्रतकार्थं धृतव्रते ।
श्वशुराभ्याञ्च चरणौ सततं संनमस्य च । गृहायौदुम्बरं पात्रं सकुशं साक्षतं तथा ।
गोशृङ्गं दक्षिणे सिच्य प्रतिगृह्णीत तज्जलं । ततो भर्त्तुः सती दद्यात् स्नातस्य प्रयतस्य च ।

आत्मनोऽपि निषेकार्थं ततः शिरसि तज्जलं । त्रैलोक्ये सर्व्वतीर्थेषु स्नानमेतद्‌दाहृतं ।
उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च । स्नानमेतद्धि सामान्यं स्त्रीणां पुंसाञ्च भामिनि ।
अरुन्धति मया दृष्टं तपसा हरतेजसा । असम्यग्विद्धं शयनमासनञ्च तथाविधं ।
स्वयं प्रक्षालनञ्चापि पादयोरनुशब्दितं । अशुप्रपातो रोदश्च कलहश्च हतः सति ।
उपवासाद्‌व्रताच्चापि सद्यो भ्रंशयति स्त्रियः । शुक्लमेव सदा वासः प्रशस्तञ्च वरस्त्रिये । ७०७१
अन्तरैर्बालकश्चैव उपवासे व्रते तथा । पादुकार्थं तयोः कार्य्यं सर्व्वदा व्रतके सति ।
उपवासेऽपि च विधिरेष एव प्रकीर्त्तितः । प्रसादनञ्चाञ्जनञ्च गन्धान् सुमनसस्तथा ।
व्रतके चोपवासे च नित्यमेव विवर्ज्जयेत् । दन्तकाष्ठं शिरःस्नानमुद्वर्त्तनमथापि च ।
विवर्ज्जितं सदा सर्व्वं शौचार्थन्तु विधीयते । बिल्वामलकफलैः शुद्धैः स्नानञ्चैव समाचरेत् ।
प्रक्षालनं वै शिरसः सदा स्त्रीणामशितैर्जलैः । शिरसोऽभ्यञ्जनं नैव नैव तावत् प्रशस्यते । ७०८०
पादयोर्न च गात्रस्य स्नेहनेति स्थितिः स्मृता । गोयानमुष्ट्रयानञ्च खरयानञ्च वर्ज्जयेत् ।
नद्यस्नानञ्च सततं न व्रते ह्युपवासके । नदीजलेन स्नानञ्च प्रशस्तं सोमनन्दिनि ।
शुभे तडागवाप्यादौ विस्तीर्णे जलसंयुते । गत्वा स्नानं प्रशस्तन्तु सदैव खलु सर्व्वथा ।
अलाभे लवरुद्धा स्त्री घटस्नानं समाचरेत् । नवैश्च कुम्भैः स्नातव्यं विधिरेष सनातनः ।
स्नानन्तु शिरसो दृष्टं मया दृष्टं तपोबलात् । ७०८५

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे पुण्यकविधौ सप्तविंशदधिकशततोऽध्यायः ॥ १२७ ॥

॥ उमोवाच ॥ विधिनैतेन कृत्स्नेन स्त्री सदा भर्तृदेवता । चरेत् संवत्सरं दान्ता षण्मासान्मासमेव वा ।
स्त्रियो ह्यावाहयेत् साध्वीरेकादश समाधिना । स्वयञ्चैव विधिर्दृष्टो व्रतकानां मया शुभः ।
अद्भिर्दद्यात् सतोः सर्व्वा या मूलव्रतिनी भवेत् । तासान्तु निष्क्रयो देयः कालदेशानुरूपतः ।
ततो मासान्तशुक्लस्य तिथौ च नवमी तथा । आराधयित्वा कर्त्तव्यं व्रतकस्यापि वर्ज्जनं ।
उपवासमहोरात्रं त्रिरात्रञ्चापि निश्चिता । आदौ चान्ते च कुर्व्वीत व्रतकस्य सुसिद्धये । ७०९०
क्षुरकर्म्म ततो भर्त्तुरात्मनश्चैव कारयेत् । उत्सादनञ्च वपनं तस्मिन्नहनि संस्मृतं ।
ततो विवाहवत् स्नानं विहितं पुण्यके शुभे । मण्डनञ्चैव विहितं माल्यधारणमेव च ।
कुम्भैश्च स्नाप्यमानेयं साध्वी मन्त्रमुदीरयेत् । भर्त्तृपादौ नमस्कृत्य मनसा वाऽथ वा गिरा ।
आपो देव्य ऋषीणां विश्वधात्र्यो दिव्या सदन्त्यो याः शङ्करा धर्म्मराज्यः । हिरण्यवर्णाः पावकाः शिवतमेन रसेन श्रेयसे मां जुषन्तु ।
अपामेष स्मृतो मन्त्रः सर्व्वशान्त्यथ मे शृणु । मन्त्राः पुराणविहिताः स्त्रीणां सर्व्वाङ्गशोभने । ७०९५
शुभा ऽव्यया गुणिनी शुक्रधर्म्मा भर्त्रा सार्द्धं कामदा स्यां वरेण्या । मा कर्म्मणा मनसा वाऽपि वाचा भर्त्तुर्भवेयं दयितो ह्यात्म वशगा ।
सपत्नीनामधि नित्यं भवेयं सुपुत्रा स्यां सुभगा चारुरूपा । सम्पन्नरूपा गुणवादिनी च सर्व्वात्मना ह्यासदरिद्रा भवेयं ।

पतिश्च मे स्यात् सुमुखो मत्प्रतीक्षो नित्यं मद्भक्तः स्वाम्यमर्तिर्भद्रनिश्च। प्रीतिश्च नौ स्याच्चक्रवाकानुरूपा मनो विरागो न भवे माधुत् च स्यात्।

लोकान् साध्वीनामुत्तमानां प्रजेयं याभिः सर्व्वं धार्य्यते विश्वरूपं। उभे कुले याः शुभाः पावयन्ति पितुर्भर्त्तुश्च पति ।त्रये धिताः स्म।

भूमिर्व्वायुर्ज्जलमाकाशमग्निरन्तः क्षेत्रज्ञः प्रकृतिर्यो महांश्च। अहङ्कारश्च मम साक्ष्ये नियुक्ताः स्मरेयुर्मां मुनयो निश्चयव्रतश्च। ७८७०

ये ऽारब्धा देहिनां भौतिकोऽयं विधिः सत्त्वाधिभूतयुक्तैः सबीजैः। सन्त्वेते मे साक्षिणः सर्व्वसंस्था व्रते चास्मिन्निश्चये चापि वृत्ते।

चन्द्रादित्यौ पुण्यसाक्षी यमश्च दिशः सर्व्वा दश चात्मा च मेयं। सन्त्वेते वै साक्षिणः सर्व्व एव व्रते चास्मिन्निश्चये चापि वृत्ते।

मन्त्रैरेतैः पुराणोक्तैः सर्व्वद्रव्याभिमन्त्रणं। व्रतचर्य्याप्रभृति वै पुराणे समुदाहृतं।

स्नात्वाऽथ वाससी दद्यात् भर्त्तुः कर्त्ता स्वयं शुभे। अयात्मकर्त्तितं न स्याच्छुभे शिल्पेन केनचित्।

वासोऽन्यदेव दद्याच्च श्वेतं मुख्यं नवं शुचि। स्वकर्त्तितं सूत्रतन्तु वाससा तेन मिश्रयेत्। ७८७५

ततो द्विजं शुचिं दान्तं ज्ञानविज्ञानकोविदं। भोजयेच्च यथाशक्त्या सह भर्त्रा सुमध्यमे।

ब्राह्मणस्यापि दातव्यं वासोयुग्मं महातपे। शय्या यानं गृहं धान्यं दासी दासस्तथैव च।

अलङ्कारः शक्तितश्च रत्नपर्व्वत एव च। सर्व्वधान्यैः समुन्मिश्रस्तिलैश्च सविशेषतः।

वासोभिश्च प्रतिच्छन्नो नानावर्णैरलङ्कृति। हस्त्यश्वावचयश्चैव देया गौरेव वा ध्रुवं।

लवणप्रतिमां दद्यान्नवनीतस्य चापरां। गुडस्य मधुनश्चैव सुवर्णस्य च शोभनां। ७८८०

तथैव सर्व्वगन्धानां रसानां पृथगेव च। तथा सुमनसां दद्याद् द्रुपस्योडुम्बरस्य च।

फलानाञ्चैव सर्व्वेषां वाससामपि नन्दिनि। चित्रप्रतिकृतिश्चैव काष्ठस्य प्रतिमास्तथा।

शिलाप्रतिकृतिश्चैव दध्नोऽथ पयसस्तथा। सर्पिषा दूर्व्वया चैव याश्चान्यामथभीप्सति।

कालदेशानुरूपञ्च देयं विभवतः सति। अल्पं वा बहुलं वाऽपि भर्त्तुश्छन्देन सर्व्वदा।

तिलपात्रं प्रदातव्यं न देयं न तु शोभने। गौस्त्ववश्यं प्रदातव्या कपिला कांस्यमेव च। ७८८५

कृष्णाजिनञ्च सुभगे सतिलं वाससाऽन्वितं। आदर्शञ्चैव कूर्चञ्च तयाऽजिनमनिन्दिते।

एतद्दत्त्वा सर्व्वकामानाप्नोति वरवर्णिनि। पुरोधिका पुत्रवती सुभगा रूपभागिनी।

सृष्टहस्ता धनाढ्या च स्त्री भवत्यनलेक्षणा। दत्तया लभते चैव कन्या रूपगुणान्विताः।

भवन्ति सुभगाश्चाढ्यास्तथैव च पुरोधिकाः। पुत्रवत्यो धनाढ्याश्च शीलवत्यश्च नित्यदा।

अरुन्धतिकृतं दान्ते मयैतत् प्रथमं व्रतं। उमाव्रतिकमित्येवं ख्यातं सान्तनिकं खलु। ७८९०

एतद्देवोत्तमं स्त्रीणां व्रतं तस्मात् समाचरेत्। सर्व्वकामानवाप्नोति स्त्री दत्त्वैतदनिन्दिते।

एतद्व्रतकराज्ये च देवदेवो वृषध्वजः। पुराऽभिषिषिचे सौम्ये प्रियार्थं मम सर्व्वकृत्।

व्रतकस्यावसाने तु देयं भोज्यञ्च नित्यदा। स्त्रीणां प्रदेयाः कामाश्च मद्गुणः कामदेवयोः।
एकैकस्य प्रदातव्यं व्रतकं वरवर्णिनि। द्व्यक्षातो ब्राह्मणानान्तु देयमन्नं सदक्षिणं।
पायसं तत्र दातव्यं व्रतके नान्यदिष्यते। नात्र प्राणिवधः कार्य्यः पुराणे नियता श्रुतिः।
अथ द्वितीयं वक्ष्यामि व्रतकं सोमसञ्ज्ञकं। महादेवप्रसादेन दृष्टवत्यस्मि यच्छुभे।
सर्व्वाः पुत्रफला नार्य्यः सद्भिरेतदुदाहृतं। तस्मादर्चिमतीं दद्यात् सपुत्रकरकाम् शुभे।
ज्येष्ठाषाढौ शुभौ मासौ पुरोक्तं विधिमाचरेत्। अथवा ज्येष्ठमेवैकमाषाढं वा समाचरेत्।
ततो मासद्वये पूर्णे मासे वा वरवर्णिनि। सपुत्रकरकान्दद्यात् फाणितप्रतिपूरितान्।
सर्पिषः पयसश्चैव दध्नोऽथ मधुनोऽनघे। जलस्य च तथा दद्यात् पूरयित्वा सुमध्यमे।
एकैकं ब्राह्मणायाथ सुव्रताय जितात्मने। सपुत्रकरकान्दद्यात् यावन्तो मनसः प्रियाः।
द्व्येकदुहितरं चेष्टं स्त्रीणां कामकरं ततः। किञ्चिद्द्रव्यं सुताकामा सुतां प्राप्नोत्यसंशयं।
गौर्व्वाऽथ काञ्चनं वाऽपि दक्षिणार्थं प्रशस्यते। विप्रस्याच्छादनं देयमन्नाद्यञ्च शुचिस्मिते।
यज्ञोपवीतं व्रतके दद्यान्नारी शुचिव्रता। सपुत्रकरकाणान्तु विधिनैवं विपश्चिता।
अपत्याख्यानयोगेन ब्राह्मणेभ्यः शुचिव्रता। संवत्सरं सुपूर्णञ्च व्रतधर्म्मानुपालिनी।
करकामपि दद्याच्च पूर्णे संवत्सरे शुभे। अनुज्ञया सदा भर्त्तुः सत्यवादिन्यरुन्धति।
सुवर्णसूत्रं विप्राय कौमुद्यां दातुमर्हति। यज्ञोपवीतं विप्रस्य व्रतकं सार्व्वकामिकं।
यज्ञोपवीतं कनकं दक्षिणाञ्चापि शक्तितः। प्रयच्छतो सती स्त्री हि सर्व्वान् कामान् समश्नुते।
सर्वं न भक्षयेत् किञ्चिन्नारी धान्यमयो फलं। पुष्पं वा नोपभुञ्जीत यावदेवं समाचरेत्।
एकभक्तेन धर्म्मज्ञे पुण्यकं कर्त्तुमर्हति। ब्राह्मणाय ततो देयं भर्त्तुश्च तदनन्तरं।
एवं संवत्सरं कृत्वा सुभगा रूपशालिनी। भवत्यविधवा चैव स्त्री धनाढ्या तथैव च।
वार्त्ताकानि न खादेद्या स्त्री पूर्णं परिवत्सरं। न सा पुत्रविनाशं हि पश्यतीत्यवगम्यतां।
शाकं मृगमांसञ्च नित्यमेव विवर्ज्जयेत्। नाप्नोति मरणं नारी चाप्नोति पतिदैवतां।
अलावू वर्ज्जयेन्नारी तथैवोत्पादिकामपि। कलम्बीं काञ्चनं नाद्याद्या भर्त्तुः सुखमिच्छति।
पूर्णे संवत्सरे दद्यादेकैकं शाकमाहितः। सुदक्षिणा पुत्रवती भवत्यपि पुरोधिका।
स्वयं प्रक्षालयाना स्त्री स्वपादावेवमाहितः। प्रतिष्ठां लभते नित्यमुद्वेगरहिता सती।
दिवा सूर्य्यस्य मार्गेण वर्त्तयेत् स्त्री पतिव्रता। एवं संवत्सरं पूर्णं रात्रावन्नं विवर्ज्जयेत्।
सा जीवपुत्रा सुभगा भवत्यमरवर्णिनी। अधितिष्ठति सर्व्वाश्च सपत्नीर्नात्र संशयः।
पूर्णे संवत्सरे दद्यात् सौवर्णं सूर्य्यमुत्तमं। ब्राह्मणायाभिरूपाय दरिद्राय यशस्विने।
फलानि चाथ पुष्पाणि भक्ष्याण्यपि च सुव्रता। दद्यादनस्तमितके चरितव्रतका तथा।
अथ वाऽस्तंगते सूर्य्ये भुङ्क्ते स्त्री नियता सती। चन्द्रमण्डपूपानि भोज्यानि वरवर्णिनि।
सा दद्यात् काञ्चनञ्चन्द्रं नक्षत्राणि यथार्थपि। अभिरूपाय विप्राय वाचश्च लक्षणान्वितं।

चन्द्रशीतलगात्री सा भवत्यमरवर्णिनी। सुभगा दर्शनीया च पुत्रवत्यपि भाविनी।
पौर्णमास्यान्तु सततं प्राप्ते सोमोदयेऽङ्गना। अर्घ्यं दद्यात् सुमनसां साक्षतं सकुशं तथा।
यावकस्य वलिं कुर्य्याद्दधिना सह संयुतं। एवं या कुरुते नित्यं सर्व्वान् कामानवाप्नुयात्। ७८८५
अदृष्ट्वा या तु नाश्नाति सूर्य्यं नारी पतिव्रता। दुर्द्दिने वाऽथ वा व्यभ्रे सेष्टान् कामानवाप्नुते।
काञ्चनं शक्तितो दद्यात् सा विप्राय मनस्विनी। सुभगा दर्शनीया च भवत्यमरवर्णिनी।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे पुण्यकविधौ अष्टाविंशत्यधिकशततोऽध्यायः॥ १२८ ॥
॥ भगवत्युवाच ॥ निर्व्विष्टव्यं शरीरं यैर्व्रतकैः पुण्यकैरपि। सरन्धति प्रवक्ष्यामि सहैताभिर्व्वरे शृणु।
कृष्णाष्टमीं या चपति स्वांदा मूलफलाशना। ब्राह्मणायैकमशनं सा दत्वा भर्त्तृदेवता।
शुक्लवस्त्रा शुभाचारा गुरुदेवतपूजिका। एवं संवत्सरं कृत्वा ततो दद्याद्द्विजातये। ७८९०
गोवालरज्जुसंयुक्तं चामरस्य ध्वजं तथा। दक्षिणापूर्व्वमिष्टाशं शक्त्या वाऽपि शुचिस्मिते।
ऊर्म्मिमन्तः स्वरालापाः श्रोणिदेशावलम्बिनः। तस्या भवन्ति केशास्तु भक्तिमत्या पिभर्त्तरि।
शिरो निर्व्वेष्टुकामा तु गोमयेन शिरः सती। प्रक्षालयेत्स्नानं कृत्वा पयसा श्रीफलेन च।
गोमूत्रस्य सदा प्राशेच्छिरःस्नानस्य निश्चयेत्। कृष्णां चतुर्द्दशीमेतत् कर्त्तव्यं वरवर्णिनि।
भवत्यविधवा चैव सुभगा विज्वरा तथा। शिरोरोगेषु नेशास्याः शरीरमभितप्यते। ७८९५
दर्शनीयं ललाटं या स्त्री काङ्क्षति शुचिस्मिते। तिथिं प्रतिपदं नित्यं सा चरेदेकभोजना।
पयसा च तथाऽश्नीयाद्यावत् संवत्सरो गतः। ब्राह्मणस्य तथा दद्यात् पट्टं रूप्यमयं शुभं।
ललाटं रूपसम्पन्नं तेनाप्नोत्यङ्गना सती। द्वितीयां स्त्री सदा सौम्ये भुवेरिच्छेत् सुरूपतां।
अनन्तरोपवासेन शाकभक्ताशना सती। ततः संवत्सरे पूर्णे ब्राह्मणान् स्वस्ति वाचयेत्।
फलैः परिणतैः सौम्ये माषाणां दक्षिणान्वितैः। लवणेन च भद्रन्ते घृतनागेन चानघे। ७९००
भ्रुवौ विधाय सा दद्यान्मृणालाभिसमधे शुभे। श्रवणौ रूपसम्पन्नाविच्छन्ती स्त्री सुमध्यमे।
नक्षत्रे श्रवणे प्राप्ते ध्रुवं भुञ्जीत यावकं। ततः संवत्सरे पूर्णे कर्णौ दद्याद्धिरण्मयौ।
घृते प्रक्षिप्य विप्राय पयसा सहिते शुभे। नासामिच्छेल्ललाटान्तां मध्यनावशिवर्णितां।
तिलगुल्मं सदा सिञ्चेद्यावत् पुष्पैर्हि रचितः। अनन्तरोपवासेन सेकाद्यः सलिलैः सदा।
तस्मादादाय पुष्पाणि घृते प्रक्षिप्य दापयेत्। सखी भवेयमिति या स्त्री काङ्क्षेद्वरनेत्रे। ७९०५
अनन्तरं सा भुञ्जीत पयसा वा घृतेन वा। ततः संवत्सरे पूर्णे पद्मपत्राणि पण्डिता।
तथैवोत्पलपत्राणि न्यसेत् क्षीरे शुचिस्मिते। शुक्लमालानि विप्राय ततो दद्यात् सती सति।
कृष्णसारसमानाक्षी स्त्री दृष्ट्वा भवति स्म वै। इच्छेदोष्ठौ चारुरूपौ या स्त्री धर्म्मगुणान्विते।
सा स्वल्पशयेन च पिबेदुदकं वत्सरं सती। अयाचितेन भुञ्जीत नवम्यां धर्म्मभागिनी।
ततः संवत्सरे पूर्णे विद्रुमं दातुमर्हति। तेन विम्बफलाभोष्ठी स्त्री भवत्येव शोभने। ७९१०
सुभगा च वपुःपुत्रधनाढ्या गोमती तथा। या चारुरूपाणिच्छेत दन्तानमरवर्णिनि।

शुक्लाष्टम्यां न या ऽश्नीयाद्व्रतदयमनिन्दिता । ततः संवत्सरे पूर्णे दद्याद्वैदूर्यमयान् शुभान् ।
दन्तान् प्रशिष्य धर्मज्ञे पयस्यतिगुणोदिते । तेन सा तिलपुष्पाभान् दन्तानाप्नोति या सती ।
सौभाग्यमपि चाप्नोति सपुत्रत्वं तथाऽनघे । सर्व्वमेव मुखं कान्तमिच्छन्त्या रुचिरानने ।
या पौर्णमास्यामश्नातु प्राप्ते चन्द्रोदये शुभे । यावकं पयसा सिद्धं दत्त्वा विप्राय भाविनी । ७८८५
ततः संवत्सरे पूर्णे चन्द्रं रूप्यमयं शुभं । पद्मे कुलेऽभिसंन्यस्य ब्राह्मणं स्वस्ति वाचयेत् ।
पूर्णचन्द्रमुखी तेन दानेन स्त्री शुभे भवेत् । स्तनाविच्छति या नारी तपराजफलोपमौ ।
अयाचितं दशम्यां या नित्यमश्नीत वाग्यता । संवत्सरे ततः पूर्णे द्वे बिल्वे काञ्चने शुभे ।
सदक्षिणे ब्राह्मणाय प्रयच्छति धृतात्मने । सौभाग्यं परमाप्नोति बहून् पुत्रांस्तथैव च ।
सदोन्नतस्तनी चैव भवत्यमरवर्णिनि । शातोदरत्वमिच्छेत् चपेदेकान्नभोजना । ७८९०
पञ्चम्यां तु न भोक्तव्यमन्नं तोयेन नित्यदा । ततः संवत्सरे पूर्णे दद्याच्छातोदरं शुभे
कुम्भं सदक्षिणं धन्ये ब्राह्मणाय धृतात्मने । स्तनाविच्छति या नारी रूपयुक्तौ सुमध्यमे ।
द्वादशीं सा चपेत्त्वेव शाकैः सर्वैरनिन्दितैः । संवत्सरे ततः पूर्णे पद्मे रौप्ये ददातु सा ।
ब्राह्मणायाभिरूपाय तथा पद्मद्वयं शुभे । श्रोणीं विशालामिच्छेत् स्त्री चपत्येव सुव्रते ।
त्रयोदशीमेकभक्तमश्नातिवं ह्ययाचितं । ततः संवत्सरे पूर्णे लवणं संप्रयच्छतु । ७८९५
प्रजापतिमुखाकारं कृत्वा तत्र वरानने । काञ्चनं तत्र दातव्यं तदाकारस्य सर्वदा ।
कुङ्कुमेन च धर्मज्ञा शतकैरवचूर्णयेत् । रत्नानि चैव पूर्णानि वासो रक्तञ्च दापयेत् ।
तेन श्रोणीमभिमतां स्त्री सौम्ये प्रतिपद्यते । मधुरां वाचमिच्छन्ती वर्ज्जयेल्लवणं सती ।
संवत्सरं वा मासं वा दापयेल्लवणं ततः । सदक्षिणं ब्राह्मणाय परं माधुर्य्यमिच्छती ।
श्रुतवाक्याच्छतगुणं भवत्यमरवर्णिनी । गूढगुल्फशिरौ पादाविच्छन्त्या सोमनन्दिनि । ७९००
षष्ठ्यां षष्ठ्यां वरारोहे भोक्तव्यः सलिलोदनः । अग्निर्वा ब्राह्मणो वाऽपि न स्प्रष्टव्यः यदा यदा ।
यदा यदा स्पृशेत्तच्च वन्देत तपसाऽन्विते । पादेन न च वै पादं प्रक्षालयितुमर्हति ।
एतैर्नित्यं व्रतैर्युक्ता धर्म्मज्ञा पतिदेवता । कूर्म्मौ रुक्ममयौ दद्याद्ब्राह्मणाय पतिव्रता ।
तौ वराय ब्राह्मणाय स्नापयित्वा घृते ऽनघे । पद्मे चाधोमुखे कृत्वा दद्याद्विप्राय नन्दिनि ।
रत्नैर्द्रव्यैर्मिश्रयित्वा काञ्चनेन स्वलङ्कृते । सर्व्वमेव तु या गात्रमिच्छत्यतिमनोहरं । ७९०५
त्रिरात्रं पुष्पकाले सा करोतु पतिदेवता । कौमुद्यामथ वाषाढ्यां माघ्यामाश्वयुजे तथा ।
मातरं पितरञ्चैव मन्यते ऽतिथिदैवतं । घृतञ्च नित्यं विप्रेभ्यो ददातु लवणं तथा ।
सम्मार्ज्जनं गृहे चैव करोतु पतिदेवता । उपलेपञ्च धर्म्मज्ञा बलिकर्म्म च मानिनि ।
वाग्दुष्टा चैव मा शुभ्रे भवत्वाचार्यपण्डिता । पर्य्यश्नातु च मा किञ्चिदपि शाकं यशस्विनि ।
बलिं सजलतश्च परित्यजतु भाविनी । ७९१०

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि पारिजातहरणे व्रतविधौ अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

॥ उमोवाच ॥ बान्धवान् सगुणान्निच्छन्त्येकभक्तेन नित्यदा । सप्तमीं सप्तमीं नित्यं क्षपयेत् स्त्री पतिव्रता ।
ततः संवत्सरे पूर्णे वृत्तं दद्याद्धिरण्मयं । षड्विधं ब्राह्मणाय शुभवस्त्रमती भवेत् ।
करञ्जे दीपकं दद्यात् सदा या प्रसदावरे । पूर्णे संवत्सरे दद्यात् सौवर्णं दीपकं ततः ।
रूच्या सा स्त्री भवेद्भर्त्तुरिष्टा पुत्रवती तथा । सपत्नीनामधि तथा दीपवज्ज्वलते शुभे ।
या शेषभोजिनी नित्यं नैव च स्यादहङ्कृता । न च स्याद्बहुभाषा वै शौम्ये नित्यञ्च पतिदेवता ।
शौचान्विता च सततं न च रूक्षाभिभाषिणी । श्वश्रूश्वशुरयोर्नित्यं शुश्रूषानिरता सती ।
किं तस्या व्रतकैः कृत्यं किं वा स्यादुपवासकैः । या भर्त्तृदेवता नित्यं सत्यधर्म्मगुणान्विता ।
विधवा स्त्री तु या हि स्याद्दैवयोगात् सती सति । तस्या वक्ष्यामि यो धर्म्मः पुराणोक्तः सुमध्यमे ।
पतिं संकल्पयित्वा सा चित्रस्थं वाऽथ मृण्मयं । तस्य पूजां सदा कुर्य्यात्सततं धर्म्ममनुस्मरेत् ।
तत एवाभ्यनुज्ञाञ्च नित्यं याचेत सुव्रता । व्रतके चोपवासे च भोजने च विशेषतः ।
भर्त्तृलोकान् व्रजत्येवं न चेदतिक्रमेत् पतिं । साध्विस्त्री सूर्य्यवज्ज्वाति सततं पतिदेवता ।
अद्य प्रभृति सर्व्वेषां देवानाञ्चैव योषितः । द्रक्ष्यन्ति पुण्यकविधिं पौराणं याः सनातनाः ।
मुनिश्च नारदः कृत्स्नं पौराणं ख्यास्यते विधिं । उपवासस्य धर्म्मात्मा व्रतकानां तथैव च ।
अदितिश्चापि सेन्द्राणी लक्ष्म सोमसुते वरे । प्रवर्त्तने पुण्यकानां व्रतकानाञ्च सर्व्वदा ।
कीर्त्तनीयाः सतीनां हि भविष्यथ गुणान्विताः । उपवासव्रतविधिं यथावदिह कृत्स्नशः ।
प्रादुर्भावेषु सर्व्वेषु भार्य्या विष्णोर्महात्मनः । ख्यास्यन्ति पुण्यकविधिं नित्यमेव सनातनं ।
विशेषधर्म्मो धर्म्माणां स्त्रीधर्म्मेषु प्रशस्यते । पतिभक्तिरदुष्टत्वमवाग्दुष्टत्वमेव च ।
॥ नारद उवाच ॥ एवमुक्तास्तु ता देव्यो महादेव्या तपोधनाः । जग्मुर्हृष्टा महादेवीं प्रणिपत्य हरप्रियां ।
अदितिर्व्रतकञ्चक्रे शृणु यद्धर्म्मचारिणी । उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः ।
पारिजाते निबध्याथ मम दत्तस्तु कश्यपः । अदितिर्व्रतकं चक्रे शृणु यद्धर्म्मचारिणी ।
उमाव्रतविधिः सर्व्वः पूर्व्वोद्दिष्टस्तया कृतः । पारिजाते निबध्याथ मम दत्तस्तु कश्यपः ।
अदितिव्रतकं नाम तद्दत्तं सत्यभामया । तदेव व्रतकं दत्तं सावित्र्या धर्म्मनित्यया ।
तैरेव युक्तैः संयुक्तमिदं त्वभ्यधिकं कृतं । सन्ध्याकाले च संप्राप्ते स्नाने स्नाने तथैव च ।
पूजनं वा नमस्कारो जपश्च द्विगुणः स्मृतः । सावित्रीव्रतकं कृत्वा तथादितिव्रतं सती ।
भर्त्तुः कुलं पितृकुलमात्मानञ्चैव तारयेत् । इन्द्राणी व्रतकञ्चक्रे तदेवोक्तं यथाविधि ।
रक्तमभ्यधिकं वासो भोजनञ्चैव सामिषं । चतुर्थे दिवसे चापि पुण्यकार्थं विधिः स्मृतः ।
अहोरात्रोपवासश्च देयं कुम्भशतं तदा । गङ्गया व्रतकं दत्तं तदेवोक्तं यशस्करि ।
स्नानमभ्यधिकं कार्य्यं सत्पूयस्यात्मनो जले । अन्यस्मिन् वा जले सा च कुलपथे शचिप्रिये ।
एतद्गङ्गाव्रतं नाम सर्व्वकामप्रदं स्मृतं । सप्त सप्त च सप्ताथ कुलानि हरिवल्लभे ।
स्त्री तारयति धर्म्मज्ञा गङ्गाव्रतकचारिणी । देयं कुम्भशतञ्चात्र गङ्गाया व्रतके शुभे ।

तारणं पारणञ्चैव तद्वतं सार्व्वकामिकं । सत्यभामा चकाराथ व्रतं यामरथं शुभं ।
सेमन्ते तत्तु कर्त्तव्यमाकाशे हरिवल्लभे । इमानि चैव वाक्यानि ब्रूयादाकाशमाश्रिता ।
स्नाता शुचिसमाचारा नमस्कृत्य पतिं शुभे । चराम्यहं यामरथं हिमं पृष्ठेन धारये ।
पतिव्रता जीवपुत्रा भवेयञ्च पुरोधिका । सपत्नीश्चाधितिष्ठेयं पश्येयञ्चैव मा यमं ।
सभर्तृपुत्रा जीवेयं चिरं सुसुखमेव च । पतिलोकञ्च गच्छेयं भवेयं धनिनी तथा । ७९४५
सुचेला मृष्टहस्ता च स्वजनेष्टा गुणान्विता । एवं कृत्वा ततो विप्रं मधुना स्वस्ति वाचयेत् ।
तिलैरपि तथा कृष्णैः पायसेन तु भोजयेत् । एवं व्रतानि देवीभिः कृतान्यमरवर्णिनि ।
महादेव्या पुरोक्तानि रुद्रपत्न्या हरिप्रिये । अहं ब्रवीमि तपसा महीयेन समन्विताः ।
सर्व्वा रुद्रस्य पुण्यानि व्रतकानि तथैव च । पौराणान्युमया देव्या यानि दृष्टानि वै पुरा ।
कल्याणगुणयुक्तानि पावनानि शुभानि च । ७९५०
॥ वैशम्पायन उवाच ॥ रुक्मिणी व्रतकञ्चक्रे दृष्ट्वा व्रतकविस्तरं । उमया वरदानेन दृष्ट्वा दिव्येन चक्षुषा ।
उमाव्रतकवत् सर्व्वं वृषदानं तथाऽधिकं । रत्नमालाप्रदानञ्च तथाऽन्नं सार्व्वकामिकं ।
तथा जाम्बवती चक्रे पुरोमाव्रतकं यथा । ददावभ्यधिकं सा तु रत्नवृन्दं मनोहरं ।
सत्या ददौ तथैवाथ पुरोमाव्रतके यथा । पीतमभ्यधिकं वासश्छाया दत्तमुमाव्रते ।
रोहिण्या चाथ फाल्गुन्या मघया च पुरातने । व्रतानि खलु दत्तानि वर्द्धनि कुलनन्दने । ७९५५
ददौ शतभिषा चैव व्रतकं पुण्यलक्षणं । येन नक्षत्रमुख्यत्वं जगाम कुरुनन्दन ।
इति श्रीमहाभारते खिलेषु हरिवंशे पारिजातहरणे उमाव्रतके चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
॥ जनमेजय उवाच ॥ वैशम्पायन धर्म्मज्ञ व्यासशिष्य तपोधन । पारिजातस्य हरणे षट्पुरं परिकीर्त्तितं ।
निवासोऽसुरमुख्यानां दारुणानां तपोधन । तेषां वधं मुनिश्रेष्ठ कीर्त्तयस्वानुकम्प्य च ।
॥ वैशम्पायन उवाच ॥ त्रिपुरे निहते वीरे रुद्रेणाक्लिष्टकर्म्मणा । तत्रायुधाना बहवो बभूवुरसुरोत्तमाः ।
शराग्निना न दग्धास्ते रुद्रेण त्रिपुरालयाः । षष्टिं शतसहस्राणि न न्यूनाभ्यधिकानि तु । ७९६०
ते ज्ञातिवधसन्तप्तास्त्वकुर्व्वीराः पुरा तपः । जम्बूमार्गे स्नातमिष्टे महर्षिगणसेविते ।
आदित्याभिमुखा वीराः सहस्राणां शतं समाः । वायुभक्षा नृपश्रेष्ठ स्तुवन्तः पद्मसम्भवं ।
तेषामुडुम्बरं राजन् गण एकः समाश्रितः । वृक्षं तत्रावसन् वीरास्ते कुर्व्वन्तो महत्तपः ।
कपित्थवृक्षमाश्रित्य केचित्तत्रोषिताः पुरा । शृङ्गालवाटीस्त्वपरे चेरुरुग्रं तथा तपः ।
वटमूले तथा चेरुस्तपः कौरवनन्दन । अधीयन्तोऽपरे ब्रह्म वटं गत्वाऽसुरात्मजाः । ७९६५
तेषां तुष्टः प्रजाकर्त्ता नरदेव पितामहः । वरं दातुं सुरश्रेष्ठः प्राप्तो धर्म्मभृताम्वरः ।
वरं वरयतेत्युक्तास्ते राजन् पद्मयोनिना । ते नेषुर्व्वरदानं तद्विपन्तस्त्र्यम्बकं विभुं ।
इच्छन्तोऽपचितिं गन्तुं ज्ञातीनां कुरुनन्दन । तानुवाच ततो ब्रह्मा सर्व्वज्ञः कुरुनन्दन ।
विश्वस्य जगतः कर्त्तुः संहर्त्तुश्च महात्मनः । कः शक्तोऽपचितिं गन्तु माऽस्तु वोऽत्र वृथा श्रमः ।

अनादिमध्यनिधनः सोमो देवो महेश्वरः। तमभ्युपेत्य सुखं स्वर्गे वस्तुमिच्छन्ति येऽसुराः। ७९७०
ते सेयुस्तत्र केचित्तु दुरात्मानो महासुराः। अग्निपुरपरे राजन्नसुरा भव्यभावनाः।
सेवुर्यं तु दुरात्मानस्तानुवाच पितामहः। वरयध्वं वरं घोरा रुद्रक्रोधसृतेऽसुराः।
त ऊचुः सर्व्वदेवानामवध्याः स्यामहे विभो। पुराणि षट् च नो देव भवन्त्वर्च्चहीतले।
सर्व्वकामसमृद्धार्थं षट्पुरं चास्तु नः प्रभो। वयञ्च षट्पुरं गत्वा वत्स्याम च सुखं प्रभो।
रुद्रादुग्रं भयं न स्याद्येन नो ज्ञातयो हताः। निहतं त्रिपुरं दृष्ट्वा भीताः स्म तपसां निधे। ७९७५
॥ पितामह उवाच ॥ असुरा भवतावध्या देवानां शङ्करस्य च। न बाधिष्यथ चेद्विप्रान् सत्पथस्थान् सतां प्रियान्।
विप्रोपघातं मोहाच्चेत् करिष्यथ कथञ्चन। नाशं यास्यथ विप्रा हि जगतः परमा गतिः।
नारायणाद्धो भेतव्यं कुर्व्वद्भिर्ब्राह्मणाहितं। सर्व्वभूतेषु भगवान् हितं धत्ते जनार्द्दनः।
ते गता असुरा राजन् ब्रह्मणाऽथ विसर्ज्जिताः। येऽपि भक्ता महादेवमसुरा धर्म्मचारिणः।
स्वयं हि दर्शनं तेषां ददौ त्रिपुरनाशनः। श्वेतं वृषभमारुह्य सोमः सप्रभरः प्रभुः। ७९८०
उवाच चेदं भगवानसुरान् स कृताञ्जलिः। वैरमुत्सृज्य दम्भञ्च हिंसाञ्चासुरसत्तमाः।
मामेव चाश्रितास्तस्माद्वरं साधु ददामि वः। यैर्दीक्षिताः स्थ मुनिभिः सत्क्रियापरमैर्द्विजैः।
सह तैर्गम्यतां स्वर्गः प्रीतोऽहं वः स्वकर्म्मणा। इह ये चैव वत्स्यन्ति तपसा ब्रह्मवादिनः।
अपि कापित्यिकाश्चैव तेषां लोका यथा मम। इह मासांस्तपश्चान्तो यः करिष्यति मानवः।
वानप्रस्थेन विधिना पूजयन्मां तपोधनः। वर्षाणान्तु सहस्रस्य तपसां प्राप्यते फलं। ७९८५
कृत्वा त्रिरात्रं विधिवत्सम्यग्‌ यास्यते चेप्सितां गतिं। अर्कद्वीपे निवसतो द्विगुणं तद्भविष्यति।
तीर्थे देशे च भद्रं वो वरमेतं ददाम्यहं। श्वेतवाहननामानं यश्च मां पूजयिष्यति।
सर्व्वतो भयचित्तोऽपि गतिं स मम यास्यति। औडुम्बरान् वाटमूलान् द्विजान् कापित्यिकानपि।
तथा शृगालवाटीयान्धर्म्मात्मानो दृढव्रतान्। मुनींश्च ब्रह्मवाटीयान् सविशेषेण ये नराः।
पूजयिष्यन्ति सततं ते यास्यन्तोपि मां गतिं। इत्युक्त्वाऽथ महादेवो भगवान् श्वेतवाहनः। ७९९०
तैरेव सहितः सर्व्वैरुद्रलोकं जगाम वै। जम्बूमार्गे गमिष्यामि जम्बूमार्गे वसाम्यहं।
एवं संकल्पयानोऽपि रुद्रलोके महीयते।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे एकचत्वारिंशदधिकशततमोऽध्यायः॥ १४१ ॥
॥ वैशम्पायन उवाच ॥ एतस्मिन्नेव काले तु चतुर्व्वेदः षडङ्गवित्। ब्राह्मणो याज्ञवल्क्यस्य शिष्यो धर्म्मगुणान्वितः।
ब्रह्मदत्तेति विख्यातो विप्रो वाजसनेयिनां। अश्वमेधः कृतस्तेन वसुदेवस्य धीमतः।
स संवत्सरदीक्षायां दीक्षितः षट्पुरालये। आवर्त्ताया: शुभे तीरे सुनद्या मुनिजुष्टया। ७९९५
सखा च वसुदेवस्य सहाध्यायी द्विजोत्तमः। उपाध्यायस्य कौरव्य चोग्रहेतोर्महात्मनः।
वसुदेवस्तत्र यातो देवक्या सहितः प्रभो। यजमानं षट्पुरस्थं यथा शक्रो बृहस्पतिं।
तत् सत्रं ब्रह्मदत्तस्य बहुकल्पं बहुदक्षिणं। उपासन्त मुनिश्रेष्ठा महात्मानो दृढव्रताः।

व्यासोऽहं याज्ञवल्क्यश्च सुमन्तुर्जैमिनिस्तथा । द्युतिमान् जाजलिश्चैव देवलाद्याश्च भारत ।
श्रद्धयाऽनुकम्पया युक्तं वसुदेवस्य धीमतः । यज्ञेप्सितान् ददौ कामान् देवकी धर्मचारिणी । ८०००
वासुदेवप्रभावेण जगत्सर्व्वं महीतले । तस्मिन् सत्रे वर्त्तमाने दैत्याः षट्पुरवासिनः ।
निकुम्भाद्याः समागम्य तमूचुर्व्वरदर्पिताः । कार्य्यतां यज्ञभागो नः सोमं पास्यामहे वयं ।
कन्याश्च ब्रह्मदत्तो नो यजमानः प्रयच्छतु । श्रुताः सन्त्यस्य कन्याश्च रूपवत्यो महात्मनः ।
आहूय ताः प्रदातव्याः सर्व्वथैव हि नः श्रुतं । रत्नानि च ब्रह्मदत्तो विशिष्टानि ददातु नः ।
अन्यथा स तु यष्टव्यं वयमाज्ञापयामहे । एतच्छ्रुत्वा ब्रह्मदत्तस्तानुवाच महासुरान् । ८००५
यज्ञभागो न विहितः पुराणे ऽसुरसत्तमाः । कथं सत्रे सोमपानं शक्यं दातुं मया हि वः ।
पृच्छतेह मुनिश्रेष्ठान् वेदभाष्यार्थकोविदान् । कन्या हि मम या देयास्ताश्च संकल्पिता मया ।
अन्तर्वेद्यां प्रदातव्याः सदृशानामसंशयं । रत्नानि तु प्रयच्छामि सान्त्वेनाहं विचिन्त्यतां ।
बलात्सैव प्रदास्यामि देवकीपुत्रमाश्रितः । निकुम्भाद्यास्तु कुपिताः पापाः षट्पुरवासिनः ।
यज्ञवाटं विलुलुपुर्जह्रुः कन्याश्च तास्तथा । तं दृष्ट्वा सम्प्रहृष्टन्तु दध्यावानकदुन्दुभिः । ८०१०
वासुदेवं महात्मानं बलभद्रं गदं तथा । विदित्वाऽथ ततः कृष्णः प्रद्युम्नमिदमब्रवीत् ।
गच्छ कन्यापरित्राणं कुरु पुत्राशु मायया । यावद्यादवसैन्येन षट्पुरं याम्यहं प्रभो ।
स ययौ षट्पुरं वीरः पितुराज्ञाकरस्तदा । निमेषान्तरमात्रेण गत्वा कामी महाबलः ।
कन्यास्ता मायया धीमानाजह्रे स महाबलः । मायामयीश्च कृत्वाऽन्या न्यस्तवान्रुक्मिणीसुतः ।
मा भैरिति च धर्म्मात्मा देवकीमुक्तवांस्तदा । मायामयीस्तु ता हृत्वा सुतास्तस्य दुरासदाः । ८०१५
षट्पुरं विविशुर्दैत्याः परितुष्टा नराधिप । कर्म्म चासार्य्यते तत्र विधिदृष्टेन कर्म्मणा ।
यदिशिष्टं बहुगुणं तदभूच्च नराधिप । एतस्मिन्नन्तरे प्राप्ता राजानस्तत्र भारत ।
सत्रे निमन्त्रिताः पूर्व्वं ब्रह्मदत्तेन धीमता । जरासन्धो दन्तवक्रः शिशुपालस्तथैव च ।
पाण्डवा धार्त्तराष्ट्राश्च मालवास्तकुणास्तथा । रुक्मो पैत्राकृतिश्चैव नीलो नार्म्मद एव च ।
विन्दानुविन्दावावन्त्यौ शल्यः शकुनिरेव च । राजानश्चापरे वीरा महात्मानो दृढायुधाः । ८०२०
आवासिता नातिदूरे षट्पुरस्य च भारत । तान्दृष्ट्वा नारदः श्रीमानचिन्तयदनिन्दितः ।
एतस्य यादवानाञ्च भविष्यति समागमः । अत्र हेतुरयं युद्धे तस्मात्तत् प्रयताम्यहं ।
एवं सञ्चिन्तयित्वा तु निकुम्भभवनं गतः । पूजितः स निकुम्भेन दानवैश्च तथाऽपरैः ।
उपविष्टः स धर्म्मात्मा निकुम्भमिदमब्रवीत् । कथं विरोधं यदुभिः कृत्वा सर्व्वैरिहास्यते ।
यो ब्रह्मदत्तः स कृष्णः स हि तस्य विभुः सखा । शतानि पञ्च भार्य्याणां ब्रह्मदत्तस्य धीमतः । ८०२५
आसीता वसुदेवस्य सुतस्य प्रियकाम्यया । शतद्वयं ब्राह्मणीनां राजन्यानां तथा शतं ।
वैश्यानां शतमेकञ्च शूद्राणां शतमेव च । ताभिः शुश्रूषितो धीमान्दुर्व्वासा धर्म्मवित्तमः ।
तेन तासां वरो दत्तो मुनिना पुण्यकर्म्मणा । एकैकस्तनयो राजन्नेकैका दुहिता तथा ।

रूपेणानुपमाः सर्व्वा वरदानेन धीमतः। कन्या भवन्ति तनयास्तस्यासुर पुनः पुनः।
सङ्गमे सङ्गमे वीर भर्त्तृभिः शयने सह। सर्व्वपुष्पमयं गन्धं स्रवन्ति च वराङ्गनाः।
सर्व्वदा यौवने न्यस्ताः सर्व्वाश्चैव पतिव्रताः। सर्व्वा गुणैरप्रतिमा गीतनृत्यगुणोदयं।
जानन्ति सर्व्वा दैतेय वरदानेन धीमतः। पुत्राश्च रूपसम्पन्नाः शास्त्रार्थकुशलास्तथा।
स्वे स्वे स्थिता वर्णधर्म्मे यथावदनुपूर्व्वशः। ताः कन्या मेममुख्यानां दत्ताः प्रायेण धीमता।
अवशेषं शतन्त्वेकं यदानीतं किल त्वया। तदर्थं यादवा वीर योधयिष्यन्ति सर्व्वथा।
साहाय्यार्थन्तु राजानो व्रियन्तां हेतुपूर्व्वकं। ब्रह्मदत्तसुतार्थेश्च रत्नानि विविधानि च।
दीयन्तां भूमिपालानां साहाय्यार्थं महात्मनां। आतिथ्यं क्रियताञ्चैव ये समेयन्ति वै नृपाः।
एवमुक्ते तया चक्रुरसुरास्तेऽनिचष्टवत्। लब्ध्वा पञ्चशतं कन्या रत्नानि विविधानि च।
यथार्हेण नरेन्द्रैस्ता विभक्ता भक्तितत्पराः। वृते पाण्डुसुतान् वीरान् वारिता नारदेन ते।
निमेषान्तरमात्रेण तत्र गत्वा महात्मना। तुष्टैस्तैरसुरा युक्ता राजन् भूमिपसत्तमैः।
सर्व्वाकामसमृद्धार्थैर्भवद्भिः स्वगृहैः स्वयं। अर्चिताः स्म यथान्यायं वाच्यं किं वः प्रयच्छतु।
वाच्यं नार्चितपूर्व्वं हि दिव्यैर्नरैर्भवद्विधैः। निकुम्भोऽयाब्रवीद्धृष्टः वाक्यं सुररिपुस्तदा।
सम्वर्त्तयित्वा वाक्यस्य माहात्म्यं सत्यमेव च। युद्धं नो रिपुभिः सार्द्धं भविष्यति नृपोत्तमाः।
साहाय्यं दातुमिच्छन्तो भवद्भिस्तत्र सर्व्वथा। एवमस्त्विति तामूचुः क्षत्रियाः क्षीणकल्मषाः।
पाण्डवेयाकृते वीरान् सुतार्थान्नारदादिभिः। क्षत्रियाः सन्निविष्टास्ते युद्धार्थं कुरुनन्दन।
पत्न्यस्तु ब्रह्मदत्तस्य यज्ञवाटं गता अपि। कृष्णोऽपि सेनया सार्द्धमाययौ षट्पुरं विभुः।
महादेवस्य वचनमुद्दहन्मनसा नृप। स्थापयित्वा द्वारवत्यामाहुकं पार्थिवं तथा।
स तया सेनया सार्द्धं पौराणां हितकाम्यया। यज्ञवाटस्याविदूरे देवो निविविशे विभुः।
देशे प्रवरकल्याणे वसुदेवप्रचोदितः। दत्तगुल्मप्रतिसरं कृत्वा तं विधिवत् प्रभुः।
प्रद्युम्नमटने श्रीमान् रक्षार्थं विनियुज्य वै।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे द्वाचत्वारिंशदधिकशततोऽध्यायः ॥ १४२ ॥
॥ वैशम्पायन उवाच ॥ मुहूर्त्ताभ्युदिते सूर्य्ये जनचक्षुषि निर्म्मले। बलः कृष्णः सात्यकिश्च तार्क्ष्यमारुह्य सुन्दरा।
बद्धगोधाङ्गुलित्राणा दंशिता युद्धकाङ्क्षिणः। विश्वोदकेश्वरं देवं नमस्कृत्य सुरोत्तमं।
आवर्त्ताया जले स्नात्वा रुद्रेण वरदत्तया। गङ्गायाः कुरुशार्दूल रुद्रवाक्येन पुण्यया।
प्रद्युम्नमपि सैन्यस्य विपति स्थाप्य मानदः। रक्षार्थं यज्ञवाटस्य पाण्डवान् विनियुज्य च।
शेषां सेनां गुहाद्वारि भगवान् विनियुज्य च। जयन्तमथ सञ्चार प्रवरञ्च सताङ्गतिः।
तावापेततुरेवाय स्वयञ्चापश्यतं तदा। वियत्येव नियुक्तौ तौ प्रद्युम्न इव भारत।
ततः कृष्णस्य वचनाद्दाहतो रणदुन्दुभिः। अनता सुरजाश्चैव वाद्यान्यप्यपराणि च।
मकरो रचितो व्यूहः रामेण च गदेन च। सारणश्चोद्धवश्चैव भोजो वैतरणस्तथा।

अनाधृष्टिश्च धर्म्मात्मा विपृथुः पृथुरेव च । कृतवर्म्मा सुदंष्ट्रोऽथ विचक्रुररिमर्द्दनः ।
सनत्कुमारो धर्म्मात्मा चारुदेष्णश्च भारत । अनिरुद्धसहायौ तौ पृष्ठानीकं ररक्षतुः ।
सेषा यादवसेना तु व्यूहमध्ये व्यवस्थिता । रथैरश्वैर्नरैर्नागैराकुला कुलवर्द्धन । ८०६०
षट्पुरादपि निष्क्रान्ता दानवा युद्धदुर्म्मदाः । आरुह्य मेघनादांश्च गर्द्दभानपि हस्तिनः ।
मकरान्क्रिशुमारांश्च हयानपि च भारत । महिषानथ खड्गांश्च उष्ट्रानपि च कङ्कपान् ।
एतैरेव रथैर्युक्ता विविधायुधपाणयः । किरीटपीठमुकुटैरङ्गदैरपि मण्डिताः ।
नानर्द्दमानैर्विविधैस्तूर्य्यैर्निस्वनाकुलैः । प्रध्मायमानैः शङ्खैश्च महाम्बुदसमस्वनैः ।
तासामसुरसेनानां युज्यतीनां जनेश्वर । निकुम्भो नियन्तावशे देवानामिव वासवः । ८०६५
भूमिं द्यांश्च वव्रधिरे दानवास्ते बलोत्कटाः । नदन्तो विविधान्नादान् क्ष्वेडन्तश्च पुनः पुनः ।
राजसेनाऽपि संयत्ता चेदिराजपुरोगमा । असुराणां वधार्थं निश्चिता जनमेजय ।
दुर्य्योधनभ्रातृशतं चेदिराजानुगामिनं । स्थितं रथैर्नरव्याघ्र गन्धर्व्वनगरोपमैः ।
कठिना नादिनो वीर द्रुपदस्यन्दनास्तथा । रुक्मी चैवाकृतिश्चैव तस्थतुर्निश्चितौ रणे ।
तालवृक्षप्रतीकाशे धुन्वानौ धनुषी शुभे । शल्यश्च शकुनिश्चोभौ भगदत्तश्च पार्थिवः । ८०७०
जरासन्धस्त्रिगर्त्तश्च विराटश्च महोत्तरः । युद्धार्थमुद्यता वीरा निकुम्भाद्या जयैषिणः ।
युयुत्समाना यदुभिर्देवैरिव महासुराः । ततो निकुम्भः समरे शरैराशीविषोपमैः ।
ततर्द्द समरे सेनां सैन्यानां भीमदर्शनां । सेनापतिरनाधृष्टिश्चम्वां तत्र यादवः ।
ततर्द्द घोरैर्नाराचैश्चित्रपुङ्खैः शिलाशितैः । न रथो ऽसुरमुख्यस्य ददृशे न च वाजिनः ।
न ध्वजो न निकुम्भश्च सर्व्वं वाणाभिसंवृतं । स परीत्य ततो वीरो निकुम्भो मायिनाम्बरः । ८०७५
अस्तम्भयदनाधृष्टिं मायया सैन्यसत्तमं । स्तम्भयित्वानयद्घोरं गुहां षट्पुरसंज्ञितां ।
रुद्ध्वा चाभ्यगमद्वीरं मायया बलमाश्रितः । पुनरेव निकुम्भस्तु कृतवर्म्माणमाहवे ।
अनयच्चारुदेष्णञ्च भोजं वैतरणं तथा । सनत्कुमारमाक्रूरञ्च तथैव निशठोल्मुकौ ।
बहूंश्चैवापरान् भोजान्मायाबलसमाश्रितः । न तस्य ददृशे देहो मायाच्छन्नो जनेश्वर ।
नयतो यादवान् घोरां गुहां षट्पुरसंज्ञितां । तद्दृष्ट्वा कदनं घोरं सैन्यानां सैन्यवर्द्धनः । ८०८०
चुकोप भगवान् कृष्णो बलः सत्यक एव च । सविशेषं तथा कामः शाम्बश्च परवीरहा ।
अनिरुद्धश्च दुर्द्धर्षो सैन्यास्च बहवोऽपरे । ततः शार्ङ्गायुधः शार्ङ्गं कृत्वा सज्यं नरेश्वर ।
दानवेषु प्रवृत्तेषु वृष्णिष्विव कृतात्मनः । तं दृष्ट्वा दानवा देवमभिदुद्रुवुरीश्वरं ।
शलभाः कालरात्र्यार्त्ताः प्रदीप्तमिव पावकं । समुच्छ्रिताः शतघ्नीश्च परिघांश्च सहस्रशः ।
शूलानि चाग्नितुल्यानि प्रदीप्तांश्च परश्वधान् । पर्व्वताग्राणि वृक्षांश्च घोराश्च विपुलाः शिलाः । ८०८५
उत्क्षिप्य च गजाश्वस्तानथयानपि हयानपि । नारायणाश्रितान् सर्व्वान्ददाह प्रशमन्निव ।
वाणार्चिषा महातेजा जगद्धितकरो हरिः । शारदं वर्षण यद्वद्देवोर गवां पतिः ।

भयं हि विद्यते तस्य गोप्तारो यस्य पाण्डवाः । न चामुरैस्तव सुताः स्पृष्टाः स्वल्पपि तेजसा ।
यज्ञवाटे निरोप्यैता मायया निहता मया ।
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
॥ वैशम्पायन उवाच ॥ बद्धेषु भूमिपालेषु मानुषेषु विशाम्पते । आविवेशासुरांश्चैव कश्मलं जनमेजय ।
दिशः प्रसस्रुस्ते वीरा बध्यमाना: समन्ततः । कृष्णानन्तप्रभृतिभिर्यदुभिर्युद्धदुर्म्मदैः । ८११०
निकुम्भस्तानथोवाच हृष्टो दानवसत्तमः । भित्त्वा प्रतिज्ञां किं मोहात्कथार्त्ता याथ विक्लवाः ।
हीनप्रतिज्ञाः कान् लोकान् प्रयास्यथ पलायिताः । अगत्वापचितिं युद्धे शालीनं कृतनिश्चयाः ।
फलं जित्वेह भोक्तव्यं रिपून् समरकर्कशान् । हतेन चापि शूरेण वस्तव्यं त्रिदिवे सुखं ।
पलायित्वा गृहं गत्वा कस्य द्रक्ष्यथ हे मुखं । दारान् वक्ष्यथ किञ्चापि धिग्धिक् किं किं न लज्जथ ।
एवमुक्ता निवृत्तास्ते लज्जमाना नृपासुराः । द्विगुणेन च वेगेन युयुधुर्यदुभिः सह । ८११५
उत्सवे युद्धे पाण्डूनां नानाप्रहरणैर्नृप । ये यान्ति यज्ञवाटन्तु तान्निहन्ति धनञ्जयः ।
यमौ भीमश्च राजा च धर्म्मपुत्त्रो युधिष्ठिरः । शं प्रयातान् जघानेन्द्रिः प्रवरश्च द्विजोत्तमः ।
अयासुरासृक्तोयाढ्या केशशैवलशाद्वला । चक्रकूर्म्मरथावर्त्ता गजशैलानुशोभिनी ।
ध्वजकुन्ततरुच्छन्ना स्तनितोत्क्रुष्टशब्दिनी । गोविन्दशैलप्रभवा भीरुचित्तप्रमाथिनी ।
असृग्बुद्बुदफेनाढ्या अविमत्स्यतरङ्गिणी । सुस्राव शोणितनदी नदीव जलदागमे । ८१२०
तान्दृष्ट्वैव निकुम्भस्तु वर्द्धमानांश्च माधवान् । हतान् सर्व्वान् सहायांश्च वीर्य्यादेवोत्पपात ह ।
स वारितो जयन्तेन प्रवरेण च भारत । शरैः कुलिशसङ्काशैर्निकुम्भो रणकर्कशः ।
सन्निवृत्य च दष्टोष्ठः परिघेण दुरासदः । प्रवरं ताडयामास स पपात महीतले ।
ऐन्द्रिस्तं पतितं भूमौ बाहुभ्यां परिषस्वजे । विदित्वा चैव सप्राणं हित्वाऽसुरमभिद्रुतः ।
अभिद्रुत्य निकुम्भश्च निस्त्रिंशेन जघान ह । परिघेणापि दैतेयो जयन्तं समताडयत् । ८१२५
तस्य तस्याचलद्गात्रं निकुम्भस्यैन्द्रिणाहवे । स चिन्तयामास तदा बध्यमानो महासुरः ।
कृष्णेन सह योद्धव्यं वैरिणा ज्ञातिघातिना । आमयामि किमात्मानमाहवे शक्रसूनुना ।
एवं स निश्चयं कृत्वा तत्रैवान्तरधीयत । जगाम चैव युद्धार्थं यत्र कृष्णो महाबलः ।
तं दृष्ट्वैरावणस्कन्धमास्थितो बलनाशनः । द्रष्टुमभ्यागतो युद्धं जहषे सह दैवतैः ।
साधु साध्विति पुत्त्रश्च परितुष्टस्य सस्वजे । प्रवरश्चापि धर्म्मात्मा सस्वजे मोदवर्द्धितं । ८१३०
देवदुन्दुभयश्चापि प्रणेदुर्व्योमवासिनां । जयमानं रणे दृष्ट्वा जयन्तं रणदुर्ज्जयं ।
ददर्शाय निकुम्भस्तु केशवं रणदुर्ज्जयं । अर्ज्जुनेन स्थितं सार्द्धं यज्ञवाटाविदूरतः ।
स नर्दं समहत् कृत्वा पक्षिराजमताडयत् । परिघेण सुघोरेण बलं सत्यकमेव च ।
नारायणञ्चार्ज्जुनञ्च भीमञ्चाथ युधिष्ठिरं । यमौ च वसुदेवञ्च साम्बं कामञ्च वीर्य्यवान् ।

युयुधे मायया दैत्यः शीघ्रकारी च भारत । न चैनं ददृशुः सर्व्वे सर्व्वशस्त्रविशारदाः । ८१३५
यदा तु नैवापश्यंस्तं तदा विल्वोदकेश्वरं । दध्यौ देवं हृषीकेशः प्रमथानां गणेश्वरं ।
ततस्ते ददृशुः सर्व्वे प्रभावादतितेजसः । विल्वोदकेश्वरस्याशु निकुम्भं मायिनाम्बरं ।
कैलासशिखराकारं पयस्तमिव धिष्ठितं । आक्रयन्तं रणे कृष्णं वैरिणं ज्ञातिनाशनं ।
सव्यसाची च एवाथ पार्थस्तस्य रणेषुभिः । परिघश्चैव गात्रेषु विव्याधैनमथासकृत् ।
ते वाणास्तस्य गात्रेषु परिघे च जनाधिप । भग्नाः शिलाशिताः सर्व्वे निपेतुः कुण्ठिताः क्षितौ । ८१४०
विफलानस्त्रयुक्तांस्तान्दृष्ट्वा वाणान्धनञ्जयः । पप्रच्छ केशवं वीरः किमेतदिति भारत ।
पर्व्वतानपि भिन्दन्ति मम वज्रोपमाः शराः । किमिदं देवकीपुत्र विस्मयोऽत्र महान्मम ।
तमुवाच ततः कृष्णः प्रहसन्निव भारत । महद्भूतं निकुम्भोऽयं कौन्तेय शृणु विस्तरं ।
पुरा गत्वोत्तरकुरूंस्तपश्चक्रे महाबलः । शतं वर्षसहस्राणां देवमनुद्दिरामदः ।
अथैनं च्छन्दयामास वरेण भगवान् हरः । स वव्रे चोपि रूपाणि न बध्यानि सुरासुरैः । ८१४५
तमुवाच महादेवो भगवान् वृषभध्वजः । मम वा ब्राह्मणानाम्बा विष्णोर्व्वा ऽप्रियमाचरन् ।
भविष्यसि हरेर्बध्यो न त्वन्यस्य महासुर । ब्रह्मण्योऽहञ्च विष्णुश्च विप्रा नः परमा गतिः ।
स एष सर्व्वशस्त्राणामबध्यः पाण्डुनन्दन । चिरेहोऽतिप्रमाथी च वरदत्तश्च दानवः ।
भानुमत्याऽपहरणे देहोऽस्यैको हतो मया । अबध्यं षट्पुरं देहमिदमस्य दुरात्मनः ।
दितिं शुश्रूषति त्वेको देहोऽस्य तपसाऽन्वितः । अन्यस्तु देहो घोरोऽस्य येनावसति षट्पुरं । ८१५०
एतत्ते सर्व्वमाख्यातं निकुम्भचरितं मया । त्वरयास्य बधे वीर कथा पश्चाद्भविष्यति ।
तयोः कथयतोरेवं कृष्णयोरसुरस्तदा । गुहां षट्पुरसंज्ञां तां विवेश रणदुर्ज्जयः ।
अन्विष्य तस्य भगवान् विवेश मधुसूदनः । तां षट्पुरगुहां घोरां दुर्द्दर्शां कुरुनन्दन ।
चन्द्रसूर्य्यप्रभाहीनां ज्वलन्तीं स्वेन तेजसा । सुखदुःखोष्णशीतानि प्रयच्छन्तीं यथेप्सितं ।
तत्र प्रविश्य भगवानपश्यत्तान् जनाधिपान् । युयुधे सह घोरेण निकुम्भेन जनाधिप । ८१५५
कृष्णस्यानुप्रविष्टास्तु बलाद्या यादवास्तदा । प्रविष्टाश्च तदा सर्व्वे पाण्डवाश्च महात्मनः ।
सनेताश्च प्रविष्टास्ते कृष्णस्यानुमतेन वै । युयुधे स तु कृष्णेन रौक्मिणेयः प्रचोदितः ।
आनयद्यादवान् सर्व्वान् यानयं बान्धवान् पुरा । ते मुक्ता रौक्मिणेयेन प्राप्ता यत्र जनार्द्दनः ।
प्रहृष्टमनसः सर्व्वे निकुम्भबधकाङ्क्षिणः । राजानो वीर मुञ्चेति पुनः काममयाव रेत् ।
मुमोच चाथ तान् वीरान् रौक्मिणेयः प्रतापवान् । अधोमुखमुखाः सर्व्वे बहुमोना नराधिपाः । ८१६०
लज्जयाऽभिप्लुता वीरास्तस्थुर्नष्टश्रियस्तदा । निकुम्भमपि गोविन्दः प्रयतन्तं जयम्प्रति ।
योधयामास भगवान् घोरमात्मरिपुं हरिः । परिघेणाहतः कृष्णो निकुम्भेन भृशं विभो ।
गदया चापि कृष्णेन निकुम्भस्ताडितो भृशं । तावुभौ मोहमापन्नौ सुप्रहारहतौ तदा ।
ततः प्रव्यथितान् दृष्ट्वा पाण्डवांश्चाथ यादवान् । जेपुर्मुनिगणास्तत्र कृष्णस्य हितकाम्यया ।

तुष्टुवुश्च महात्मानं वेदप्रोक्तैः स्तवैस्तथा । ततः प्रख्यातप्राणो भगवान् केशवस्तदा । ८१७५
दानवश्च पुनर्वीरावुद्यतौ समरं प्रति । वृषभाविव गर्जन्तौ गजाविव च भारत ।
शार्दूलाविव क्रुद्धौ प्रहरन्तौ रणोत्कटौ । अथ क्षणं तदोवाच नृप वागशरीरिणी ।
चक्रेण प्रमथस्वैनं देवब्राह्मणकण्टकं । इतिवोवाच भगवान् देवो विश्वोदकेश्वरः ।
धर्मो यशश्च विपुलं प्राप्नुहि त्वं महाबल । तथेत्युक्त्वा नमस्कृत्वा लोकनाथं महाकृतिः ।
सुदर्शनं मुमोचाथ चक्रं दैत्यकुलान्तकं । तन्निकुम्भस्य चिच्छेद शिरः सवरकुण्डलं । ८१८०
नारायणभुजोत्सृष्टं सूर्यमण्डलवर्चसं । तत् पपात शिरस्तस्य भूमौ ज्वलितकुण्डलं ।
मेघमध्ये गिरेः शृङ्गान्मयूर इव भूतले । निकुम्भे निहते तस्मिन्देवो विश्वोदकेश्वरः ।
तुतोष च महद्याश्च जगत्त्रासकरे विभो । पपात पुष्पवृष्टिश्च शक्रसृष्टा नभस्तलात् ।
देवदुन्दुभयश्चैव प्रणेदुररिनाशन । ननन्द च जगत् कृत्स्नं मुनयश्च विशेषतः ।
दैत्यकन्याश्च भगवान् यदुभ्यः शतशो ददौ । वशियाश्चाश्च भगवान् सान्त्वयित्वा पुनः पुनः । ८१८५
रत्नानि च विचित्राणि वासांसि प्रवराणि च । रथानां वाजियुक्तानां षट्सहस्राणि केशवः ।
अददत् पाण्डवेयेभ्यः प्रीतात्मा गदपूर्वजः । तदेव चाथ प्रवरं षट्पुरं पुरवर्द्धनः ।
द्विजाय ब्रह्मदत्ताय ददौ तार्क्ष्यवरध्वजः । सर्वे समाप्ते च तदा शङ्खचक्रगदाधरः ।
विसर्जयित्वा तस्तत्र पाण्डवांश्च महाबलः । विश्वोदकेश्वरस्थाय समाजमकरोत् प्रभुः ।
भांडस्तूपपताकीर्णं वस्त्रकं ध्वजमाकुलं । नियुद्धकुशलान्मल्लान् देवो मल्लप्रियस्तदा । ८१९०
योधयित्वा ददौ भूरि वित्तं वस्त्राणि चात्मवान् । मातापितृभ्यां सहितो यदुभिश्च महाबलः ।
अभिवाद्य ब्रह्मदत्तं ययौ द्वारवतीं पुरीं । स विवेश पुरीं रम्यां हृष्टपुष्टजनाकुलां ।
पुष्पचित्रपथां वीरो वन्द्यमानो नरैः पथि । इमं यः षट्पुरवधं विजयं चक्रपाणिनः ।
शृणुयाद्वा पठेद्वाऽपि स युद्धे जयमाप्नुयात् । अपुत्रो लभते पुत्रमधनो लभते धनं ।
व्याधितो मुच्यते रोगाद्बद्धश्चाप्यथ बन्धनात् । इदं पुंसवनं प्रोक्तं गर्भाधानञ्च भारत । ८१९५
श्राद्धेषु पठितं सम्यगक्षय्यकरणं स्मृतं ।

इदममरवरस्य भारत प्रथितबलस्य जयं महात्मनः । सततमिह हि यः पठेन्नरः सुगतिमितो व्रजते गतज्वरः ।
मणिकनकविचित्रपाणिपादो निरतिशयार्कगुणोऽरिदाहिमध्यः । चतुरुदधिशयश्चतुर्विधात्मा जयति जगत्पुरुषः सहस्रनामा ।

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि षट्पुरवधे चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

॥ जनमेजय उवाच ॥ श्रुतोऽयं षट्पुरवधो त्वत्तो मुनिवरोत्तम । पुरोक्तमन्धकवधं वैशम्पायन कीर्त्तय ।
भानुमत्याश्च हरणं निकुम्भस्य वधन्तथा । प्रब्रूहि वदतां श्रेष्ठ परं कौतूहलं हि मे । ८२००
॥ वैशम्पायन उवाच ॥ तेषु तेषु च दैत्येषु निहतेषु च विष्णुना । तपसा राधयामास मारीचं कश्यपं दितिः ।
तपसा कालयुक्तेन तथा शुश्रूषया मुनेः । आनुकूल्येन च तथा माधुर्य्येण च भारत ।
परितुष्टः कश्यपस्तु तामुवाच तपोधनां । परितुष्टोऽस्मि ते भद्रे वरं वरय सुव्रते ।

॥ दितिरुवाच ॥ हतपुत्त्राऽस्मि भगवन् देवैर्ब्रह्मवतांम्बर । अवध्यं पुत्त्रमिच्छामि देवैरमितविक्रमं ।
॥ कश्यप उवाच ॥ अवध्यस्ते सुतो देवि दाशावधि भवेदिति । देवानां संशयो नात्र कश्चित् कमललोचने ।
देवदेवमृते रुद्रं तस्य न प्रभवाम्यहं । आत्मा ततस्ते पुत्त्रेण रक्षितव्यो हि सर्व्वथा ।
अन्वालभत तां देवीं कश्यपः सत्यवागथ । अनुज्ञोदरदेशे तु सा पुत्त्रं सुषुवे ततः ।
सहस्रबाहुं कौरव्य सहस्रशिरसं तथा । द्विसहस्रेक्षणञ्चैव तावच्चरणमेव च ।
स व्रजत्यन्धवद्यस्मादनन्धोऽपि हि भारत । तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निशाचिनः ।
अवध्योऽस्मीति लोकान् स सर्व्वान् बाधति भारत । हरत्यपि च रत्नानि सर्व्वाण्यात्मबलाश्रयात् ।
वासयत्यात्मवीर्य्येण निरष्टश्चाप्सरसां गणान् । स्वैरमन्यूर्ज्जितोऽत्यर्थं सर्व्वलोकभयङ्करः ।
परदारापहरणं पररत्नविलोपनं । चकार सततं मोहादन्धकः पापनिश्चयः ।
त्रैलोक्यविजयं कर्त्तुमुद्यतः स तु भारत । सहायैरसुरैः सार्द्धं बहुभिः सर्व्वधर्षिभिः ।
तं श्रुत्वा भगवान् शक्रः कश्यपं पितरं ब्रवीत् । अन्धकेनेदमारब्धमीदृशं मुनिसत्तम ।
आज्ञापय विभो कार्य्यमस्माकं समनन्तरं । यवीयसः कथं नाम वोढव्यं व्यापृतं मया ।
हृष्टपुत्त्रे प्रहर्त्तव्यं कथं नाम मया विभो । इच्छाच भवती कर्य्याच्चान्यं मयि हते सुते ।
देवेन्द्रवचनं श्रुत्वा कश्यपोऽथाब्रवीन्मुनिः । वारयिष्यामि देवेन्द्र सर्व्वथा भद्रमस्तु ते ।
अन्धकं वारयामास दित्या सह तु कश्यपः । त्रैलोक्यविजयादीर उद्योगाद्धेतुना भारत ।
वारितोऽपि स दुष्टात्मा बाधत्येव दिवौकसः । तैस्तैरुपायैर्दुष्टात्मा प्रमथ्य च तथा परान् ।
बभञ्ज काननं दृष्ट्वाऽनुद्यानानि च दुर्म्मतिः । उच्चैःश्रवःसुतानश्वान् बलादप्याजहार सः ।
नागान् दिङ्नागजसुतान् दिव्यानपि च भारत । बलाद्धरति देवानां पश्यतां बलदर्पितः ।
देवानाप्याययन्त्यत्र ये यज्ञास्तपसा तथा । तेषाञ्चकार विध्वंसं दुष्टात्मा देवकण्टकः ।
नेजुर्यज्ञैस्तथा वर्णाश्चापूर्व्ववत् तपांस्यपि । अन्धकस्य भयाद्राजन् यज्ञविघ्नानि कुर्व्वतः ।
तस्येच्छया वाति वायुरादित्यश्च तपत्युत । चन्द्रमाः सह नक्षत्रैर्दृश्यते नैव वा पुनः ।
न व्रजन्ति विमानानि विहायसि प्रभां प्रभो । अन्धकस्यातिघोरस्य बलदृप्तस्य दुर्म्मतेः ।
निरोङ्कारवषट्कारं जगदीर तदाऽभवत् । अन्धकस्यातिघोरस्य भयात् कुरुकुलोद्वह ।
कुरूनथोत्तरान् पापो द्रावयामास भारत । भद्राश्वान् केतुमालांश्च जम्बुद्वीपांस्तथैव च ।
मानयन्ति च तं देवा दानवाश्च दुरासदाः । भूतानि च तथाऽन्यानि समर्थान्यपि सर्व्वथा ।
ऋषयो बध्यमानास्तु समेता ब्रह्मवादिनः । अचिन्तयन्नन्धकस्य बधं धर्म्मभृतां वर ।
तेषां बृहस्पतिर्म्मध्ये धीमानिदमथाब्रवीत् । नास्य रुद्रादृते मृत्युर्विधाने च कदाचन ।
तथा वरे दीयमाने कश्यपेनाभिभाषितं । नाहं रुद्रात् परित्रातुं शक्त इत्येव धीमता ।
तदुपायं चिन्तयामः शर्व्वो येन सनातनः । जानीयात् सर्व्वभूतानि पीड्यमानानि शङ्करः ।
विदितार्थो हि भगवानवश्यं जगतःप्रभुः । अस्मत्प्रमार्ज्जनं देवः करिष्यति सतां गतिः ।

शतं हि देवदेवस्य भवस्य जगतो गुरोः । सर्व्वोऽसङ्ख्यो रक्षितव्या ब्राह्मणास्तु विशेषतः ।
तेवयं नारद सर्व्वे प्रयामः शरणं द्विज । उपायं वेत्स्यते तत्र वयस्यो हि भवस्य सः । ८२३५
बृहस्पतिवचः श्रुत्वा सर्व्वे तेऽथ तपोधनाः । त्राणार्थं नारदं प्रोचुस्तांस्तथेति स चोक्तवान् ।
विसृज्य तु यातेषु यत्कार्य्यं नारदो मुनिः । विचार्य्य मनसा विद्वानिति कार्य्यं स दृष्टवान् ।
स देवदेवं भगवान् द्रष्टुं मुनिरथाययौ । मन्दारवनमध्यस्थो यत्र नित्यं वृषध्वजः ।
स तत्र रजनीमेकामुषित्वा मुनिसत्तमः । मन्दाराणां वने रम्ये दयितः शूलपाणिनः ।
आजगाम पुनः स्वर्गं लब्ध्वाऽनुज्ञां वृषध्वजात् । मन्दारपुष्पैः सुकृतां मालामाबध्य भारत । ८२४०
ग्रथितां सविशेषाम्लां सर्व्वगन्धोत्तमोत्तमां । शान्तानमाल्यदामस्य तैरेव कुसुमैः कृतं ।
तच्च कण्ठे समासज्य महागन्धं नराधिप । आययावन्धको यत्र दुरात्मा बलदर्पितः ।
अन्धकस्त्वथ तं दृष्ट्वा गन्धमाघ्राय चोत्तमं । सन्तानकानां सम्भ्रान्तो महागन्धां महामुने ।
कुत्रेयं पुष्पजातिर्व्वा कमनीया तपोधन । गन्धान् वर्णांश्च तांस्तान् हि भोः पृच्छति मुहुर्मुहुः ।
स्वर्गे सन्तानकुसुमान्यतिवर्त्तन्ति सर्व्वथा । कः प्रभुस्तस्य देशस्य शक्यं वानयितुं मुने । ८२४५
आचक्ष्व यद्यनुग्राह्या वयं ते देवतातिथे । तमुवाच मुनिश्रेष्ठः प्रहसन्निव भारत ।
यहाय दक्षिणे हस्ते महतस्तपसो निधिः । मन्दरः पर्व्वतश्रेष्ठो वीर कामगमं वनं ।
तत्र चैवंविधं पुष्पं भोः सृष्टिः शूलपाणिनः । न तु तत्र वने कश्चिद्धर्च्छन्देन महात्मनः ।
प्रवेष्टुं लभते तद्धि रक्षन्ति प्रवरोत्तमाः । नानाप्रहरणा घोरा नानावेशा दुरासदाः ।
अवध्याः सर्व्वभूतानां महादेवाभिरक्षिताः । नित्यं प्रक्रीडते तत्र सोमः सप्रवरो हरः । ८२५०
मन्दारद्रुमषण्डेषु सर्व्वात्मा सर्व्वभावनः । तपोविशेषैराराध्य हरं त्रिभुवनेश्वरं ।
शक्यं मन्दारपुष्पाणि प्राप्तुं कश्यपवंशज । । स्त्रीरत्नमणिरत्नानि यानि चान्यानि चाप्यथ ।
काङ्क्षितानि फलन्ति स्म ते द्रुमा हरवल्लभाः । न तत्र सूर्य्यः सोमोऽथ तपत्यतुलविक्रम ।
स्वयम्प्रभं तरुवनं तद्धि दुःखविवर्ज्जितं । तत्र गन्धान् स्रवन्त्यन्ये वस्त्राण्यन्ये महाद्रुमाः ।
वासांसि विविधान्यन्ये सुगन्धीनि महाबल । भक्ष्यं भोज्यञ्च पेयञ्च चोष्यं लेह्यं तथैव च । ८२५५
तरुभ्यः स्रवते तेभ्यो विविधं मनसेप्सितं । पिपासा वा बुभुक्षा वा ग्लानिश्चिन्ताऽपि वाऽनघ ।
न मन्दारवने वीर भवतीत्युपधार्य्यतां । न ते वर्णयितुं शक्या गुणा वर्षशतैरपि ।
गुणा ये तत्र वर्त्तन्ते स्वर्गाद्बहुगुणोत्तराः । अतीव विजयेल्लोकान् स महेन्द्रान्न संशयः ।
एकाहमपि यस्तत्र वसेद्दै दितिजोत्तम । स्वर्गस्यापि हि तत् स्वर्गं सुखानामपि तत् सुखं ।
सभूव जगतः सर्व्वमिति मे धीयते मनः । ८२६०
इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे पञ्चचत्वारिंशदधिकशततोऽध्यायः ॥ १४५ ॥
॥ वैशम्पायन उवाच ॥ अन्धको नारदवचः श्रुत्वा तत्त्वेन भारत । मन्दरं पर्व्वतं गन्तुं मनो दध्रे महासुरः ।
सोऽसुरान् सुमहातेजाः समानीय महाबलः । जगाम मन्दरं क्रुद्धो महादेवाश्रयं तदा ।

तं महाभ्रप्रतिच्छन्नं महौषधिसमाकुलं। नानाविहङ्गसमाकीर्णं महर्षिगणसेवितं।
चन्दनागुरुवृक्षाढ्यं सरलद्रुमसङ्कुलं। किन्नरोद्गीतरम्यञ्च बहुनागसमाकुलं।
वातोद्धूतैर्वनैः फुल्लैर्नृत्यन्तमिव च क्वचित्। प्रस्रुतैर्धातुभिश्चित्रैर्विलिप्तमिव च क्वचित्। ८२६५
पक्षिस्वनैः सुमधुरैर्नदन्तमिव च क्वचित्। हंसैः शशिप्रभैः कीर्णं प्रपतद्भिरितस्ततः।
महाबलैश्च महिषैश्चरद्भिर्दैत्यनाशनैः। चन्द्रांशुविमलैः सिंहैर्भूषितं हिमसन्निभं।
मृगराजशताकीर्णं मृगवृन्दनिषेवितं। स मन्दरगिरिं प्राह रूपिणं बलदर्पितः।
वेत्सि त्वं हि यथाऽवध्यो वरदानादहं पितुः। मम चैव वशे सर्व्वं त्रैलोक्यं सचराचरं।
प्रतियोद्धुं न मां कश्चिदिच्छत्यपि गिरे भयात्। पारिजातवनञ्चास्ति तव सानौ महागिरे। ८२७०
सर्व्वकामप्रदैः पुष्पैर्भूषितं रत्नमुत्तमं। तदाच्छिद्योपभोक्ष्यामि तदहं तव सानुजं।
किं करिष्यसि क्रुद्धस्त्वं मनो हि त्वरते मम। त्रातारं नात्र पश्यामि मया त्वत्पीडितस्य ते।
इत्युक्तो मन्दरस्तेन तत्रैवान्तरधीयत। ततोऽन्धकोऽतिहर्षितो वरदानेन दर्पितः।
मुमोच नादं सुमहदिदं वचनमब्रवीत्। याच्यमानो मया नाम यस्मात्त्वं बहुमन्यसे।
अहं चूर्णीकरोमि त्वां बलं पर्व्वत पश्य मे। एवमुक्त्वा गिरेः शृङ्गमुत्पाट्य बहुयोजनं। ८२७५
निष्पिपेष गिरेस्तस्य शृङ्गेऽन्यत्र वीर्य्यवान्। सह तैरसुरैः सर्व्वैर्वरदानेन दर्पितः।
तं प्रच्छन्ननदीजालं भज्यमानं महागिरिं। विदित्वा भगवान् रुद्रस्त्वकारानुग्रहं गिरेः।
सविशेषतरं वीर मत्तद्विपमृगायुतं। नदीजालैर्बहुतरैरायुतं चित्रकाननं।
नभस्पृतैः पुरा यद्वत्तद्वदेव विराजते। अथ देवप्रभावेण शृङ्गाण्युत्पाटितानि तु।
छिन्नानि चासुरानेव घ्नन्ति घोराणि भारत। छिन्ना ये प्रपलायन्ते शृङ्गाणि तु महासुराः। ८२८०
शृङ्गैस्तैस्ते स्म बध्यन्ति पर्व्वतस्य जनाधिप। ये त्वन्यास्त्वसुरास्तत्र तिष्ठन्ति गिरिसानुषु।
शृङ्गैस्ते न स्म बध्यन्ते मन्दरस्य महागिरेः। ततोऽन्धकस्तदा दृष्ट्वा सेनां तां मृदितां तथा।
हर्षितः सुमहानादं नदित्वेदं तदाऽब्रवीत्। आक्रन्दे तं वनं यस्य युद्धार्थमुपतिष्ठतु।
किं त्वयाऽचल युद्धेन हताः स्म चाद्य भो रणे। एवमुक्ते त्वन्धकेन वृषभेण महेश्वरः।
संप्राप्तः शूलमुद्यम्य देवोऽन्धकजिघांसया। प्रमथानां गणैश्चैव वृतो वै बहुलोचनः। ८२८५
तथा भूतगणैश्चैव धीमान् भूतगणेश्वरः। प्रचकम्पे ततः कृत्स्नं त्रैलोक्यं हर्षिते हरे।
सिन्धवश्च प्रतिस्रोतमूहुः प्रज्वलितोदकाः। जग्मुर्दिशोऽग्निदाहांश्च सर्व्वतो हरतेजसा।
युयुधुश्च ग्रहाः सर्व्वे विपरीता जनाधिप। चेलुश्च गिरयस्तत्र काले कुलकुलोदय।
प्रववर्षाथ पर्ज्जन्यः सधूमाङ्गारवृष्टयः। उष्णाभावञ्च माद्यामीत् सूर्य्यः शीतप्रभस्तथा।
न मन्त्रापि विदुस्तत्र मुनयो ब्रह्मवादिनः। वडवाः सुषुवुर्गा वै गावोऽश्वानपि चानघ। ८२९०
पेतुर्वृक्षाश्च मेदिन्यामच्छिन्ना भस्मसात् कृताः। वा धन्ते वृषभा गाश्च गावश्चारुरुहुर्वृषान्।
राक्षसा यातुधानाश्च पिशाचाश्चापि सर्व्वशः। विपरीतं जगद्दृष्ट्वा मह।देवस्तथागतं।

मुमोच भगवाञ्छूलं प्रदीप्ताग्निसमप्रभं । तत् पपात हरोत्सृष्टमन्धकोरसि दुर्द्धरं ।
भस्मसाच्चाकरोद्रौद्रमन्धकं साधुकण्टकं । ततो देवगणाः सर्व्वे मुनयश्च तपोधनाः ।
शङ्करं तुष्टुवुश्चैव जगच्छत्रौ निवर्हिते । देवदुन्दुभयो नेदुः पुष्पवृष्टिः पपात च । ८१९५
त्रैलोक्यं निहतश्चासीत्तस्मिन् विगतज्वरं । प्रजगुर्द्देवगन्धर्व्वा ननृतुश्चाप्सरोगणाः ।
जेपुश्च ब्राह्मणा वेदानीजुश्च क्रतुभिस्तथा । ग्रहाः प्रकृतिमापेदुर्ज्जज्वलुर्ग्नयो यथा पुरा ।
न जज्वाल जले वह्निराशाः सर्व्वाः प्रसेदिरे । मन्दरः पर्व्वतश्रेष्ठः पुरेव विरराज च ।
श्रिया परमया जुष्टः सर्व्वतेजःसमुच्छ्रयात् । रेमे सोमश्च भगवान् पारिजातवने हरः ।
सुप्रचाराम् सुरान् कृत्वा शक्रादीन् धर्म्मतः प्रभुः । ८२००

इति श्रीमहाभारते खिलेषु हरिवंशे विष्णुपर्व्वणि अन्धकवधे षट्चत्वारिंशदधिकशततोऽध्यायः ॥ १४६ ॥

॥ जनमेजय उवाच ॥ मुनेऽन्धकवधः श्राव्यः श्रुतोऽयं खलु भो मया । शान्तिस्त्रयाणां लोकानां कृता देवेन धीमता ।
निकुम्भस्य हतं देहं द्वितीयं चक्रपाणिना । यदर्थञ्च यथा चैव तद्भवान् वक्तुमर्हति ।
॥ वैशम्पायन उवाच ॥ श्रद्दधानस्य राजर्षे वक्ष्ये भवतोऽनघ । चरितं लोकनाथस्य हरेरमिततेजसः ।
द्वारवत्यां निवसतो विष्णोरतुलतेजसः । समुद्रयात्रा संप्राप्ता तीर्थे पिण्डारके नृप ।
उग्रसेनो नरपतिर्वसुदेवश्च भारत । निक्षिप्तौ नगराध्यक्षौ शेषाः सर्व्वे विनिर्गताः । ८२०५
पृथग्बलः पृथग्धीमान् लोकनाथो जनार्द्दनः । गोष्ठ्यः पृथक् कुमाराणां नृदेवामरतेजसां ।
गणिकानां सहस्राणि निःसृतानि नराधिप । कुमारैः सह वार्ष्णेयैरूपवद्भिः स्वलङ्कृतैः ।
दैत्याधिवासं निर्ज्जित्य यदुभिर्दृढविक्रमैः । वेश्या निवेशिता वीर द्वारवत्यां सहस्रशः ।
सामान्यास्ताः कुमाराणां क्रीडानार्य्यो महात्मनां । इच्छाभोग्या गुणैरेव राजन्या वेश्ययोषितः ।
स्थितिरेषा हि भैमानां कृताः कृष्णेन धीमता । स्त्रीनिमित्तं भवेद्वैरं मा यदूनामिति प्रभो । ८२१०
रेवत्या चैकया सार्द्धं बलो रेमे ऽनुकूलया । चक्रवाकानुरागेण यदुश्रेष्ठः प्रतापवान् ।
कादम्बरीपानकलो भूषितो वनमालया । चिक्रीड सागरजले रेवत्या सहितो बलः ।
षोडशस्त्रीसहस्राणि जले जलजलोचनः । रामयामास गोविन्दो वैश्वरूप्येण सर्व्वदृक् ।
अहमिष्टा मया सार्द्धं जले रमति केशवः । इति ता मेनिरे सर्व्वा राजन्नारायणस्त्रियः ।
सर्व्वाः सुरतसङ्क्लिष्टाः सर्व्वाः सुरततर्पिताः । मानमूहुश्च ताः सर्व्वा गोविन्दसङ्गमानजं । ८२१५
अहमिष्टाऽहमिष्टेति स्निग्धे परिजने तदा । नारायणस्त्रियः सर्व्वा मुदा सम्भाषिरे शुभाः ।
करजद्विजचिह्नानि कुचाधरगतानि ताः । दृष्ट्वा दृष्ट्वा जहृषिरे दर्पणेष्वमलेक्षणाः ।
गोत्रमुद्दिश्य कृष्णस्य जगिरे कृष्णयोषितः । पिबन्त्य इव कृष्णस्य नयनैर्वदनाम्बुजं ।
कृष्णार्पितमनोदृष्ट्यः कान्ता नारायणस्त्रियः । मनोहरतरा राजन्नभवन्नेकनिश्चयाः ।
एकार्पितमनोदृष्ट्यो नेष्यौ ताश्चक्रिरेऽङ्गनाः । नारायणेन देवेन तर्प्यमाणमनोरथाः । ८२२०
स्थिरांश्च गर्व्विताञ्चक्रुः सर्व्वा निरवशेषतः । वाससं वेशवसनं वरम्भवाहदर्शनाः ।

ताभिस्तु सह चिक्रीड सर्व्वाभिर्हरिरात्मवान् । वैश्वरूप्येण विधिना समुद्रे विमले जले ।
उवाह सर्व्वगन्धाढ्यं स्वच्छं वारि महोदधिः । तोयञ्चालवणं वीर वासुदेवस्य शासनात् ।
गुल्फदघ्नं जानुदघ्नमूरुदघ्नमथापि वा । नार्य्यस्ताः स्तनदघ्नं वा जलं समभिकाङ्क्षितं ।
सिषिचुः केशवं पत्न्यो धारा इव महोदधिं । सिषेच ताश्च गोविन्दो मेघः फुल्ललता इव । ८१२५
अवलम्ब्यापराः कण्ठे हरिं हरिणलोचनाः । उपगूहस्व मां वीर पतामीत्यब्रुवन् स्त्रियः ।
काश्चित् काष्ठमयैस्तेरुः प्लवैः सर्व्वाङ्गशोभनाः । क्रौञ्चवर्हिणनागानामाकारसदृशैः स्त्रियः ।
मकराकृतिभिश्चान्या मीनाभैरपि चापराः । बहुरूपाकृतिधरैः पुप्लुवुश्चापराः स्त्रियः ।
स्तनकुम्भैस्तथा तेरुः कुम्भैरिव तथाऽपराः । सलिले तु समुद्रस्य हर्षयन्त्यो जनार्द्दनं ।
रराम सह रुक्मिण्या जले तस्मिन्मुदा युतः । येनैव कार्य्ययोगेन रमत्यमरसत्तमः । ८१३०
तत्तदेव हिताश्चक्रुर्मुदा नारायणस्त्रियः । तनुवस्त्रावृतास्तन्व्यो लीलायन्त्यस्तथाऽपराः ।
चिक्रीडुर्वासुदेवस्य जले जलजलोचनाः । यस्या यस्यास्तु यो भावस्तां तां तेनैव केशवः ।
अनुप्रविश्य भावज्ञो निनायात्मवशं वशी । हृषीकेशोऽपि भगवान् हृषीकेशः सनातनः ।
बभूव देशकालेन कान्तावशगतः प्रभुः । कुलशीलसमोऽस्माकं योग्योऽयमिति मेनिरे ।
देशरूपेण वर्त्तन्तमङ्गनास्ता जनार्द्दनं । दृष्ट्वा दाक्षिण्ययुक्तन्तु स्मितपूर्व्वाभिभाषिणं । ८१३५
कृष्णं भार्य्याश्चक्रमिरे भक्त्या च बहुमेनिरे । पृथग्गोष्ठ्यः कुमाराणां प्रकाशं स्त्रीगणैः सह ।
अलञ्चक्रुर्जलं वीराः सागरस्य गुणाकराः । गीतनृत्यविधिज्ञानां तासां स्त्रीणां जनेश्वर ।
तेजसा व्याहृतानान्ते दाक्षिण्यात्तस्थिरे वशे । उटणन्तश्चानुगीतानि तथा स्वाभिनयान्यपि ।
तूर्य्याण्युत्तमनारीणां मुमुदुर्यदुपुङ्गवाः । पञ्चचूडां ततः कृष्णः कौवेरीश्च वराप्सराः ।
माहेन्द्रीश्चानयामास वैश्वरूप्येण हेतुना । ताः प्रोवाचाप्रमेयात्मा सान्त्वयित्वा जगत्प्रभुः । ८१४०
उत्थापयित्वा प्रणताः कृताञ्जलिपुटास्तदा । क्रीडायुवत्यो भैमानां प्रविशध्वमशङ्किताः ।
मत्प्रियार्थं वरारोहा रमयध्वञ्च यादवान् । दर्शयध्वं गुणान् सर्व्वान्नृत्यगीतैरहःसु च ।
तथाऽभिनययोगेषु वाद्येषु विविधेषु च । एवं कृते विधास्यामि श्रेयो वो मनसेप्सितं ।
मच्छरीरसमा ह्येते सर्व्वे निरवशेषतः । शिरसाज्ञां तु ताः सर्व्वाः प्रतिगृह्य हरेस्तदा ।
क्रीडायुवत्यो भैमानां ताः प्रविष्टाऽप्सरोवराः । ताभिः प्रविष्टमात्राभिर्द्योतितः स महार्णवः । ८१४५
सौदामिनीभिर्नभसि घनवृन्द इवानघ । ता जले व्यनवन् स्थित्वा जलवाद्यान्यवादयन् ।
चक्रुश्चाभिनयं सम्यक् स्वर्गावास इवाङ्गनाः । गन्धैर्म्माल्यैश्च ता दिव्यैर्वस्त्रैश्चायतलोचनाः ।
हेलाभिर्हावभावैश्च जह्रुर्भैममनांस्यथ । कटाक्षैरिङ्गितैर्हासैः केलिरोषैः प्रसादितैः ।
मनोऽनुकूलैर्भैमानां समाजह्रुर्मनांसि ताः । उत्क्षिप्योत्क्षिप्य चाकाशं वातस्कन्धात् वहंश्च ताम् ।
मदिरावशगान् भैमानानयन्ति वराङ्गनाः । कृष्णोऽपि तेषां प्रीत्यर्थं विजह्रे वियति प्रभुः । ८१५०

सर्व्वैः षोडशभिः सार्द्धं स्त्रीसहस्रैर्मुदाऽन्वितः । प्रभावज्ञास्तु ते वीराः कृष्णस्यामिततेजसः ।
न जग्मुर्विस्मयं भैमा गाम्भीर्य्यं परमास्थिताः । केचिद्रैवतकं गत्वा पुनरायान्ति भारत ।
गृहाण्यन्ये वनान्यन्ये काङ्क्षितान्यरिमर्द्दन । अपेयः पेयसलिलः सागरश्चाभवत्तदा ।
आज्ञया लोकनाथस्य विष्णोरतुलतेजसः । अधावन् स्थलवच्चापि जले जलजलोचनाः ।
गृह्य हस्ते तथा नार्य्यो युक्ता मज्जंस्तथापि ते । भक्ष्यभोज्यानि पेयानि चोष्यं लेह्यं तथैव च । ८१५५
बहुप्रकारं मनसा ध्याते तेषां भवत्युत । अम्लानमाल्यधारिण्यस्ताः स्त्रियस्तान् अनिन्दिताः ।
रहःसु रमयाञ्चक्रुः स्वर्गे देववतानुगाः । नौभिर्गृहप्रकाराभिश्चित्रक्रीडुरपराजिताः ।
स्नाताऽनुलिप्ता मुदिताः सायाह्नेऽन्धकवृष्णयः । आयताश्चतुरस्राश्च वृत्ताश्च स्वस्तिकास्तथा ।
प्रासादा नौषु कौरव्य विहिता विश्वकर्म्मणा । कैलासमन्दरच्छन्दा मेरुच्छन्दास्तथैव च ।
तथा नानावयश्छन्दास्तथैवाम्रगरूपिणः । वैदूर्य्यतोरणैश्चित्राश्चित्राभिर्म्मणिभक्तिभिः । ८१६०
मसारगल्वर्कमयैश्चित्रा भक्तिशतैरपि । प्रक्रीडगरुडच्छन्दाश्चित्राः कनकरीतिभिः ।
क्रौञ्चच्छन्दाः शुकच्छन्दा गजच्छन्दास्तथाऽपरे । कर्णधारैर्गृहीतास्ता नावः कार्त्तस्वरोज्ज्वलाः ।
सलिलं क्षोभयामासुः सागरस्य महोर्म्मिमत् । समुच्छ्रितैः सितैः पोतैर्यानपात्रैस्तथैव च ।
नौभिश्च शिविकाभिश्च शुशुभे वरुणालयः । पुराण्याकाशगामीनि गन्धर्व्वाणामितस्ततः ।
बभ्रमुः सागरजले भैमयानानि भारत । नन्दनच्छन्दयुक्तेषु यानपात्रेषु भारत । ८१६५
नन्दनप्रतिमं सर्व्वं विहितं विश्वकर्म्मणा । उद्यानानि सभा वृक्षा दीर्घिकाः स्यन्दनानि च ।
निवेशितानि शिल्पानि तादृशान्येव सर्व्वशः । स्वर्गच्छन्देषु चान्येषु समासात् स्वर्गसन्निभाः ।
नारायणाज्ञया वीर विहिता विश्वकर्म्मणा । वनेषु रुरुवुर्हृद्यं मधुरञ्चैव पक्षिणः ।
मनोहरतरञ्चैव भैमानाममितौजसां । देवलोकोद्भवाः श्वेता विलेपुः कोकिलास्तथा ।
मधुराणि विचित्राणि यदूनां काङ्क्षितानि च । चन्द्रांशुसमरूपेषु हर्म्यपृष्ठेषु बर्हिणः । ८१७०
ननृतुर्म्मधुरारावाः शिखण्डिगणसंवृताः । पताकायानपात्राणां सर्व्वपक्षिगणायुताः ।
भ्रमरैरुपगीताश्च स्रग्दामासक्तवासिभिः । नारायणाज्ञया वृक्षाः पुष्पाणि मुमुचुर्भृशं ।
ऋतवश्चानुरूपाणि विहायसि गतास्तदा । ववौ मनोहरो वातो रतिखेदहरः सुखः ।
रजोभिः सर्व्वपुष्पाणां युक्तश्चन्दनशैत्यभृत् । शीतोष्णमिच्छतां तत्र बभूव वसुधापते ।
वासुदेवप्रसादेन भैमानां क्रीडतां तदा । न क्षुत्पिपासे न ग्लानिर्न चिन्ता शोक एव च । ८१७५
आविवेश तदा भैमान् प्रभावाच्चक्रपाणिनः । अप्रशान्तमहातूर्य्या गीतनृत्योपशोभिता ।
बभूव सागरक्रीडा भैमानाममितौजसां । बहुयोजनविस्तीर्णं समुद्रं सलिलाशयं ।
रुद्ध्वा चिक्रीडुरिन्द्राभा भैमाः कृष्णाभिरक्षिताः । परिच्छदस्यानुरूपं यानपात्रं महात्मनः ।
नारायणस्य देवस्य विहितं विश्वकर्म्मणा । रत्नानि यानि त्रैलोक्ये विशिष्टानि विशाम्पते ।
कृष्णस्य तानि सर्व्वाणि यानपात्रेऽतितेजसः । पृथक् पृथङ्निवासाश्च स्त्रीणां कृष्णस्य भारत । ८१८०

एतस्य मोक्षविषये सर्व्वज्ञानमये पदे । तस्मात् षडक्षराणि प्रभवन्त्युद्भवन्ति च ।
ब्रह्मयज्ञन्तु यजतो योगात् वेदात्मकं तदा । ब्राह्मणो विपुलं ज्ञानमैश्वर्य्यञ्च प्रवर्त्तते ।
ततः प्रथममैश्वर्य्यं युञ्जानेन प्रवर्त्तितं । ब्रह्मणा ब्रह्मभूतेन भूतानां हितमिच्छता ।
तदा त्वाकाशमैश्वर्य्यं युञ्जानस्य प्रवर्त्तते । ब्राह्मणो ब्रह्मभूतस्य निर्व्विकारेण कर्म्मणा ।
तदाऽन्तरीक्षं संप्राप्तं ब्रह्म निर्व्वाणमव्ययं । संहारः सर्व्वभूतानां नराणां ब्रह्मवादिनां ।
ध्रुवमैश्वर्य्ययोगाणां प्रतिपद्यन्ति देहिनः । आकाशैश्वर्य्यभूतेन संयोगे ब्रह्मवादिनां ।
प्रवर्त्तमानमैश्वर्य्यं वायुभूतं करोति च । विकारैर्व्वहुभिः प्राप्तैः सम्पतद्भिर्व्वहावलैः ।
एतैर्व्विकारैः संसृष्टैर्निर्दहत्येव सर्व्वशः । ध्रुवमैश्वर्य्यमापन्नः सिद्धो भवति ब्राह्मणः ।
शरीरादभिनिष्क्रम्य आकाशेन प्रधावति । निरालम्बो निरालम्बामाक्रम्य मनसा ततः ।
ऐश्वर्य्यभूतो भूतात्मा चरन् दिवि न दृश्यते । चक्षुर्भिर्व्वहुभिर्व्वीक्ष्य पुरन्दरसमैरपि ।
ओङ्कारं ये त्वधीयन्ते मनसा ब्रह्मसत्तमाः । विमुक्ताः सर्व्वकर्म्मभ्यस्ते तं पश्यन्ति साधवः ।
एतद्धि परमं ब्रह्म ब्राह्मणानां मनीषिणां । अन्तश्चरति भूतानां विद्धि चेतनया सह ।
एष शब्दो महानादः पुराणो ब्रह्मसम्भवः । वायुभूतोऽक्षरं प्राप्तो वदन्त्येवं द्विजातयः ।
अरूपी रूपसम्पन्नो धातुभिः सह सङ्गतः । अन्तश्चरति भूतेषु कामकारकरो वशी ।
ततः परमनुध्याय मनसा पूर्व्ववच्च । वेदात्मकं तदा यश्च चिन्तयन्तो मनीषिणः ।
ब्राह्मणाः शुचयो दान्ता यज्ञोऽप्युक्तस्तदनन्तरात् । ब्रह्मलोकं त्वाक्रमाणा वैष्णवं पदमुत्तमं ।
पदहेतोः क्रियाः सर्व्वाः कुर्व्वन्ति विगतज्वराः । न हेते प्रलयादाने भवमिच्छन्ति भारत ।
त्रिभिर्माल्योपहारैश्च प्रतिमानैश्च वै द्विजाः । यजन्ति परमात्मानं विष्णुं सत्यपराक्रमं ।
यजन्तं विक्रमश्चैव ब्रह्मणाः संप्रपश्चिरे । ब्रह्म च वैष्णवं तेजो वेदोक्तैर्व्वचनैर्नृप ।
ब्राह्मणैश्च विद्भिश्च ब्रह्मज्ञैर्ब्रह्मवादिभिः । शुचिभिः कर्म्मनिर्मुक्तैः सत्यव्रतपरायणैः ।
धातुभिर्म्मोक्षकाले च महात्मा सम्प्रदृश्यते । तदेव परमं ब्रह्म वैष्णवं परमाद्भुतं ।
रसात्मकं तदैश्वर्य्यं विकारान्ते प्रदृश्यते । घोररूपा विकारास्ते व्यथयन्ति महात्मनः ।
सङ्घात्यतीव तोयेन क्षुभ्यमाणो विचेतनः । उर्म्मिभिश्छाद्यते चैव शीतोष्णाभिर्विकारतः ।
महार्णवगतश्चैव दृश्यते न च पश्यति । भग्नश्चैव महानद्यः सलिले चैव सीदति ।
सीदमानश्च सलिले स शीतात्पात्यते बलात् । आसनाच्छादनाच्चैव मुच्यमानो विचेतनः ।
अभ्रे प्रपद्यमानश्च तोयेन परिषिच्यते । शुक्लवर्णेन बहुधा चोत्तमा मूर्द्धि सर्व्वशः ।
सर्व्वं ज्योतिरवेक्षंश्च शुभ्रैः पीतैश्च छाद्यते । वारिपूरैः सुगम्भीरैर्व्विपुलैरिव माचितैः ।
एतैर्व्विकारैः संसृष्टैर्निर्दहत्येव सर्व्वशः । ध्रुवमैश्वर्य्यमासाद्य सिद्धो भवति ब्राह्मणः ।
रसात्मकं तदैश्वर्य्यं विज्ञापादभिधिःसृतं । सहस्रधारं वितत्तं मेघस्थं समुपागतं ।
रसांश्च विविधान् योगात् संसिद्धः सृजते प्रभुः । धारयेत् सर्व्वभूतानां योगप्राप्तेन हेतुना ।

प्रज्ञया तेजसा योगात्तस्मात् प्राचेतसः प्रभुः । विष्णुरेव महायोगी कर्म्मणामन्तरं गतः ।
ततो निर्व्वाणसंभूताः शूद्राः कर्म्मविवर्ज्जिताः । तस्मान्नार्हन्ति सत्कारं न चात्र ब्रह्म विद्यते ।
यथाऽग्नौ धूमसंघातो ह्यरण्या मथ्यमानया । प्रादुर्भूतो विसर्पन् वै नोपयुज्यति कर्म्मणि ।
एवं शूद्रा विसर्पन्तो भुवि कार्त्स्न्येन जन्मना । नासंस्कृतेन धर्म्मेण वेदप्रोक्तेन कर्म्मणा ।
ततोऽन्ये दक्षपुत्रास्तु सम्भूता ब्रह्मयोनयः । बलवन्तो महोत्साहा महावीर्य्या महौजसः । ११८२५
पित्रा प्रोक्ता महात्मानो दक्षेणायज्ञकर्म्मणा । अन्तमिच्छाम्यहं श्रोतुं धात्र्याः पुत्राऽवनौ स्वयं ।
ततो विधास्ये तत्त्वज्ञः प्रजानां विपुलं बलं । येषाञ्च विपुलत्वाद्धि ममापि विपुलाः प्रजाः ।
न तेषां दर्शयद्देवी चक्षुषा रूपमात्मनः । प्रजापतिसुतानां वै विपुला मानमिच्छतां ।
आत्मनो भावनिर्दृष्टं भांष्ये कृतयुगे तदा । अनिन्दी सर्व्वभूतानामक्षयानुग्रहात्मिका ।
संवेद्जननी धात्री चेति माता प्रचोदिता । धनुतां तनुताञ्चैव जन्तूनां कर्म्मभोगिनां । ११८३०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥
॥ जनमेजय उवाच ॥ साध्वहं श्रोतुमिच्छामि चेतायां ब्राह्मणोत्तम । यं श्रुत्वा सर्व्वविद्यानां परं पश्येयमव्ययं ।
॥ वैशम्पायन उवाच ॥ दक्षस्तु पुरानन्तस्य सौभाग्यं पुरुषोत्तमः । योगायोगेश्वरात्मानं निर्ददौ गिरिमूर्द्धनि ।
सुजानुः पीनजघना सुभ्रूः पद्मनिभानना । रक्तान्तनयना कान्ता सर्व्वभूतमनोरमा ।
दक्षः प्राचेतसस्तस्यां कन्यायां जनयत् प्रभुः । देवाद्धि योगविधिना कन्याः पद्मनिभाननाः ।
दक्षः पुरुषरूपेण स्त्रीरूपमपहाय च । दर्शने सर्व्वभूतानां कान्तः कान्ततरोऽभवत् । ११८३५
ताः कन्याः प्रददौ दक्षः स्वयं प्राचेतसः प्रभुः । ब्रह्मदेयेन विधिना ब्रह्मप्राप्तेन भारत ।
प्रददौ दश धर्म्माय कश्यपाय चयोदश । सप्तविंशति सोमाय पत्नीहेतोः समाहितः ।
दक्षो दत्त्वाऽथ ताः कन्याः ब्रह्मचर्य्यं प्रपद्य च । ब्रह्मणाऽभ्युषितं पुण्यं समाहितमना मुनिः ।
तप्यमानो मृगैः सार्द्धं चचार वसुधां नृप । तृणमूलफलैर्हृष्टो दक्षश्च तपसा सह ।
मृगास्तु तस्य चरितं फलं मोदन्ति ब्राह्मणाः । दोषिताः पुण्यकर्म्माणस्तपसा दग्धकिल्बिषाः । ११८४०
संग्रामकाले कालज्ञः प्रस्रिमाद्भ्रियते मुनिः । कर्म्म यस्य कृतं तात सिद्धिं पश्यति स्वर्पणं ।
दानमानप्रवीराश्च निरुद्वेगा निरामिषाः । मृगैः सह जरां यान्ति सपत्नीकाः सपुत्रिणः ।
ब्राह्मणास्तोषसंसिद्धा अनिन्द्ये प्रथमे पदे । ब्राह्मणाऽभ्युषितस्ताश्च ब्रह्मधेनुमिहोच्यते ।
यतिभिः कर्म्मभिर्युक्तैर्व्वर्ज्जितक्रोधैर्ज्जितेन्द्रियैः । चरद्भिर्व्वसुधां विप्रैरकिञ्चनपथैषिभिः ।
या प्रजा पूर्व्वमारूढा मानवी ब्रह्मचारिणी । सैवैषा व्यक्तमापन्ना स्वभावदुरतिक्रमा । ११८४५
अव्यक्ता व्यक्तमापन्ना स्वभावदुरतिक्रमा । व्यक्ताव्यक्तं गमिष्यैषा कालधर्म्मात्मरोपितं ।
स्थावरा जङ्गमाश्चैव सूक्ष्माः स्थूलाश्च भारत । कालयोगेन कालज्ञा भवन्ति न भवन्ति च ।
एताश्चैताः प्रजाः सर्व्वा दक्षकन्यासु जज्ञिरे । कश्यपेनाव्ययेनेह संयुक्ताः कालधर्म्मणा ।

आदित्या वसवो रुद्रा विश्वे च समरुद्गणाः । नागाश्चानेकशिरसः साध्या वै पन्नगास्तथा ।
गन्धर्व्वाः किन्नरा यक्षाः सुपर्णाश्च तथाऽपरे । महत्यान् सह पक्षैश्च किन्नराश्च सुबान्धवः । ११८६०
गावः पशुगणैः सार्द्धं नराश्च वसुधाधिप । धाराधराश्च वसुधाधातारश्च धराधराः ।
गजाः सिंहाश्च व्याघ्राश्च हयाः पक्षधरास्तथा । खड्गा विषाणिनश्चैव वृषभाश्च मृगास्तथा ।
चतुर्व्विषाणा नागेन्द्राः पद्माभा वर्णतः शुभाः । सर्व्वलक्षणसम्पन्नाः प्राणिनः कामरूपिणः ।
तथाऽप्सरसस्तथा नागा देवैः सौम्यैः पराक्रमैः । मुनयः पुनरद्भुता धर्म्मविदो सनातने ।
देवब्राह्मणवशे लोके धर्म्मज्ञा वेदगोचराः । यथोद्भूताः सुराः सर्व्वे दिवि लोके प्रतिष्ठिताः । ११८६५
ये चान्ये तपसा सिद्धा महात्मा मनुजाधिप । ब्रह्मचर्य्येण संसिद्धाः परिचर्य्यागता गुरोः ।
ये च योगगतिं प्राप्ताः सिद्धिश्चेतोऽर्थलोपने । क्षमाधिकैः कर्म्मजन्यैर्गतिं लभन्ति वै द्विजाः ।
त्रिलोकस्थलक्षयः शान्ताः सपत्नीका दृढव्रताः । सर्व्वे ते दिवि चरा भवन्ति चरितव्रताः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ वैशम्पायन उवाच ॥ पितामहं पुरस्कृत्य मेरुपृष्ठे समाहिताः । जटाजिनधरा विप्राश्चाक्रोधा जितेन्द्रियाः ।
पर्व्वताम्बरसंसिद्धे बहुपादपसंवृते । धातुसंरञ्जितशिले रम्ये निस्तृणकण्टके । ११८७०
त्रयाणां ब्रह्मवेदानां पञ्चस्वरविराजिते । मन्त्रयज्ञपरा नित्यं नित्यं ब्रह्महिते रताः ।
एकमेवाग्निमाधाय सर्व्वे ब्राह्मणपुङ्गवाः । विभिद्युर्मन्त्रविषयैः सुसमाहितमानसाः ।
त्रिधा प्रणीतो ज्वलनो मुनिभिर्व्वेदपारगैः । अतस्त्रेतात्वमापन्नो यद्येकस्त्रिविधः कृतः ।
एक एव महानग्निस्त्रिविधा संप्रवर्त्तते । स्वाहाकारेण धर्म्मज्ञ मन्त्राणां कार्य्यसिद्धये ।
स्वयञ्च दृष्टः सम्प्राप्तो भगवान् भूतसत्कृतः । ब्रह्मा ब्राह्मणनिर्म्माता सर्व्वभूतपितामहः । ११८७५
दण्डी चर्म्मी शरी खड्गी शिखी पद्मनिभाननः । अभवद्ध्यानसन्तापो जितक्रोधो जितेन्द्रियः ।
यजते पुष्करे ब्रह्मा मेधया सह सङ्गतः । रुद्रप्रोक्तानि सामानि गीयन्ते ब्रह्मवादिभिः ।
घृतं क्षीरं यवा व्रीहिः सर्व्वं परमकं हविः । वेदप्रोक्तं मखे न्यस्तं कल्पितं ब्रह्मणः पदे ।
निर्म्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितां । स ब्रह्मा प्रथमं तस्मिन्नग्निमन्थ प्रवर्त्तयत् ।
न ह्यन्यद्विहितं द्रव्यं यथाऽग्निर्यज्ञकर्म्मणि । प्रवर्त्तते विभागैर्व्वा हुतद्रव्यमयं वसं । ११८८०
फलानि तैः प्रयुक्तानि हवींषि विततेऽध्वरे । प्रयुञ्जते विशेषज्ञा मुनयो ब्रह्मवादिनः ।
पद्मासे चतुरो वेदान् संप्रभाषद्बृहस्पतिः । ब्रह्मघोषो ब्राह्मणो यज्ञे परया ब्रह्मसम्पदा ।
शिक्षाक्षरसमेतायाः मधुरायाः समन्ततः । सानुस्वरितरागायाः सरस्वत्याः प्रभाषते ।
तेन ब्राह्मणशब्देन ब्रह्मप्रोक्तेन भारत । विभाति स मखो व्यक्तं ब्रह्मलोक इवापरः ।
मुखमन्त्रा महोच्चारोर्णा ब्रह्मशब्दैरनामयैः । प्रयोगैः सम्प्रयुक्तैश्च अल्पमिव प्रवर्त्तते । ११८८५
समिद्भिः सोमकलशैः पात्रैश्च बहुविस्तरैः । यवैर्व्रीहिभिराज्यैश्च पूर्वैश्च जलभाजनैः ।

क्रमप्राप्तैश्च पशुभिः कर्म्मभिश्च पराश्रितैः। गोभिः पयस्विनीभिश्च पारिवर्त्तैश्च कोमलैः।
ब्रह्मवृद्धो वयोवृद्धस्तपोवृद्धश्च भारत। ब्रह्मज्ञानमयो देवो विद्यया सह सङ्गतः।
मानसैश्च क्रियामूर्त्ता ये च भूताः स्वयं नृप। ब्रह्मा कुरोति तांस्तस्मात्स्वहस्तैः सहितस्तदा।
तेजोमूर्त्तिधरैर्वेदैश्च तत्कर्म्मण्याऽभ्युपाव्रजत्। वेदप्रोक्तेन विधिना सर्व्वप्रायश्चितां नृप। ११८८०
निर्म्मथ्यारणिमाग्नेयीं शमीगर्भसमुत्थितं। यजते क्रतुना पूर्व्वमग्निष्टोमेन स प्रभुः।
सदस्यैस्तत्सदो व्यक्तं शुशुभे यज्ञकर्म्मणि। जल्पन्ते मधुरा वाचः सानुस्वारक्रियास्ततः।
कर्म्मभिश्च तपोयुक्तैर्वेदवेदाङ्गपारगैः। सूर्य्येन्दुसदृशैराजन् विरराज महाक्रतुः।
ब्रह्मघोषेण महता ब्रह्मवास इवापरः। वसुधामिव संप्राप्तैः सर्व्वैरेव दिवौकसैः।
वेदवेदाङ्गविद्भिश्च विनीतैर्ब्रह्मवादिभिः। व्रतागतैस्तपःश्रान्तैः स्वर्गलोके महीयते। ११८८५
ज्वलद्भिरिव विप्रैस्तैस्त्रिभिरेवाध्वरेऽग्निभिः। ब्रह्मलोक इवाभाति ब्रह्मणः स महाक्रतुः।
छन्दःप्रोक्तानि सामानि गायन्ति ब्रह्मवादिनः। वचनानि प्रयुक्तानि यजूंषि विततेऽध्वरे।
तपःश्रान्ता ब्रह्मपराः सत्यव्रतसमाहिताः। आययुर्मुनयः सर्व्वे मनोभिः श्रौतवादिभिः।
होता चैवाभवद्राजन् ब्रह्मत्वे च बृहस्पतिः। सर्व्वधर्म्मविदां श्रेष्ठः पुराणो ब्रह्मसम्मतः।
यजमानस्य यज्ञान्ते विष्णोः पूजां प्रयुज्य च। अदित्याः पश्चिमे गर्भे तपसा संवृते नृप। ११८९०
पदं विष्णुरजो ब्रह्मा निर्द्वन्द्वो निष्परिग्रहः। यतः पदसहस्राणि भविष्यन्त्युद्भवन्ति च।
अवध्यस्याप्रमेयस्य व्यतिरिक्तस्य कर्म्मभिः। आत्मनाऽपि यस्य मुनयो भवन्ति निष्परिग्रहाः।
परिग्रहाश्च विषया दोषप्राप्ता महीपते। दोषाश्च युगपत् सर्व्वे छादयन्ति मनो बलात्।
इन्द्रियग्रामविषये चरन्तो निष्परिग्रहाः। परिग्रहं शुभं धर्म्ममविद्यालक्षणं विदुः।
विद्यालक्षणसंयोगान्न मनश्छाद्यते नृप। यदि चेन्मुनिशब्देन पद्यते ब्रह्मवादिभिः। ११८९५
वेदविद्याव्रतस्नातैर्नियतैः कुरुसत्तम। दिवि लोकः सतां स्थानं लोकानां लोक उच्यते।
यत्र देवा हव्ययुक्ता न क्षयं यान्ति भारत। यजमानश्च भोगैः स्वैः कर्म्मप्राप्तोऽक्षते पदे।
मोदते सह पत्नीभिर्विज्वरो वसुधाधिप। यज्ञावसाने शैलेन्द्रं द्विजेभ्यः प्रददौ विभुः।
दयया सर्व्वभूतानां निर्म्मलेनान्तरात्मना। ते शैलसर्व्वगात्राणि परस्परविद्वेषिणः।
न शेकुः प्रविभागार्थं भेत्तुं सर्व्वायसैरपि। ततस्ते ब्राह्मणगणा निपेतुर्व्वसुधातले। ११९००
श्रमेणाभिहताः सर्व्वे विवर्णवदना नृप। सुपार्श्वो गिरिमुख्यस्तु वाग्भिर्मधुरभाषिताः।
अब्रवीत् प्रणतः सर्व्वान् स्फुरता तान् द्विजोत्तमान्। न हि शक्यो बलाद्भेत्तुं युष्माभिरसुषङ्गिभिः।
अपि वर्षशतैर्द्दिव्यैः परस्परविरोधिभिः। एकीभूता यदा सर्व्वे भविष्यथ समाहिताः।
अविरोधेन युगपद्विभजिष्यथ निर्वृताः। सक्तं हि रागद्वेषाभ्यां वर्त्तते ब्रह्मसत्तमाः।
विमुक्तं रागद्वेषाभ्यां ब्रह्म वर्त्तति शाश्वतं। यदाऽहं भेदयिष्यामि स्वर्गं भिन्नैः शिलातलैः। ११९०५
धातुभिश्च विसर्पद्भिः शिखरैश्चावपातितैः। विशीर्णैः पार्श्वविवरैर्नागैश्चागलितैर्भुवि।

बहुभिर्व्याहृतैश्च चोद्यमानो गुहाश्रयैः। प्रतिस्तुत्य च तद्वाक्यं शैलेन्द्रस्य सुभाषितं।
तूष्णीम्बभूवुस्ते सर्व्वे तदा ब्राह्मणसत्तमाः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे त्रयोदशाधिकद्विशततोऽध्यायः ॥ २१३ ॥
॥ वैशम्पायन उवाच ॥ बलिहोमांश्च वर्द्धन्ते चरन्त्यपि भारत। द्विजानां तपसाढ्यानां गृहधर्मेषु तिष्ठतां।
देवताश्चात्र पूज्यन्ते तदाप्रभृति भारत। तेषां ब्रह्मविदां राजन् पृथिव्यां ब्रह्मवादिभिः। ११८१०
तत्रैव ब्रह्मसदने समे निस्तृणकण्टके। प्राच्येऽन्तगते देशे पुण्ये पर्व्वतरोधसि।
वासं यत्र प्रकुर्व्वन्ति दृष्ट्वा भगवतः क्रियां। तपोऽर्थिनो महाभागा ब्रह्मचर्य्यव्रते स्थिताः।
गृहस्थधर्म्मे निरता दानप्राप्तेन चेतसा। मुनयश्चापि काङ्क्षन्ति धर्म्मेण हविकाङ्क्षिणः।
अन्ये कर्म्मफले चैव रता ब्राह्मणपुङ्गवाः। अग्निहोत्रपरास्त्राता जितक्रोधाः समाहिताः।
दैवयुक्तेन चायुक्ताः कर्म्मणा ब्रह्मसत्तमाः। चीरवल्कलसंवीता नियता नियतेन्द्रियाः। ११८१५
चरन्तो ब्रह्मचर्य्यञ्च यत्नमास्थाय दारुणं। अनेन विधिना राजन् क्रमप्राप्तेन सर्व्वशः।
क्रमाद्यो वेद संस्कारं पुण्यं प्राप्ताः सनातनं। पूर्व्वैराचरितं राजन् मुनिभिर्ब्रह्मवादिभिः।
अवेदविद्यो नागच्छेन्नापि रौद्रं व्रतञ्चरेत्। न च त्यागेन गच्छेत गृहधर्म्मञ्च न त्यजेत्।
एतन्न गच्छेदध्वानमप्राप्तो वेदसञ्चयं। चरन्ति सततं सर्व्वाः सामगानश्च भारत।
ये चापि पुत्रिणो न स्युः श्रुत्वाऽप्यप्राप्नुयुः फलं। ब्राह्मणास्तु तपःश्रान्ता परिचर्य्यागता गुरोः। ११८२०
यस्य नैवं श्रुतं ब्रह्म न गृहीतं विशाम्पते। कामं तं धार्म्मिको राजा दासकर्म्माणि कारयेत्।
अथवा नैव विद्येत यो ब्रह्म नाद्रियेद्द्विजः। श्रोत्रादीनामविषये मनः पूर्व्वं समाचरेत्।
एवं सर्व्वेन्द्रियारम्भं वेदपूर्व्वं समाचरेत्। ब्राह्मणो भूतिसम्पन्नो य इच्छेद्भूतिमात्मनः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे चतुर्द्दशाधिकद्विशततोऽध्यायः ॥ २१४ ॥
॥ वैशम्पायन उवाच ॥ ते तु गोब्राह्मणानाञ्च चन्द्रादित्यपुरस्कृताः। ब्राह्मणान् पूजयन्राजन् वसुभिर्ब्रह्मसत्तमैः।
नारदप्रमुखाश्चैव गन्धर्व्वा ऋषयो नृप। कुर्व्वन्ति सततं यज्ञैः क्रमप्राप्तं पितामहं। ११८२५
वचोभिर्मधुराभाषैः पञ्चेन्द्रियनिवासिभिः। सर्व्वभूतप्रियकरैः सर्व्वभूतहितैषिभिः।
स्तूयमानश्च यज्ञान्ते पञ्चेन्द्रियसमाहितैः। प्रोवाच भगवान् ब्रह्मा दिष्ट्या दिष्ट्येति भारत।
ततः कश्यपमाभाष्य प्रोवाच भगवान् प्रभुः। भवानपि सुतैः सार्द्धं यक्ष्यते वसुधातले।
क्रतुभिः परमप्राप्तैः संपूर्णवरदक्षिणैः। सचासुराश्च ते सर्व्वे यथाप्रतिगुणैः प्रभो।
वयं यक्ष्यामहे सर्व्वे पूर्व्वं यक्ष्यामहे वयं। एवमन्योन्यधर्म्माङ्क्षिणस्ते बलदर्पिताः। ११८३०
दैतेयाश्चाप्यदैतेयाः परस्परजयैषिणः। युद्धायैव प्रतिष्ठन्ति प्रगृह्य विपुलौ भुजौ।
निवार्य्यमाणा ऋषिभिस्तपसा दग्धकिल्बिषैः। अन्यैश्च बहुभिर्व्विप्रैर्व्वेदवेदाङ्गपारगैः।
निवार्य्यमाणा युध्यन्ते वृषभा इव गोकुले। प्रयुद्धारम्भसंक्रान्ताः सर्व्वप्राणैर्जयैषिणः।
पश्यतां सर्व्वभूतानां मृत्योर्व्वशमागताः। ततः शब्देन महता परं क्रुद्धा महाबलाः।

दन्धन्ति बाहुभिः क्रुद्धाः सपक्षा इव पक्षिणः । चचाल वसुधा चैव पदाक्रान्ता च रोषिभिः । ११९३५
नौर्यथा पुरुषाक्रान्ता निषीदति महाजले । पर्व्वताश्च विशीर्य्यन्ते नर्द्दमाना द्रुमा इव ।
चुक्षुभुश्च महाम्भांसि ताडिता मातरिश्वना । ततः समभवद्युद्धं मधोर्विष्णोश्च भारत ।
युगान्तकरणं घोरं सर्व्वप्राणिभयङ्करं । प्रममाथ बलं विष्णुः समयबलपौरुषं ।
वह्नेरिव बलं दीप्तं शमयत्यम्बुना यथा । तथा प्रशमितं तेन भगवत्यपकारिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे पञ्चदशाधिकद्विशततोऽध्यायः ॥ २१५ ॥
॥ वैशम्पायन उवाच ॥ बलवान् स तु दैतेयो मधुर्भीमपराक्रमः । बबन्ध पाशैर्निशितैर्महेन्द्रं पर्व्वतान्तरे । ११९४०
तं वै प्रह्लादवचनात्तत्क्षणं श्रथ भारत । ऐश्वर्य्यमैन्द्रमाकाङ्क्षन् भविष्यं बुद्धिसंश्रयात् ।
बद्धेन्द्रं सहसा मध्ये पाशैः सर्व्वैर्विवर्ज्जितैः । आयसैर्व्वज्रभिस्त्रिंशैर्व्वल्लवद्भिर्विदारणैः ।
विष्णुमेवाग्रणीकृत्य समाक्रम्य युद्धकोविदः । मध्ये गणानां सर्व्वेषां कालस्य वशमागतः ।
द्वैधीभूताः काश्यपेया मधोर्व्वंशमुपागताः । युद्धार्थमभ्यधावन्त प्रगृह्य विपुला गदाः ।
गन्धर्व्वाः किन्नराश्चैव वाद्ये गीते च कोविदाः । प्रनृत्यन्ति प्रगायन्ति प्रहसन्ति च सर्व्वशः । ११९४५
तन्त्रीभिः सुप्रयुक्ताभिर्म्मधुराभिः स्वभावतः । मनो मधोर्व्विधुन्वन्ति युध्यमानस्य रागिणः ।
मधोर्व्विलितमधुना नियोगात् पद्मयोनिनः । एतान् विकारान् कुर्व्वन्ति गन्धर्व्वाः सत्यवादिनः ।
तत्र शक्ता हि गान्धर्व्वे तस्मिन् शब्दे दधुर्म्मनः । दानवाश्च सुराश्चैव प्रत्यचं यान्ति प्राणदन् ।
मधोश्च मन आक्षिप्य पश्यन् योगेन चक्षुषा । मन्दरं प्रापतद्विष्णुर्गूढोऽग्निरिव दारुषु ।
ऋषयो दीप्तमनसः किञ्चिद्व्यथितमानसाः । पितामहं पुरस्कृत्य क्षणेनान्तरधीयत । ११९५०
विष्णुं सोऽभ्यहनत् क्रुद्धो मधुर्म्मधुनिभेक्षणः । भुजेन शक्रदेशान्ते न चकम्पे पदात् पदं ।
विष्णुश्चाभ्यहनद्दैत्यं करा[illegible]ण स्तनान्तरे । स पपात महीं तूर्णं जानुभ्यां रुधिरं वमन् ।
न चैनं पतितं हन्ति विष्णुर्युद्धविशारदः । बाहुयुद्धे हि समयं मत्वाऽचिन्त्यपराक्रमः ।
इन्द्रध्वज इवोत्तिष्ठज्जानुभ्यां स महीतलात् । मधू रोषपरीतात्मा निर्द्दहन्निव चक्षुषा ।
परुषाभिस्ततो वाग्भिरन्योन्यमभिगर्ज्जतः । समीयतुर्व्वाहुयुद्धे परस्परजयैषिणौ । ११९५५
उभौ तौ बाहुबलिनावुभौ युद्धविशारदौ । उभौ च तपसा श्रान्तावुभौ सत्यपराक्रमौ ।
दृढप्रहारिणौ वीरावन्योन्यं तौ चकर्षतुः । शैलेन्द्राविव युध्यन्तौ पद्भिः पाषाणसन्निभैः ।
विकर्षन्तौ च मत्तौ च अन्योन्यं वसुधातले । गजाविव विषाणाग्रैर्नखाग्रैश्च विचेरतुः ।
ततो व्रणमुखेभ्यश्च सुस्राव रुधिरं बहु । शीर्य्यन्ते धातुसंसृष्टं शैलेभ्य इव काञ्चनं ।
संसिक्तौ रुधिरौघेण स्रवद्भिः समरक्षितौ । अयोघनैः पदाग्रैश्च तौ व्यदारयतां महीं । ११९६०
अभिहत्य तु तौ वीरौ परस्परमनेकधा । पतङ्गाविव युध्येतां पक्षाभ्यां मांसगृद्धिनौ ।
ऋजुश्चवृक्षान्तरीक्षेऽथ सर्व्वभूतानि पुष्करे । सिद्धानां वदनेभ्युक्ताः परया वर्णसम्पदा ।
स्तुतयो विष्णुसंयुक्ताः सत्याः सत्यपराक्रमे । शरीरं धातुसंयुक्तं संयुक्तं चेतनेन च ।

तद्ग्राह्यमिन्द्रियैर्युक्तं तेजोभूतं सनातनं । ध्रुवं तिष्ठन्ति भूतास्ते सूक्ष्मे प्रलयताङ्गते ।
पुनस्तोद्भवते सूक्ष्मं बहुरूपमनेकधा । प्रबोध्य भावं भूतानां त्रिषु लोकेषु कामदः । ११९६५
सुरूपो बहुरूपस्त्वं लोकान् सञ्चरते वशी । मानसीस्तनुमास्थाय बहुभिः कारणान्तरैः ।
योगात्मा धारयन्नुर्वीं नागात्मा नन्दिवर्द्धनः । ब्रह्मभूतं परश्चैव सूक्ष्मेनात्मानमीश्वरः ।
ब्राह्मेण विप्रान् वसति युद्धेनैव च क्षत्रियान् । प्रदानकर्म्मणा वैश्यान् शूद्रान् परिचर्य्येण च ।
गावः क्षीरप्रदानेन अश्वान् यज्ञेषु प्रोक्षणैः । पितरस्तोयपर्णैश्च हविर्भागेण देवताः ।
चतुर्भिर्व्यतिरिक्ताङ्गैस्त्रिभिरन्यैश्च धातुभिः । सप्तभिः पितृभिर्नित्यैस्त्वं लोकान् परिरक्षति । ११९७०
चन्द्रसूर्य्यात्मकं नित्यं तद्रूपं निश्चितात्मकं । प्रकाशे चाप्रकाशे च निगूढं स्वेन तेजसा ।
त्रयस्तु पितरो नित्यं वर्द्धयन्ति दिवाकरं । चतुर्भिः पितृभिश्चैव चन्द्रो वर्द्धति मण्डले ।
त्रयः पितृगणा नित्यं पिण्डान् यत्नाददन्ति ते । चत्वारोऽन्ये पितृगणाः सिद्धाः पञ्च च श्राद्धे ।
त्वमेव पञ्च तान् धर्म्मांस्त्वमेवापश्यतान् विभो । सनातनमयो दिव्यः शाश्वतो ब्रह्मसम्भवः ।
तस्मात्ते तेज आदत्ते अग्निर्व्वायुश्च सर्व्वशः । अतस्त्वं कर्म्मणा तेन आदित्यः समपद्यथाः । ११९७५
यदस्नासि जगत् सर्व्वं रश्मिभिः प्रदहन्निव । युगान्तकाले सम्प्राप्ते परां सिद्धिमुपागतः ।
पर्व्वसन्धावमावास्यां लोकाश्चरसि मानुषं । ऋषिभिः सह गूढात्मा सूर्य्येन्दुवसुसप्रभैः ।
सफलं कर्म्म कुर्व्वाणो यजतां पुष्टिवर्द्धनं । हेतूनामधिकाराय मा भूत् कर्म्मविपर्य्ययः ।
वानस्पत्यौषधीश्चैव युगपत् प्रतिपद्यसे । बालभावाय वसुधा पक्षे पक्षे जनित्तव ।
भूतानां भुवि भूतेश भावार्थं वसुधातले । वस्तु यद्भुवि किञ्चिच्च तत् सर्व्वं त्वन्मयं विभो । ११९८०
त्वमेव द्विविधं धर्म्मं शाश्वतं वसुधातले । देवयज्ञं मन्त्रवाक्यमात्मयज्ञं समानुषं ।
द्विविधः स्वर्गमार्गश्च सूर्य्यश्चन्द्रश्च निर्म्मलः । चन्द्रमाः पितृयानश्च देवयानश्च भास्करः ।
त्वमेव वसुधायुक्तो विश्वम्भरसि मायया । एकीकृत्य गणान् सर्व्वान् संक्षिप्यामुत्र सम्भवः ।
एकस्त्वमसि संभूतः पुराणः पुरुषो विराट् । अव्ययश्चाप्रमेयश्च कारकाकारको वशी ।
मूर्त्तस्तेजसि संभूतो वायुः पर्य्येति खेचरः । सप्तभीरूपसंस्थानैर्नित्यमावृत्य तिष्ठसि । ११९८५
साधने ह्यभिनिर्व्वाणे संहारे प्रलये तथा । धाता धारणकाले च दिशश्चतुर्षु धारिणि ।
सेव्यमानो मुनिगणैर्नित्यं विगतकल्मषैः । कर्म्मभिः सत्यमापन्नैः समरागैर्जितेन्द्रियैः ।
स्तूयमानश्च विविधैः सिद्धैर्मुनिवरैस्तथा । चकार विपुलं देहं हरिर्हयशिरो महान् ।
कृत्वा वेदमयं रूपं सर्व्वदेवमयं वपुः । शिरोमध्ये महादेवो ब्रह्मा तु हृदयस्थितः ।
आदित्या रश्मयो वाजाश्चक्षुषी शशिभास्करौ । जङ्घे तु वसवः साध्याः सर्व्वसन्धिषु देवताः । ११९९०
जिह्वा वैश्वानरो देवः सत्या देवी सरस्वती । मरुतो वरुणश्चैव जानुदेशे व्यवस्थितः ।
एवं कृत्वा तथा रूपं सुराणामद्भुतं महत् । असुरं पीडयामास क्रोधरक्तान्तलोचनः ।
मधुमेदोऽवपूर्णा च पृथिवी समदृश्यत । प्रमदेव वनान्ते च रक्तांशुकनिवासिनी ।

R. P. CHANDA COLL.
THE ASIATIC SOCIETY,
CALCUTTA



मेदिनीत्येव शब्दस्य लब्धः पृथ्व्या नरोत्तम । नानासुरसहस्रेण धरण्याः संप्रतिष्ठितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥
॥ वैशम्पायन उवाच ॥ मधोर्निपतनं दृष्ट्वा सर्व्वभूतानि पौष्करे । प्रहृष्टानि प्रगायन्ति प्रनृत्यन्ति च सर्व्वशः । ११९९५
सुपार्श्वो गिरिमुख्यश्च काञ्चनैः शिखरोत्तमैः । बहुधातुविचित्रैश्च खं लिखन्निव चाबभौ ।
गिरयश्चाभिशोभन्ते धातुभिः समरञ्जिताः । पांशुभिः शिखराग्रैश्च सविद्युत इवाम्बुदाः ।
पक्षवातोद्धुतो रेणुचूर्णैः साञ्जनवालुकैः । छादयन् पर्व्वताग्राणि महामेघ इवाबभौ ।
मेघसंश्लिष्टशिखराः पक्षविच्छिन्नपादपाः । काञ्चनोद्भेदबहुलाः खे तिष्ठन्तीव पर्व्वताः ।
पक्षवन्तः सशिखरा हेमधातुभिरञ्जिताः । पवनेन समुद्धूतास्त्रासयन्ति विहङ्गमान् । १२०००
काञ्चनाः पर्व्वताः सर्व्वे स्फाटिकैर्मणिभिश्चिताः । सूर्य्यकान्तैश्च बहुभिश्चन्द्रकान्तैश्च निर्म्मलैः ।
हिमवांश्च महाशैलः श्वेतैर्धातुभिराचितः । काञ्चनैः शिखराग्रैश्च सूर्य्यपादप्रकाशितैः ।
मणिभिश्च प्रकाशद्भिः पक्षान्तरविनिःसृतैः । तालपुष्पैश्च शिखरैर्दीप्यमानैः स्वतेजसा ।
मन्दरश्चोग्रशिखरः स्फाटिकैर्म्मणिभिश्चितः । वज्रगर्भैर्निरालम्बैः स्वर्गोपम इवाबभौ ।
सह शृङ्गैश्च कैलासः शिलाधातुविभूषितः । तोरणैश्चैव निबिडैः पांशुभिश्चैव पादपैः । १२००५
प्रवादयद्भिर्गन्धर्व्वैः किन्नरैश्च प्रगायिभिः । देवकन्याप्सराभिश्च प्रक्रीडित इवाबभौ ।
मधुरैर्व्वाद्यगीतैश्च नृत्यैश्चाभिनयोद्धतैः । शृङ्गारैः सुप्रहारैश्च कैलासो मदनायते ।
आदित्याभासिभिः शृङ्गैर्भिन्नाञ्जनचयप्रभैः । विन्ध्यो नीलाम्बुदश्यामो विभिन्न इव तोयदः ।
धान्यार्थं सर्व्वभूतानां मेरुपृष्ठे महाचले । निर्व्वमुर्निर्म्मलं तोयं मेघजालैरिवोत्तमैः ।
शिलाभिर्व्वहुचित्राभिर्धातुभिर्व्वहुचित्रितैः । प्रस्रवद्भिर्गुहाद्वारैः सलिलं स्फाटिकप्रभं । १२०१०
शोभन्ते वायुसंमूढा घना इव सविद्युतः । चित्रैः पुष्पैस्तरुगणाः शोभन्त इव भूषिताः ।
नगाः कनकसंभूतैर्व्विचित्रैरिव भूषणैः । विहङ्गमाभिलीनाश्च लतास्तरुसमाश्रिताः ।
विलम्बन्त्यः सपुष्पाश्च नृत्यन्ते वायुघट्टिताः । पवनेन समुद्धूता महता माधवेऽहनि ।
मुमुचुः पुष्पसंघातं तोयवेलेव वर्षति । फलवद्भिश्च विपुलैः शाखास्कन्धावरोहिभिः ।
पादपैः पर्णबहुलैर्भ्रमते च वसुन्धरा । मधुप्रिया मधुकरा मधुमत्तविहङ्गमाः । १२०१५
घोषयन्तीव गायन्तः कामस्यागमसम्भवं । विष्णुर्मधुनिहन्ता च चकार मधुवाहिनीं ।
नदीं प्रस्रवनिर्भेदां सुतीर्थां बहुलोदकां । अङ्गारवर्णसिकतां मधुतोयां मनोरमां ।
विमलैरम्बुभिः पूर्णां पुष्पसञ्चयवाहिनीं । विवेश पुष्करं सा तु ब्रह्मणो वाक्यचोदिता ।
ऋषिभिश्चानुचरिता ब्रह्मतत्त्वनिषेविभिः । धात्री कपिलरूपेण गोर्भूत्वा चरते पयः ।
मधुरं विततं यत्र ब्रह्मणो वाक्यचोदिता । सरश्च पृथिवीभूतं सन्ध्यातुं प्राप्तवाग्वरी । १२०२०
शृङ्गञ्च भजते लोकं शाश्वतं परमाद्भुतं । सरस्वत्याः समुद्भूतं ब्रह्मवेधे तमोनुदं ।
महातीर्थमतिक्रम्य पुष्करेषु विसर्पति । सुचारुरूपा धर्म्मज्ञा प्रजारूपेण ह्लादयत् ।

रूपं कनकवर्णाभं तपोयुक्तेन सर्व्वथा । अजगन्धगतोत्पन्नः संभूतः पर्व्वतो महान् ।
गुहद्वारगुणप्राणः शाश्वतः सिद्धसेवितः । वेदिकाभिः सुचित्राभिः काञ्चनीभिर्विराजितः ।
पुष्कराणि परीत्यैव स्थितो विपुलदक्षिणः । महामेरोर्यथा रूपं पञ्चभिर्धातुभिर्वृतं । ११०२५
चेतनयाऽभिसम्पन्नो रूपेणाद्भुतदर्शनः । एवं रूपं करिष्यामि मनसा धर्म्मचारिणा ।
रूपं बहुविधं लोके पार्थिवीं चेतनां तथा । सोऽस्य लोकान् प्रपद्येयं पञ्चभिर्धातुसञ्चयैः ।
षष्ठेन च स सर्व्वेयं मनसा धर्म्मचारिणीं । सङ्गेषु भावसीहाभ्यां पश्यन्नपि सम्बहुधः ।
विमुक्तः सर्व्वसङ्गेभ्यो धारयन्निष्परिग्रहः । न च विन्देत मां कश्चिन्मनसा कामकारिणीं ।
पञ्चधातुनिबद्धाश्च नानाभावितचेष्टितां । ये च त्रिष्णुमधीयन्ते बहुधा पादविग्रहैः । ११०३०
ते मां पश्येयुरव्यक्तां तपसा दग्धकिल्बिषाः । ये च मामभिरोहेयुर्नरा धर्म्मपथे स्थिताः ।
तेऽपि स्वर्गजितः स्वर्गे पश्येयुर्वौ गतक्लमाः । यश्चैव पर्व्वतः प्रांशुर्म्महपृष्ठे प्रतिष्ठितः ।
एतमारुह्य युध्येयुः प्राणत्यागेषु निर्म्मलाः । अप्सरोभिः समागम्य विचरेयुर्म्मनोजवाः ।
नन्दनं वनमासाद्य काम्यकञ्च महद्वनं । इमा विद्याः समाम्नाय मन्त्रमाः पुष्करेष्विह ।
शरीरं क्षपयिष्यन्ति व्रतैर्ब्बहुविधैः क्रमाः । सिद्धिं प्राप्य क्रमेयुस्ते कामैर्ब्बहुविधैर्नराः । ११०३५
इमं लोकममुञ्चैव सम्पतेयुर्यथासुखं । गौरी सिद्धेति विख्याता त्रिषु लोकेषु विद्यया ।
प्रभावं तपसो वृत्तं दर्शयन्ति समाहिताः । सर्वा ज्ञानाभिसन्धोनामभिज्ञानात् सर्व्वशः ।
भवेयुस्ते निरारम्भा धातुभिर्म्मुक्तबन्धनाः । सहस्रगुणमप्यत्र दत्त्वा दानफलानि च ।
अविमानेन विप्राणां मनःशुद्धेन कर्म्मणा । सर्व्वमेवाप्रमेयेण अत्यर्थं फलमाप्नुयुः ।
अमुष्मिन् लोके धर्म्मज्ञाः सह सर्व्वकुलोद्भवैः । येषामिह च सान्निध्यं यत्ते ब्राह्मणसंकुले । ११०४०
ते भूयो यजमानाद्या अभिषिच्य पुनः पुनः । तथा तां मन्यसे गौरीं मनसा धर्म्मचारिणीं ।
अनुग्रहाय भूतानां मामजस्र तपोधनं । सत्य एष वरो विप्र भविता नात्र संशयः ।
नाफलो विद्यते धर्म्मश्चरितो ब्रह्मचारिणा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे सप्तदशाधिकद्विशततोऽध्यायः ॥ २१७ ॥
॥ वैशम्पायन उवाच ॥ दिशं जिगमिषुर्दिव्यामुत्तरां सत्यसाधनः । तथा स धातुनिचये पुण्ये पर्व्वतरोधसि ।
विष्णुः परमधर्म्मात्मा एकपादेन तस्थिवान् । दशवर्षसहस्राणि पुष्करे पुष्करेक्षणः । ११०४५
आत्मन्यात्मानमाधाय तपसा ब्रह्मसम्भवः । घटते कर्म्मयोगेन लोकमुत्थानकारणात् ।
भास्वरो भस्मनाच्छाद्य गात्राणि स्वयमात्मनः । षष्टी वर्षसहस्राणि सहस्राक्ष तपोधनः ।
तेजसा तेन ज्योतींषि विभाव्य ब्रह्मसम्भवः । तिष्ठते मनसो मध्ये योगात्मा भावयन् जगत् ।
सोमो विषयमाविश्य मनसा धारयन्मनः । मुक्तः परमधर्म्मात्मा ब्राह्मीं सिद्धिमुपागतः ।
सम्प्रदृश्यति सर्व्वत्र दिवि भूम्यम्बरे तथा । ज्योतिष्मः कर्म्म कुर्व्वाणो बहुरूपः स्वसम्पदा । ११०५०
महेश्वरो निगूढात्मा स्वरूपेण तिष्ठति । उद्धृत्य दक्षिणं पादं वायुभक्षः समाहितः ।

अष्टौ वर्षसहस्राणि सहस्रं शतमेव च। महायोगी महादेवो नियमाद्ब्रह्मसम्भवः।
अथ वायुर्घनीभूतो मन्ते चरति गोपतेः। फेनीभूतं समुद्गारैः पवनं निर्गिरन्नसान्।
स निष्क्रान्तस्ततो वक्त्रात् प्राणेन परमाप्तवान्। निर्यासभूतः पतितो नैवार्द्रो नैव पार्थिवः।
स फेनो वारिमाविश्य चचार वसुधातले। नैवार्द्रो नैव शुष्काङ्गो वायुः संघातमागतः। ११०५५
तत्काले फेनमुत्क्षिप्य पवनः सह वारिणा। निरालम्बे निरालम्बस्तम्भाणि समपद्यत।
ते क्षिपन्ति पयो भूमावात्मानं स्वेन चक्षिताः। नीलमेघारुणप्रख्या नैवार्द्रा नैव पार्थिवाः।
ब्राह्मीं मूर्त्तिं समाधाय वायुः सर्व्वचगो वशी। समाः सहस्रं संपूर्णं चचार विपुलं तपः।
वह्निर्व्विरूढजटी भूत्वा चीरवल्कलवासधृक्। तपस्त्यप्यदनाहारो मौनमास्थाय पुष्करे।
वर्षाणाञ्च सहस्राणि त्रीणि चैकस्य यच्छतः। तस्याग्नेस्तेजःसंभूतो महानग्निः प्रवर्त्तते। ११०६०
स्वर्गप्रकाशकश्चैव स्वर्गवासी तमोनुदः। दिव्यो भूतप्रकाशाख्यस्तपसा ब्रह्मसम्भवः।
तपश्चरति धूमाग्निर्लोकानां भूतभावनः। तत्समो भुवि राजेन्द्र मानुषेषु प्रतिष्ठितं।
भास्करस्तेजसंहारो यतो भवति सत्तम। मर्त्यानां सर्व्वभूतानां तेज आविश्य वर्त्तते।
न तु योगबले राजन् ब्राह्मणस्य विशेषतः। तत्समो नाशयेद्रात्रौ नाप्येषा भविता ह्ययं।
पुष्पमित्रो महातेजा यतः सर्व्वचगो वशी। तपश्चरति धर्म्मात्मा पुष्करेषु समाहितः। ११०६५
महेन्द्रशिखराङ्गारा यावत्यो यान्ति मेदिनीं। तावत्स्वरूपमास्थाय तिष्ठते निखिलाः समाः।
आनुभ्यां पतितो भूमौ ज्योतिर्नभसि पश्यति। समाः सहस्रं निखिलं नेत्रैर्निर्निमेषैर्जगत।
नेत्राणि बहुधा तस्य नेत्रान्तैरभिनिःसृताः। मध्यं दिनकरे प्राप्ते रश्मिवान् स परिपद्ये।
ते रश्मयः प्रभानेत्रैः शतशोऽथ सहस्रशः। रराज तेजःसंयोगाज्ज्वलद्भिरिव पावकः।
सविस्फुलिङ्गैर्नेत्रान्तैरादित्यमनुवर्त्तते। कल्पेषोऽन्ते युगान्ते वा जगतो बहुरूपिणः। ११०७०
बहुधा तु पुनर्भूत्वा निवसो वसुधातले। समाः सहस्रं संपूर्णं तपस्तेपे सुदारुणं।
निगृहीतेन्द्रियो भूत्वा नाप्सरोभिर्ललाम ह। मेरोः शिखरमासाद्य कामं कामेन पीडयन्।
तपःकामः स यक्षस्तु कुवेरो नरवाहनः। विष्णुरेव तपोऽध्यक्षस्तेजसोऽन्तेन जृम्भते।
न हि कश्चित् पुमानस्ति य एतत्तप आचरेत्। त्रिषु लोकेषु राजेन्द्र ऋते विष्णुं सनातनं।
वासुकिर्व्विरूढशीर्षस्य नागेन्द्रो मौनमास्थितः। तप आचरते सम्यक् निधाय मनसा मनः। ११०७५
शेषः सत्यधृतिर्नागो बलवान् ब्रह्मसम्भवः। वृषमारुह्य धर्म्मात्मा अवाक्शीर्षोऽत्र लम्बते।
जिह्वाभिर्लेलिहानाभिर्गाङ्गं विषमुत्सृजन्। समासहस्रं संपूर्णं निराहारस्तपोधनः।
कालकूटं विषं तद्धि सुमहत् समपद्यत। येन लोका ह्यभिपन्ना न सुखं विन्दते नृप।
सर्व्वत्रानुगतं तीक्ष्णं भुजगेषु महीतले। जङ्गमं स्थावरञ्चैव सर्व्वत्रानुगतं विषं।
परस्परं विरुद्धेन हिंसायुक्तेन भारत। नाशयत्यात्मनोऽङ्गानि तेन तीक्ष्णेन भारत। ११०८०
अथ ब्रह्मा महाभागो भूतानां हितकाम्यया। मन्त्रं विसृजते राजन् ब्रह्माक्षरमयं हितं।

गरुत्मान् विततैः पक्षैर्नखाग्रैः स्खलितं महीं । समासहस्रं संपूर्णं महायोगावलम्बते ।
पर्णभारैश्च विकचैर्विशीर्णैर्वसुधातले । रराज वसुधा चैव तैः पर्णैरुपचिताः ।
येन वित्तेन जीवेयुः सर्व्वभूतानि भारत । इह लोके मनुष्येन्द्र देवलोके च भारत ।
धौरिवाचितनक्षत्रा महीतलविसर्पिभिः । मघवान् हिमसंपाते तपत्येकचरो वशी । ११०८५
पुष्करासमि धर्म्मात्मा महायोगितिमूर्द्धजः । अथ स्वतलमाक्रम्य पृथिवी प्रांशुदेहिनी ।
तपश्चरति धर्म्मात्मा बाहुमुद्यम्य दक्षिणं । सायं वर्षसहस्रस्य शतमेकञ्च सुव्रता ।
तपश्चरति संयोगाद्वायुभक्षा समाहिता । समाधियोगात् वक्रादा ब्रह्मयोगस्य भारत ।
येनेयं पृथिवी राजन् धार्य्यते ब्रह्मयोगिना । अनाद्यन्तमनित्येन सर्व्वत्र विषयैषिणा ।
योऽसौ विष्णुरगाधात्मा परमात्मा निराकृतिः । दिनेऽनिवर्षी भवति रात्रौ भवति वै स्थिरः । ११०९०
सत्यसन्धः स धर्म्मात्मा कामकारकरोऽभवत् । तस्य यः सोद्यतः पाणिः पृथिव्यां पृथिवीश्वरः ।
रात्रौ तपसो भवति मण्डलं विपुलं नभः । स चन्द्रविषयं राजन्क्रमयामास हन्यति ।
ग्रहाणां गतयश्चैव ताराणाञ्च विशेषतः । तां छायामाश्रितत् सोमात् सर्वाङ्गमण्डलेन वै ।
पृथिव्यां दक्षिणे हस्तो महायोगी महामनाः । सैषा छाया प्रभीभूता शशिमण्डलमाविशत् ।
अलिङ्गा पृथिवीलिङ्गादद्भुतादथवा दिवि । अङ्गैरङ्गान्युपगुह्य तपश्चरति दुश्चरं । ११०९५
निश्चयात् प्रोक्ष्य पादौ तु पृथ्वी वाच्यमुपागता । सूर्य्यार्चिर्भिः पीयमानादाविष्यति महीतलात् ।
महीव चाम्बुवसनायुगान्ते विष्णुतेजसा । रराज सूर्य्यरश्मिभिर्व्यतिषक्ता महीनदी ।
स्फाटिकेव शुभा येषा काञ्चनैर्धातुभिर्वृता । आदित्येन समादत्ता रश्मितेजोऽभिसंभवैः ।
मण्डलान्तर्गता देवी चक्षुषा नोपलभ्यते । रश्मिभिः पुनरुत्तीर्णा ततो योगेन धावति ।
आकाशगङ्गा संवृता विपुलैरम्बुविप्लवैः । शीतच्छायैश्च तरुभिर्लताभिश्च सुगन्धिभिः । १११००
पद्मषण्डैश्च विविधैः शुशुभे दिव्यगन्धिभिः । काञ्चनापीडजघना स्फाटिकान्तरमेखला ।
पद्मरेणुभिरापीता चक्रवाकावतंसिका । नीलगर्भसुकेशान्ता पुष्पसञ्चयसंकुला ।
शोभते विप्रसपत्नी प्रमदेव विभूषिता । सैषा गङ्गाफलं लेभे पुष्करेण समागता ।
सुतपाश्चन्द्रविहिता लोकानां धारणे रता । सरस्वती स्वरैर्व्यक्तमधीते ब्रह्मवादिनी ।
पृष्ठात्प्रयाता शैलेन्द्रे मन्दरे मन्दगामिनी । ऋग्मयांश्चतुरो वेदान् पादैश्चतुर्भिराहृतान् । १११०५
यजुर्भिः सामभिश्चैव ग्रथिताञ्छिक्षया तथा । ऋषिभिर्ज्वलनप्रख्यैस्तपसा दग्धकिल्बिषैः ।
सुपार्श्वस्य गिरेः पादैः परिहार्यैः सुपार्श्वैः । निस्वनन् सर्व्वभूतानि नियमेन च शृण्वते ।
मन्दराग्रे विपर्य्यस्तं जगत्सत्त्वमतीन्द्रियं । विरामनियमे प्राप्ते तूष्णीम्भूता बभूव ह ।
न वाचमीरयेद्देवी नियामत् सत्यवादिनी । अथ भूतानि सर्व्वाणि तूष्णीम्भूतानि सर्व्वशः ।
न शेकुरभिधानार्थं व्याहर्त्तुं वदनैर्व्वनात् । विभज्य योगं मनसा सर्व्वभूतेष्वनुग्रहं । ११११०
सरस्वती स्वरयुता व्याजहार महास्वनं । सरस्वत्या समायुक्तां गिरं गृह्णन्ति देहिनः ।

अस्मिन्नेवाथ ते सर्व्वे गानं गायन्ति निश्चया। आदित्या वसवो रुद्रा मरुतश्चाश्विभिः सह।
जटिलाश्चीरवसना मुञ्जमेखलधारिणः। गन्धर्व्वाः किन्नराश्चैव सनागाः सह चारणैः।
तपश्चरन्ति सहिताः पुष्करेषु मनीषिणः। अपि कीटपतङ्गाश्च सह सर्व्वैः सरीसृपैः।
शोषयन्ति शरीराणि तपसोग्रेण यन्नतः। विष्णुर्विष्णुत्वमापन्नो देहान्तरविसृष्टवान्। ११११५
संरक्षति महायोगी सर्व्वांस्तान् सहचारिणः। पुष्करे रमते विष्णुः पुनरेव द्विधाकृतः।
दीप्यमानः स्वतेजोभिर्विधूम इव पावकः। सोऽग्निर्मनःसमुद्भूतः पृथिवीं तापयन्निव।
प्रधावति समं तेन मण्डलं दशयोजनं। विरराजार्च्चिभिर्दीप्तैः पृष्ठतश्चावलम्बिभिः।
विशीर्णपार्श्वविभवैर्मयूखैरिव दीपितः। तस्याग्नेर्व्विस्फुलिङ्गानां न शेकुर्लङ्घने रताः।
विप्रकीर्णस्य वासुधामर्थ्यादामिव भास्करः। सोऽग्निर्दीप्यति सर्व्वांशुर्विधूम इव पावकः। १११२०
ऋत्विग्भिर्ज्वलनप्रख्यैर्व्विहुतो वा महाध्वरे। सोऽग्निर्धूमगतस्तत्र तिष्ठते विपुलस्तदा।
यावद्विष्णुः क्रमप्राप्तो नियमस्य समापनात्। रक्षां कृत्वा स तं विद्याद्विष्णुर्विष्णुपराक्रमः।
भूत्वा शतशरीरो वै नागो वालाहकोऽभवत्। तमग्निमात्मसंसृष्टं लेलिहानं महामतिः।
प्रतिसंहर्त्तुं तेजोभिर्भूतानां हितकाम्यया। वारिणा सुखशीतेन प्राणिनां प्राणवर्द्धनः।
न्यसिञ्चद्दहनं तत्र नागो वालाहकस्तदा। ततः सिद्धगणैर्जुष्टः पुष्करे तप्यते तपः। १११२५
संहृत्य सततमात्मानं महायोगी महाबलः। संहृत्य पादगात्राणि मनो मूर्द्ध्नि विधारयन्।
अचलं स्थानमासाद्य तूष्णीभूतो बभूव ह। एष धर्म्मो हि धर्म्माणां सोपधानविकल्पितः।
स्थितः सर्व्वेषु भूतेषु इह चामुत्र सोभयोः। अथ दैत्या हतास्तत्र समागम्योद्यतायुधाः।
मायाप्रायैर्व्बहुविधैर्नगरैरभिसंवृताः। अग्निं दैत्याः पर्व्वताग्रैरभिघ्नन्ति परन्तप।
ज्वलन्तं ज्वलनप्रख्या महाकाया महाबलाः। मेघीभूताश्च मायाभिर्व्वर्षन्ति बलदर्पिताः। १११३०
तस्मिन्नेवाग्निसंघाते संघातं तं महाबलाः। ते शलभत्वमापन्ना दग्धाः शतशोऽथ सहस्रशः।
युगान्ते प्रभुरादित्यो जनानिव दिधक्षति। न शेकुरग्निं दैत्यास्ते मायाभिमुखमुद्यतं।
आदित्यमिव दीप्यन्तं नभः सूर्य्योदये यथा। विद्रुतैरुद्यमैः सर्व्वैर्दैत्या भग्नपराक्रमाः।
गन्धमादनमासाद्य निषण्णा नगमूर्द्धनि। स चाग्निर्व्विष्णुवैश्वानरैर्विद्युद्भिः सह सङ्गतः।
अन्तरीक्षचरान्दैत्यान्निर्द्दहन् विचरन्दिवि। नागो वालाहकश्चैव मेघैः संघातमागतः। १११३५
मुमोच सलिलं भूमौ पर्ज्जन्य इव वृष्टिमान्। मन्त्रैः सञ्चोदितो नागो द्विजेन्द्रो वदनोद्गतैः।
मुमोच तोयसंघातं मानयन्निपुणं जलं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे अष्टादशाधिकद्विशततमोऽध्यायः॥ २१८॥
॥ जनमेजय उवाच ॥ संयुक्ता तपसा देवाः किं कुर्व्वन्त ततः परं। न हि तद्विद्यते लोके तपसा यन्न लभ्यते।
॥ वैशम्पायन उवाच ॥ अथ दीक्षां समास्थाय सर्व्वे विष्णुमया गणाः। पुष्करादग्निमुद्धृत्य प्रणीय च यथाविधि।
जुहुवुर्मन्त्रविधिना ब्राह्मणा समचोदिताः। हविषा मन्त्रपूतेन यथा वै विधिरेव च। १११४०

स चाग्निर्विधिवत्तत्र वर्द्धते ब्रह्मतेजसा । तेजोभिर्ब्रह्मलोभूतः प्रभुः प्रहरणविग्रहः ।
ब्रह्मदण्ड इति ख्यातो वपुषा निर्द्दहन्निव । दिव्यरूपप्रहरणो ह्यसिचर्मधनुर्द्धरः ।
सगदो लाङ्गली चक्री शरी चर्मी परश्वधी । शूली वज्री खड्गपाणिः शक्तिमान् वरकार्मुकी ।
विष्णुश्चक्रधरः खड्गी मुषली लाङ्गलायुधः । शरी लाङ्गलमालम्ब्य मुषलञ्च महाबलः ।
वज्रमिन्द्रस्तपोयोगाच्छतपर्व्वाणमालिपत् । रुद्रः शूलं पिनाकञ्च मनसा धारयन् प्रभुः । १२१४९
मृत्युर्द्दण्डं सपाशञ्च कालः शक्तिमस्पृशत । जग्राह परशुं त्वष्टा कुवेरश्च परश्वधं ।
निर्व्विकारैः समायुक्ताः शतशोऽथ सहस्रशः । विश्वकर्म्मा च त्वष्टा च चक्राते ह्यायुधं बहु ।
इन्द्रायाशीरथं प्रादात् सूर्य्याय च प्रतापिने । परमात्मा ददौ विष्णुरुद्राय च महात्मने ।
कन्दोमिरेव त्वष्टा च स चकाराथ वाहिनीं । विश्वकर्म्मा विमानानि चकार बहुभिः क्रमैः ।
शरीरांश समुद्धृत्य विष्णुः सत्यपराक्रमः । पुष्करात् पर्व्वणि घनात् धृतनार्थं प्रवर्त्तयत् । १२१५०
छास्चैव सूर्य्यस्त्रत्राणां त्वरया समकल्पयत् । ययाऽभियुज्य संग्रामे शत्रुं निर्व्विभिदे रणे ।
स तं दण्डं समुचितं निर्म्मिकारं समाहितं । ब्रह्मा जग्राह विधिना श्वन्तर्द्धानगतः प्रभुः ।
स्वैः प्रभावैश्च विधिना सोऽस्त्रग्रामश्चतुर्व्विधं । ऐन्द्रमाग्नेयवायव्यं रौद्रं रौद्रेण वर्चसा ।
एभिर्व्विकारैः संयुक्ता दितेः पुत्रा महाबलाः । तपसा क्रियया चैव अस्त्रैः प्रहरणैरपि ।
बलेन चतुरङ्गेण वीर्य्येण सुसमाहिताः । अप्रधृष्या रणे सर्व्वे चणेनैवाभवंस्तदा । १२१५५
ते विहाय गुहामध्ये सभाण्डोपस्करे रथे । मन्दरस्य गिरेः पादे विचेरुर्व्वसुधातले ।
चतुरङ्गं बलं सर्व्वं संहृत्य तपसः प्रभुः । विष्णुरेव महायोगी चचार वसुधातले ।
भूयोऽन्यत्तप आसिदुग्रतरन्तो ब्राह्मणैः सह । तैश्च सर्व्वैः सुरगणैश्चर्म्मचीरनिवासिभिः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे ऊनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ जनमेजय उवाच ॥ वर्त्तमाने खिले ब्रह्मन्निर्म्मर्थ्यादे महायज्ञे । अविनाशे च भूतानां कथमासन् प्रजास्तदा ।
॥ वैशम्पायन उवाच ॥ पृथुं वैण्यं प्रजापालमभ्यषिञ्चत् प्रजापतिः । राज्याय ऋषिभिः सार्द्धं प्रजा धर्मपरायणः । १२१६०
एष नः परमो राजा सानुरागो व्यजायत । त्रेतायां संप्रवृत्तायामन्योन्यमनुजल्पिरे ।
एष नो वृत्तिदाता च श्रिन्यामाश्च समर्पिता । निर्म्माता सर्व्वभूतानां सत्यप्राप्तेन कर्म्मणा ।
एतस्मिन्नन्तरे देवा गन्धमादनसानुषु । बहुभिर्नियमैः श्रान्ता निषण्णा गिरिसानुषु ।
अथ गन्धं समाघ्राय समन्ताद्देवदानवाः । माधवे समये प्राप्ते तेन गन्धेन दर्पिताः ।
पुष्पमात्रस्य यद्वीर्य्यं मारुतेन विसर्पितं । मनोग्राहि सुखं सर्व्वं पार्थिवं गन्धमुत्तमं । १२१६५
ते दैत्यास्तेन गन्धेन किञ्चिद्विस्मयमागताः । प्रसन्नमनसो भूत्वा परं सौख्यमुपागताः ।
ऊचुश्च सहिताः सर्व्वे तेन गन्धेन दर्पिताः । पुष्पमात्रस्य यद्वीर्य्यं किं तस्य फलतो भवेत् ।
अनुमानेन विज्ञेया विविधाः कर्म्मवृत्तयः । शुभाश्चैवाशुभाश्चैव बुद्धिप्राणेन देहिनां ।
तस्मादयं पयोमध्ये श्रोषधीर्निर्म्मथामहे । मन्दरेण विशालेन बलिना कामरूपिणा ।

समुद्रमभिसंरब्धा मथ्नीमः सोमजं जलं। पीत्वा च सहिताः सर्व्वे प्रस्थिताः कामरूपिणः। ११९७०
विष्णुरेवायणीस्तेषां भविष्यति महाबलः। दिवञ्च वसुधाञ्चैव भोक्ष्यामः सह सूनुभिः।
समूलपत्रशाखाश्च सपुष्पाः सफलाश्रिताः। सर्व्वपर्वतांश्च गच्छामो वसुधां वसुधातले।
उद्धृत्य गिरिपादेभ्यो गन्धमादनसानुजाम्। प्रभाष्य वचनं दैत्या मन्दरस्य प्रकम्पने।
समुद्धर्त्तुं प्रधावन्तः कम्पयन्ति स्म मेदिनीं। निश्चयेन महावीर्य्या बाहुभिः परिघाहिभिः।
न शेकुस्ते समुद्धर्त्तुं शैलेन्द्रं दनुवंशजाः। निपेतुर्जानुभिर्घृष्टा विपुले पर्व्वतान्तरे। ११९७५
समाधायात्मनात्मानं तपसा दग्धकिल्बिषाः। पितामहं प्रपद्यन्त शिरोभिः कामरूपिणः।
तेषां मनोऽभिलषितं ब्रह्मा सर्व्वजगो वशी। ज्ञात्वा बहुविधैर्व्वाक्यैर्व्याजहार सरस्वतीं।
अशरीरां शरीरस्थः परया वर्णसम्पदा। सर्व्वलोकपतिर्ब्रह्मा लोकानां हितकाम्यया।
आदित्यैर्व्वसुभिश्चैव रुद्रैश्च समरुद्गणैः। देवैर्यक्षैः सगन्धर्व्वैः किन्नरैश्च प्रगायिभिः।
समेत्य सहितैः सर्व्वैरुद्धर्त्तुं शक्यते गिरिः। अमृतार्थे महातेजा धातुभिः समरञ्जितः। ११९८०
सुरासुरगणाः सर्व्वे समुत्पाट्य महागिरिं। हस्ताहस्ताः प्रपश्यन्ति क्षीरधौ हि नवं रथं।
एतच्छ्रुत्वा तु वचनं सर्व्वेषामन्तिके तदा। दैतेया बाहुबलिनो मनोभिर्व्वाग्भिरेव च।
विक्षोभभूता बहुधा बभूवुर्लवणाम्भसः। यत्र पुष्करविन्यस्तं सहितैर्द्देवदानवैः।
सुरासुरगणाः सर्व्वे सहिता लवणाम्भसः। मन्दरं पुष्करं कृत्वा नेत्रं वासुकिमेव च।
समाः सहस्रं मथितं जलमोषधिभिः सह। क्षीरभूतं समायोगादमृतं समपद्यत। ११९८५
तस्मात्सुरासुराः पूर्व्वमाक्रान्ता लोभमन्युना। तदा पश्चात्सुरा देवाः कामतेजोबलान्विताः।
धन्वन्तरिस्तथा मद्यं श्रीर्द्देवी कौस्तुभो मणिः। शशाङ्को विमलश्चापि समुत्तस्थुः समन्ततः।
उच्चैःश्रवा हयो रम्यः पीयूषं तदनन्तरं। पश्चाद्देवास्तदा पातुमुद्यता राहुमब्रुवन्।
न च केचित् पिबन्त्यन्ये दैत्या नैव च दानवाः। शिरश्छेदाय हरिः संख्ये राहोश्चक्रेण कं मृधे।
अभियुक्तं पितृगणैर्मुनिभिश्च सनातनैः। तदिन्द्रहस्तादमृतं जहार पृथिवी स्वयं। ११९९०
जगामान्तर्गता देवी ब्रह्मवाक्यप्रचोदिता।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे विंशत्यधिकद्विशततमोऽध्यायः॥ २२०॥
॥ जनमेजय उवाच॥ निहते दैत्यसंघाते विष्णोरमिततेजसः। दैतेया दानवाश्च किमिच्छन्ति पराक्रमात्।
॥ वैशम्पायन उवाच॥ दानवा राज्यमिच्छन्ति पराक्रम्य महाबलाः। तप इच्छन्ति सहिता देवाः सत्यपराक्रमाः।
॥ जनमेजय उवाच॥ कथं कालस्य महतो हिरण्यकशिपुस्तदा। यजते ब्रह्मणः क्षेत्रे प्राभैश्वर्य्यः स कामदः।
॥ वैशम्पायन उवाच॥ यजेद्बहुसुवर्णेन राजसूयेन पार्थिवः। क्रतुना दानवश्रेष्ठो वसुधायां महाबलः। ११९९५
गङ्गायमुनयोर्म्मध्ये यदभूद्विपुलं तपः। समेयुस्तत्र सहिता यजमाने महासुरे।
ब्राह्मणा वेदविद्वांसो महाव्रतपरायणाः। यतयश्चापरे विप्रा योगधर्म्मेण भारत।
मुनयो वालिखिल्याश्च नानाधर्म्मेण शोषिताः। बहवो हि द्विजा मुख्या नित्यं धर्म्मपरायणाः।

स्वधयश्च महाभागा विप्रैः पूज्याः सहस्रशः । विपुले रत्नविभवे क्रियमाणे इतस्ततः ।
शुक्रस्तु सह पुत्रेण दैत्यं याजयते प्रभुः । हिरण्यकशिपुं मध्ये गणानां ज्वलनप्रभः । ११२००
हिरण्यकशिपुश्चैव व्याजहार सरस्वतीं । कामादरं ददामीति तद्वै सम्प्रतिपद्यतां ।
विष्णुर्वामनरूपेण भिक्षां तां प्रतिगृह्णाति । हिरण्यकशिपोर्हस्ताद्धि पदे पदमेव च ।
ततः क्रमितुमारेभे विष्णुः सत्यपराक्रमः । त्रीन् लोकांस्त्रिपदैः क्रान्तैर्दिव्यं वपुरधारयत् ।
हृतराज्याश्च दैतेयाः पातालविवरं ययुः । ससैन्यगणसङ्घाः सप्रासाः सासितोमराः ।
सयन्त्रलगुडाश्चैव सपताकरथध्वजाः । सचर्मवर्मकोशाश्च सायुधाः सपरश्वधाः । ११२०५
तथेन्द्रं विष्णुसहिताः सर्वशोऽभ्युत्थिता गणाः । अभ्यषिञ्चन् प्रमुदिता लोकानामधिपं सुराः ।
स तान् स्वधामृतेनाशु पितॄन् वै समतर्पयत् । ब्रह्मा तदमृतं दिव्यं महेन्द्राय प्रयच्छति ।
अव्ययस्याव्ययस्यैव संवृत्तस्तेन कर्मणा । ततः शङ्खमुपाध्मासीत् द्विषतां लोमहर्षणं ।
पितामहकरोद्भूतं जनिते प्रथमे पदे । तं श्रुत्वा शङ्खशब्दन्तु त्रयो लोकाः समाहिताः ।
निर्वृतिं परमां प्राप्ता इन्द्रं नाथमवाप्य च । सर्व्वैः प्रहरणैश्चैव संयुक्ता वह्निसम्भवैः । ११२१०
मन्दराग्रे सुविहितैर्ज्वलद्भिरिव पावकैः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
॥ वैशम्पायन उवाच ॥ ततो महति वृत्तान्ते स्थिते राज्ये महोदये । देवानां मानुषाणाञ्च सहवासोऽभवत्तदा ।
एकतः समधीयन्त सहिताः प्रवदन्ति च । स्वयञ्च भागं गृह्णन्ति यज्ञकर्म्मणि भारत ।
प्राचेतसं ततो दक्षं दीक्षित्वा वै बृहस्पतिः । वाजिमेधाय भगवानृषिभिः परिवारितः ।
तस्मिन्प्रातामहे यज्ञे दक्षस्य विदितात्मनः । शामित्रमकरोद्रुद्रो भागार्थं सह नन्दिना । ११२१५
रुद्रस्यैव हि तद्रूपं द्विधाभूतं तदीच्छया । जातः परमधर्म्मात्मा नन्दी पुरुषविग्रहः ।
तेन योगेन राजेन्द्र यत्तद्ब्रह्म सनातनं । विहितं सत्यवचनैस्तेनैव परमात्मना ।
स्वरूपैश्चाप्यरूपैश्च विरूपाक्षैर्घटोदरैः । ऊर्द्ध्वमेढ्रैर्महाकायैर्विकटैर्वामनैस्तथा ।
शिखिभिर्जटिभिश्चैव व्यक्तैश्च शङ्कुकर्णिभिः । चीरिभिश्चर्म्मिभिश्चैव कूटमुद्गरपाणिभिः ।
सघण्टाचीरिभिश्चैव मुञ्जमेखलधारिभिः । महस्तकटकैश्चैव स्वर्णकुण्डलधारिभिः । ११२२०
सडिण्डिमैः सभेरीकैः समृदङ्गैः सवेणुभिः । एतैः परिवृतो देवो मखं तं समुपाव्रजत् ।
सशङ्खमुरजैश्चापि सतालतलपाणिभिः । उग्रायुधधरो देवः सपिनाक इवान्तकः ।
विरराजार्धभिर्द्दीप्तैर्मखे मखवतां वरः । कालाग्निरिव दीप्तार्च्चिर्जगद्दग्धुमिवोद्यतः ।
नन्दी पिनाकपाणिश्च जग्मतुर्म्मखमुत्तमं । युगान्त इव कालाग्निः क्षिप्रं दग्धुमिवोद्यतः ।
यूपमुत्क्षिप्य धावन्ति निशाचरगणास्ततः । चालयन्मुनिसंघांश्च चीरचर्म्मनिवासिनः । ११२२५
हवींष्यन्ये पिबन्त्येवं जिह्वाभिस्ताम्रलोचनाः । भक्षयन्ति पशूनन्ये रसनाद्यैः प्रलम्बिभिः ।
मुमुचुश्चापरे यूपान् प्रसभं प्रहरन्ति च । वह्निमन्ये प्रसिञ्चन्ति वारिभिः प्रहसन्ति च ।

सोममन्ये जहुः केचिच्चैवैरावणजवोपमैः । दर्भान् केचित् प्रलुम्पन्ति हस्तैः पद्मदलप्रभैः ।
बभञ्जिरे च यूपाग्रान् कलशांश्चैव चिक्षिपुः । चिच्छिदुः काञ्चनान् वृक्षान् शोभार्थं संप्रकल्पितान् ।
विभिदुश्चैव वापीश्च मुमुचुश्च हिरण्मयान् । लुलुपुश्चैव पात्राणि ममन्थुश्चारणीमथ । १२१३०
चरुकं चैव प्राश्नंश्च लुलुपुश्च समाहिताः । चखादिरे पुरोडाशानथापैश्चावकर्त्तिरे ।
एवं दिवा च रात्रौ च भिद्यमानो महामखः । चुक्रोश च महानादं भिद्यमान इवार्णवः ।
धनुः सशरमादाय पूर्व्वदत्तं स्वयम्भुवा । कृतं कीचकवेणुभ्यां समरेषु महाबलं ।
प्रतिगृह्य महादेवः स शरैः समयोजयत् । धनुर्विस्फार्य जानुभ्यां जघान सुमहाक्रतुं ।
स विद्धस्तेन बाणेन खं समुत्पतितः क्रतुः । मृगो भूत्वा नर्द्दमानो ब्रह्माणमुपधावति । १२१३५
शरेणाभिहतस्त्राणं न लेभे शरणं भुवि । शरणार्थी स्वयं प्राप्तः शरेणान्तर्गतेन च ।
तमुवाच मृगं ब्रह्मा शुभं सान्त्वनं वचः । स्वरेणोत्तमवीर्य्येण गम्भीरेण सुभाषिणा ।
एवंरूपो नभसि त्वं भविष्यसि महामृग । विजितस्त्रिपर्व्वेण शरेणानतपर्व्वणा ।
तिष्ठ नक्षत्रशिरसि सह रुद्रेण नित्यशः । सोमेन सह संयुक्तो स्वश्रयेणाश्रयेन च ।
दिवि सम्भारभूताभिस्ताराभिः सह सङ्गतः । ज्योतिषां ज्योतिर्भूतस्त्वं भूतस्त्वं शाश्वतो भव । १२१४०
यत्रैव रुद्रशिरं दिव्यं चतात् समभिनिःसृतं । नभस्युत्पतितस्तत्र प्रवेगेण प्रधावतः ।
चतजं शङ्खवर्णञ्च केतुनक्षत्रसंस्थितं । निमित्तभूतं भूतानां वर्षे वर्षप्रदं तथा ।
सुखं दुःखञ्च भूतानां दर्शनात् संप्रवर्त्तते । इन्द्रियश्रवणाच्चैव नभसोऽन्तरायुधोऽभवत् ।
चक्षुषी मानुषे राजन् विस्मयात् सन्निवेशनां । अद्भुतं बहुचित्रञ्च मनसा संप्रकल्पितं ।
न तु रात्रौ प्रदृश्येत खे तु सम्प्रणसंस्थितं । दिवसस्यैव सदा क्षये महत् कार्य्ये प्रदृश्यते । १२१४५
भूमावेव समुत्तिष्ठदाकाशे प्रविलीयते । शतशश्च समं सर्व्वे प्रधावन्ति प्रचेतसः ।
भयाद्रुद्रस्य महतो धन्विनो बाणपाणयः । नन्दी रुद्रगणैः सार्द्धं पिनाकी समतिष्ठत ।
युगान्तकाले ज्वलितो ब्रह्मदण्ड इवोद्यतः । विष्णुः शङ्खायसंभूतं प्रगृह्य विपुलं धनुः ।
प्रातिष्ठत महाबाहुः पाणिना चक्रमादधत् । गदां सघण्टामन्येन खड्गमन्येन पाणिना ।
प्रगृह्य सोऽग्रतोऽतिष्ठद्रुद्रायोद्यतपाणये । ततः शृङ्गायसंभूतं प्रगृह्य विपुलं धनुः । १२१५०
शार्ङ्गञ्चाप्रतिमं लोके शरांश्चानतपर्व्वणः । विष्णुरग्रे स्थितो भाति सबलः संहताञ्जलिः ।
खड्गगोधाङ्गुलित्राणः सचन्द्र इव तोयदः । आदित्या वसवश्चैव दिव्यैः प्रहरणैः सह ।
विष्णुमेवाभितः सर्व्वे प्रतिष्ठन् ज्वलनप्रभाः । मरुतश्चैव विश्वे च रुद्रमेवाभिपद्यत ।
गन्धर्व्वाः किन्नराश्चैव नागा यक्षाः सपन्नगाः । ऋषयो न्यस्तदण्डाश्च उभयोः पक्षयोर्हिताः ।
जपन्ति शान्तये नित्यं लोकानां हितकाम्यया । रुद्रः शरेणाभ्यहनद्विष्णुं नारायणं रणे । १२१५५
हृदि सर्व्वाङ्गसन्धीषु तीक्ष्णाग्रेण च पत्रिणा । न चकम्पे तदा विष्णुः सर्व्वात्मा ब्रह्मसंभवः ।
न च रोषममा देहं कृतं बिभ्रत् षडिन्द्रियैः । विष्णुश्च धनुरादाय शरेण समयोजयत ।

मधुरेणैव सुमीयाद् ब्रह्मदक्षनिवेशनं । स विद्धस्तेन बाणेन महादेवो न कम्पते ।
वज्रेणेव महायष्टिर्मन्दरस्य न चाल्यते । ततः प्रथममाप्लुत्य रुद्रं विष्णुः सनातनः ।
जग्राह कण्ठे भगवान्नीलकण्ठस्ततोऽभवत् । अनादिनिधनो देवः कथ्यतां भगवानसम । १२२६०
सर्व्वभूतानामाचार्य्यः कर्म्मणा च न चाल्यते । कर्म्मणाञ्चैव कर्त्ता च विकर्त्ता चैव भारत ।
शरीरत्वाच्च भूतानां सर्व्वभूतेषु चोत्तमः । स्वयमेव हि यत् कर्म्म विधत्ते कर्म्मयोनिषु ।
तयोः शुभतमो राजन् स्वयमेव तथाऽकरोत् । अन्तरीक्षाच्छुभा वाचः श्रूयन्ते मधुराक्षराः ।
सिद्धानां वदनोन्मुक्ताः सनातन नमोऽस्तु ते । नन्दी पिनाकमुद्यम्य बलवानुग्रसम्भवः ।
मूर्द्धन्यभिजघानाजौ विष्णुं क्रोधेन मूर्च्छितः । ततः प्रहसितो विष्णुर्नन्दिं दृष्ट्वा सुरोत्तमः । १२२६५
स्तम्भयामास भगवान् सर्व्वभूतपतिर्हरिः । विष्णुर्धर्म्मपरो भूत्वा तेजसा प्रज्वलन्निव ।
क्षमया च समायुक्तः स्थितः स्थाणुरिवाचलः । अचिन्त्यश्चाप्रमेयश्च अजेयश्चारिन्दमः ।
युगान्ताग्निसमो भूत्वा शान्तात्मा हरिरव्ययः । प्रसन्नः कल्पयामास भागं रुद्राय धीमते ।
विष्णुर्धर्म्मपरो नित्यं त्यक्तकामः सुरर्षभः । विष्णुना चैव राजेन्द्र स यज्ञः सन्धितः पुनः ।
यथापचश्च ते सर्व्वे गणा शाम्यन्ति कोपते । तस्मिन् युद्धे महाघोरे विष्णोरुद्रस्य चैव ह । १२२७०
यथापञ्च भवेद्युद्धं दक्षयज्ञविनाशने । विनाशश्चैव यज्ञस्य तदा लोके प्रतिष्ठितः ।
सर्व्वभूतेषु राजेन्द्र स्थितो यज्ञः सनातनः । दक्षो यज्ञफलञ्चैव प्राप्तवान् स प्रजापतिः ।
एष पौष्करको नाम प्रादुर्भावो महात्मनः । पुराणे पुष्करे चैव यथा द्वैपायनेरितः ।
यथावदनुपूर्व्वेण संस्तुतः परमर्षिभिः ।
यश्चैनमग्र्यं प्रवरं पुराणं सदा ऽप्रमत्तः शृणुयाद्यथोक्तं । अवाप्य कामानिह वीतशोकः परत्र स स्वर्गफलानि भुङ्क्ते । १२२७५
इमाञ्चोदाहृतां दिव्यां कथाममितबुद्धिमान् । श्रावयेच्च विप्रेभ्यः शुचिः प्रयतमानसः ।
अधीत्य सर्व्वमध्यात्मं देवलोके महीयते ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौष्करे द्वाविंशत्यधिकद्विशततोऽध्यायः ॥ २२२ ॥

॥ जनमेजय उवाच ॥ प्रादुर्भावः पुराणेषु विष्णोरमिततेजसः । सतां कथयतां विप्र वाराह इति नः श्रुतं ।
न जाने तस्य चरितं न विधिं न च विस्तरं । न कर्म्मगुणसन्तानं न हेतुं न मनीषितं ।
किमात्मको वराहोऽसौ का मूर्त्तिः काऽस्य देवता । किमाचारः किम्प्रभावः किं वा तेन पुरा कृतं । १२२८०
एतन्मे संश्र तत्त्वेन वाराहं श्रुतिविस्तरं । यज्ञार्थन्तु समेतानां द्विजातीनां महात्मनां ।
॥ वैशम्पायन उवाच ॥ हन्त ते कथयिष्यामि पुराणं ब्रह्मसम्मितं । नानाश्रुतिसमायुक्तं कृष्णद्वैपायनेरितं ।
महावराहचरितं कृष्णस्याद्भुतकर्म्मणः । यथा नारायणो राजन् वाराहं वपुरास्थितः ।
दंष्ट्रया गां समुद्रस्थामुज्जहारारिसूदनः । छान्दसीभिरुदाराभिः श्रुतिभिः समलङ्कृतः ।
शुचिः प्रयतवाग्भूत्वा निबोध जनमेजय । इदं पुराणं परमं पुण्यं वेदैश्च सम्मितं । १२२८५
नानाश्रुतिसमायुक्तं नास्तिकाय न कीर्त्तयेत् । पुराणमेतदखिलं सांख्यं योगं तथैव च ।

कार्त्स्न्येन विधिना प्रोक्तं सोऽस्यार्थं वेदयिष्यति। विश्वेदेवास्तथा साध्या रुद्रादित्यास्तथाऽश्विनौ।
प्रजानां पतयश्चैव सप्त चैव महर्षयः। मनःसङ्कल्पजाश्चैव पूर्व्वजाश्च महर्षयः।
वसवोऽप्सरसश्चैव गन्धर्व्वा यक्षराक्षसाः। दैत्याः पिशाचा नागाश्च भूतानि विविधानि च।
ब्राह्मणाः क्षत्त्रिया वैश्याः शूद्रा म्लेच्छादयो भुवि। चतुष्पदानि सर्व्वाणि तिर्य्यग्योनिगतानि च। ११८९०
जङ्गमानि च सत्त्वानि यच्चान्यज्जीवसंश्रितं। पूर्णे युगसहस्रान्ते ब्राह्मेऽहनि तथा गते।
निर्व्वाणे सर्व्वभूतानां सर्व्वोत्पातसमुद्भवे। हिरण्यरेतास्त्रिशिखस्ततो भूत्वा वृषाकपिः।
शिखाभिर्व्विधमँल्लोकान् शोषयति देहिनः। दह्यमानास्ततस्तस्य तेजोरश्मिभिरग्नतः।
विवर्णवर्णा दग्धाङ्गा हतार्च्चिषश्चिरानलैः। साङ्गोपनिषदो वेदा इतिहासपुरोगमाः।
सर्व्वविद्याः क्रियाश्चैव सत्यधर्म्मपरायणाः। ब्रह्माणमग्रतः कृत्वा प्रभवं विश्वतोमुखं। ११८९५
सर्व्वे देवगणाश्चैव त्रयस्त्रिंशच्च छन्दजाः। तस्मिन्नहनि संप्राप्ते तं हंसं महदक्षरं।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुं। तेषां तत्र प्रविष्टानां प्रलयोत्पत्तिरुच्यते।
यथा सूर्य्यस्य सततमुदयास्तमने प्रभो। पूर्णे युगसहस्रान्ते कल्पो निःशेष उच्यते।
यस्मिन् जीवकृतं सर्व्वं निःशेषं नावतिष्ठते। संहृत्य लोकान्निखिलान् ससुरासुरपन्नगान्।
कृत्वात्मगर्भे भगवानास्ते एको जगद्गुरुः। स स्रष्टा सर्व्वभूतानां कल्पान्तेषु पुनः पुनः। ११९००
अव्यक्तः शाश्वतो देवस्तस्मिन् सर्व्वमिदं जगत्। नष्टार्ककिरणेऽलोके चन्द्ररश्मिविवर्ज्जिते।
त्यक्तधूमाग्निपवने क्षीणयज्ञतपःक्रिये। अपक्षिगणसंपाते सर्व्वप्राण्यचरे पथि।
अमर्य्यादाकुले रौद्रे सर्व्वतस्तमसा वृते। अदृश्ये सर्व्वलोकेऽस्मिन्नभावे सर्व्वकर्म्मणां।
प्रशान्ते सर्व्वसम्पाते नष्टवैरपरिग्रहे। गते स्वभावसंस्थानं लोके नारायणात्मके।
परमेष्ठी हृषीकेशः शयनायोपचक्रमे। पीतवासा लोहिताक्षः कृष्णजीमूतसन्निभः। ११९०५
शिखासहस्रविकचं जटाभारं समुद्वहन्। श्रीवत्सकलिलं पुण्यं रक्तचन्दनरूषितं।
वक्षो बिभ्रन्महाबाहुः सविद्युदिव तोयदः। पुण्डरीकसहस्रस्य मालाऽस्य शुशुभे तदा।
पत्नी चैव स्वयं लक्ष्मीर्देहमावृत्य तिष्ठति। ततः स्वपिति धर्म्मात्मा सर्व्वलोकपितामहः।
कमप्यमितविक्रान्तो निद्रायोगमुपागतः। ततो वर्षसहस्रे तु पूर्णे स पुरुषोत्तमः।
स्वयमेव विभुर्भूत्वा बुध्यते विबुधाधिपः। ततश्चिन्तयते भूयः सृष्टिं लोकस्य लोककृत्। ११९१०
पितृदेवासुरनरान् पारमेष्ठ्येन कर्म्मणा। ततश्चिन्तयते कार्य्यं देवेषु समितिञ्जयः।
सम्भवं सर्व्वलोकस्य विदधाति स वाक्पतिः। कर्त्ता चैव विकर्त्ता च संहर्त्ता च प्रजापतिः।
धाता विधाता च तथा संयमो नियमो यमः। नारायणपरा वेदा नारायणपराः क्रियाः।
नारायणपरो यज्ञो नारायणपरा श्रुतिः। नारायणपरो मोक्षो नारायणपरा गतिः।
नारायणपरो धर्म्मो नारायणपरः क्रतुः। नारायणपरं ज्ञानं नारायणपरं तपः। ११९१५
नारायणपरं सत्यं नारायणपरं पदं। नारायणात् परो देवो न भूतो न भविष्यति।

स स्वयम्भूरिति ज्ञेयः स ब्रह्मा भुवनाधिपः। स वायुरिति विज्ञेय एष यज्ञः प्रजापतिः।
सदसच्च स विज्ञेयः सर्व्वज्ञः स प्रभाकरः। यद्वेदितव्यं विद्वांसस्तदेव परिविन्दति।
यच्च वेद्यं भगवतो देवा अपि न तद्विदुः। प्रजानां पतयः सप्त ऋषयश्च महामरैः।
नास्यान्तमधिगच्छन्ति तेनानन्त इति श्रुतिः। यदस्य परमं रूपं तन्न पश्यन्ति देवताः।
प्रादुर्भावेषु संभूतं यत्तद्दर्शन्ति देवताः। दर्शितं यदनेनैव तदवेक्षन्ति देवताः।
यन्न दर्शितवानेष कस्तदन्वेष्टुमर्हति। ग्रामणीः सर्व्वभूतानामग्निमारुतयोर्गतिः।
तेजसस्तपसश्चैव निधानममृतस्य च। चातुराश्रम्यधर्म्मेशश्चातुर्होत्रफलाशनः।
चतुःसागरपर्य्यन्तश्चतुर्युगनिवर्त्तकः। तदेव संहृत्य जगत् कृत्वा गर्भस्थमात्मनः।
मुमोचाण्डं महायोगी धृत्वा वर्षसहस्रकं।
सुरासुरद्विजभुजगाप्सरोगणैर्द्रुमौषधिक्षितिधरयक्षगुह्यकैः। प्रजापतिः श्रुतिधरशाश्वतां कुलं तदाऽसृजज्जगदिदमात्मना प्रभुः।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वाराहे प्रादुर्भावे चयोविंशत्यधिकद्विशततोऽध्यायः॥ २२३ ॥
॥ वैशम्पायन उवाच ॥ जगदण्डमिदं पूर्व्वमासीत् सर्व्वं हिरण्मयं। प्रजापतेर्मूर्त्तिमयमितीयं वैदिकी श्रुतिः।
तद्वै वर्षसहस्रान्ते बिभेदोर्द्ध्वमुखं विभुः। लोकोद्भवनहेतुर्वो विभेदाधोमुखं पुनः।
भूयोऽष्टधा विभेदाण्डं विभुर्व्वै लोकयोनिकृत्। चकार जगतश्चात्र विभागं सर्व्वभागवित्।
यच्छिद्रमूर्द्ध्वमाकाशं परा सुकृतिनां गतिः। विहितं विश्वयोगेन यदधस्तद्रसातलं।
यदण्डमकरोत् पूर्व्वं देवलोकसिसृक्षया। समन्तादष्टधा योगी च्छिद्राणि कृतवांश्च सः।
दिशश्च विदिशः सर्व्वा मनसैवाकरोद्द्विधा। नानारागविरागाणि यान्यण्डशकलानि वै।
बहुवर्णधराश्चित्रा बभूवुस्ते बलाहकाः। यदण्डमध्ये स्कन्नन्तु द्रवमासीत् समाहितं।
जातरूपं समभवत्तत् सर्व्वं पृथिवीतले। तस्य क्षीदार्णवौघेन प्राच्छाद्यत समन्ततः।
पृथिवी निखिला राजन् युगान्ते सागरैरिव। यच्चाण्डमकरोदूर्द्ध्वं देवलोकचिकीर्षया।
तत्र यत् सलिलं स्कन्नं सोऽभवत् काञ्चनो गिरिः। तेनाम्भसा प्लुताः सर्व्वा दिशश्चोपदिशश्च ह।
अन्तरीक्षञ्च नाकञ्च यच्चान्यत् किञ्चिदन्तरं। यत्र यत्र जलं स्कन्नं तत्र तत्रोत्थितो गिरिः।
सहस्रशैलगहना विषमा मेदिनी त्वभूत्। तैः सा पर्व्वतजालौघैर्व्वहुयोजनविस्तृतैः।
पीडिता गुरुभिर्द्देवी पृथिवी व्यथिताऽभवत्। महीतले भूरिजलं दिव्यं नारायणात्मकं।
हिरण्मयं समुत्सृज्य तेजश्च जलरूपि तत्। अशक्ता वै धारयितुमधस्तात् प्राविशत्तया।
पीड्यमाना भगवतस्तेजसा तेन सा क्षितिः। पृथिवीं विशतीं दृष्ट्वा तामधो मधुसूदनः।
उद्धारार्थं मनश्चक्रे लोकानां हितकाम्यया।
॥ भगवानुवाच ॥ एषा मत्तेजसो वीर्य्यं समासाद्य तपस्विनी। रसातलं प्रविशते पङ्के गौरिव दुर्व्बला।
॥ पृथिव्युवाच ॥ त्रिविक्रमायामितविक्रमाय महानृसिंहाय चतुर्भुजाय। श्रीशार्ङ्गचक्रासिगदाधराय नमोऽस्तु ते काम
वरप्रदाय।

ततो नदत्सु तूर्य्येषु नृत्यत्स्वप्सरःसु च । क्षीरोदस्योत्तरं कूलं जगाम हरिरीश्वरः ।
नारसिंहं वपुस्त्यक्त्वा स्थापयित्वा च तद्वपुः । पौराणं रूपमास्थाय प्रययौ गरुडध्वजः ।
अष्टचक्रेण यानेन भूतयुक्तेन भास्वता । अव्यक्तप्रकृतिर्देवः स्वस्थानमगमत् प्रभुः ।
एवं महात्मना तेन नृसिंहवपुषा तथा । देवारिर्निहतो राजन् हिरण्यकशिपुः पुरा ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि नारसिंहे वध्यस्तोत्रे अष्टत्रिंशदधिकद्विशततोऽध्यायः ॥२३८॥
॥ वैशम्पायन उवाच ॥ नारसिंहो मया प्रोक्तो भूयोऽयं वामनोऽपरः । यत्र वामनमास्थाय रूपं रूपवतांवरः । ११९००
बलेर्ब्बलवतो यज्ञे विष्णुना प्रभविष्णुना । विक्रमैस्त्रिभिराक्रम्य त्रैलोक्यमखिलं हृतं ।
समुद्ररशना चोर्व्वी नानानगविभूषिता । हृत्वा दत्ता सुरेन्द्राय शक्राय प्रभविष्णुना ।
॥ जनमेजय उवाच ॥ अत्र मे संशयो ब्रह्मन्नत्र मे विस्मयो महान् । कथं नारायणो देवो वामनत्वमुपागतः ।
यः पुराणे पुराणात्मा भूत्वा नारायणो विभुः । पद्मनाभो महाबाहुर्लोकानां प्रकृतिर्ध्रुवः ।
अनादिमध्यनिधनस्त्रैलोक्यादिः सनातनः । देवदेवः सुराध्यक्षः कृष्णो लोकनमस्कृतः । ११९०५
हव्यकव्यवहः श्रीमान् हव्यकव्यभुगव्ययः । अदित्या देवमातुस्तु कथं गर्भेऽभवत् प्रभुः ।
ज्येष्ठो यो वासवस्यापि स कथं वासवानुजः । प्रसूतो दिवि देवेशो विष्णुत्वं प्राप्तवान् कथं ।
एतदाचक्ष्व मे ब्रह्मन् प्रादुर्भावं महात्मनः ।
॥ वैशम्पायन उवाच ॥ शृणु राजन् कथां दिव्यामर्च्चितामृषिपुङ्गवैः । पुराणैः कविभिः प्रोक्तां ब्रह्मोक्तां ब्राह्मणेरितां ।
मारीचस्य सुरेशस्य कश्यपस्य प्रजापतेः । अदितिर्दितिर्द्वे भार्य्ये भगिन्यौ जनमेजय । ११९१०
अदित्यां जज्ञिरे देवाः कश्यपस्य महात्मनः । धाताऽर्य्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ।
इन्द्रो विवस्वान् पूषा च पर्ज्जन्यो दशमः स्मृतः । ततस्त्वेकादशस्त्वष्टा द्वादशो विष्णुरुच्यते ।
दित्यां प्रसूतो बलवान् हिरण्यकशिपुः प्रभुः । तस्यानुजस्तु दैत्येन्द्रो हिरण्याक्षो महाबलः ।
हिरण्यकशिपोः पुत्त्राः पञ्च घोरपराक्रमाः । प्रह्लादह्रादौ संह्रादो जम्भोऽनुह्राद एव च ।
विरोचनस्तु प्राह्लादिस्तस्य पुत्त्रो बलिः स्मृतः । पुत्त्रपौत्त्रं बलवतां तेषामक्षयमव्ययं । ११९१५
तेजस्विनां सुरारीणां दैत्येन्द्राणां महात्मनां । गणाः सुबहवो राजन् देशे देशे सहस्रशः ।
ते दृष्ट्वा नरसिंहेन हिरण्यकशिपुं हतं । दैत्या देववधार्थाय बलिमिन्द्रं प्रचक्रिरे ।
दृष्ट्वा धर्म्मपरं नित्यं सत्यवाक्यं जितेन्द्रियं । शौर्य्याध्ययनसम्पन्नं सर्व्वशास्त्रविशारदं ।
परावरदृष्टीतार्थं तत्त्वदर्शिनमव्ययं । तेजस्विनं कृतप्रज्ञं हिरण्यकशिपुं यथा ।
अभिषेकेण दिव्येन बलिं वैरोचनिं प्रभुं । दैत्याधिपत्ये दितिजास्तदा सर्व्वेऽभ्यपूजयन् । ११९२०
अभिषिक्तस्तु दैत्यैस्तैर्बलिर्ब्बलवतां वरः । ब्रह्मणा चैव तुष्टेन हिरण्यकशिपोः पदे ।
अभिषिक्तोऽसुरैः सार्द्धं बलिर्वैरोचनिस्तदा । काञ्चनैः कलशैः स्रोतैः सर्व्वतीर्थाम्बुसंभृतैः ।
जयशब्दं ततश्चक्रुरभिषिक्तस्य दानवाः । बलेरतुलवीर्य्यस्य सिंहासनगतस्य च ।
कृत्वेन्द्रं दानवाः सर्व्वे बलिं बलवतांवरं । ततो विज्ञापयामासुः शिरोभिः पतिताः क्षितौ ।

॥ दैत्या ऊचुः ॥ विदितं तव दैत्येन्द्र हिरण्यकशिपोर्यथा। त्रैलोक्यमासीदखिलं सह स्थावरजङ्गमं। १२८९५
पितामहस्तु ते हत्वा सुरैः सुरनिसूदन। हृतं तदेव त्रैलोक्यं शक्रश्चैवाभिषेचितः।
तत्त्वं पैतामहं राज्यं प्रत्याहर्त्तुमिहार्हसि। अस्माभिः सहितो नाथ त्रैलोक्यमिदमव्ययं।
प्रत्यानयस्व भद्रं ते राज्यं पैतामहं विभो।
असुरगणसहस्रसंवृतस्त्वं जय दिवि देवपतिं सहानुगं तं। अमितबलपराक्रमोऽसि राजन्नतिशयसे स्वगुणैः पितामहं स्वं।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने बलेरभिषेके ऊनचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २२९ ॥
॥ वैशम्पायन उवाच ॥ निशम्य तेषां वचनं महामतिर्बलिस्तदा प्रीतमना महाबलः। आज्ञापयामास स दैत्यकोटीस्त्रैलोक्य
महैव जयेम सर्व्वं। १२९००
तस्य तद्वचनं श्रुत्वा बलेर्वैरोचनेस्तदा। उद्योगं परमञ्चक्रुर्दानवा युद्धदुर्म्मदाः।
महापार्श्वो निकुम्भश्च पूर्णकुम्भश्च वीर्य्यवान्। काश्यनाभः कपिस्कन्धो व्याघ्राक्षः क्षितिकम्पनः।
सितकेशोर्द्धवक्त्रश्च वज्रनाभः शिखी जटी। सहस्रबाहुर्विकचो मीनाक्षः प्रियदर्शनः।
एकाक्ष एकपाच्छुण्डो त्रिमुदश्चतुर्भुजः। गजोदरो गजशिरा गजस्कन्धो गजेक्षणः।
अष्टदंष्ट्रश्चतुर्दंष्ट्रो मेघनादी जलन्धमः। करालो ज्वालजिह्वश्च शताक्षः शतलोचनः। १२९०५
सहस्रपात् कृष्णमुखः कृष्णश्चैव महासुरः। रणोत्कटो दानपतिः शैलकम्पी कुलाकुलः।
समुद्रो रभसश्चण्डो धूम्रश्चैव प्रियङ्करः। गोशङ्खो गोखुरो रौद्रो गोदन्तः स्वस्तिको ध्रुवः।
मांसपो मांसभक्षश्च वेगवान् केतुमान् शिविः। पङ्कदिग्धशरीरश्च हृत्कोष्टिर्महाहनुः।
शशप्रभो विकुष्माण्डो विरूपाक्षो हराहरो। श्वेतशीर्षश्चन्द्रहनुश्चन्द्रहा चन्द्रतापनः।
विकटो दीर्घकण्ठश्च मद्यपो मारुताशनः। कालकञ्जो महाक्रोधः शलभः कुलभः क्रयः। १२९१०
समुद्रमथनो नादी विदर्भश्च महाबलः। प्रलम्बो नरको बाली खसमः काललोचनः।
वरिष्ठश्च गविष्ठश्च भूतलोन्मथनो विभुः। सुप्रमादः किरीटी च सूचीवक्त्रो महासुरः।
सुबाहुः खड्गबाहुश्च वरुणः कलशोदरः। सोमपो देवयाजी च प्रवरो शीघ्रमर्द्दनः।
गृध्रपृष्ठश्चण्डकलिश्च कुम्भनेत्रः शशिध्वजः। यथास्मृतिमया प्रोक्ता मारीचेः कीर्त्तिवर्द्धनाः।
एते चान्ये च बहवो नानाभूषणभूषिताः। रथौघैर्गजमातङ्गैर्युयुर्युद्धाय दंशिताः। १२९१५
दिव्यमाल्याम्बरधरा दिव्यस्रगनुलेपनाः। दिव्यैश्च कवचैर्बद्धा दिव्यैश्चैवोच्छ्रितैर्ध्वजैः।
दिव्याम्बरधरा दैत्या गर्ज्जमाना इवाम्बुदाः। हृष्टैः स्यन्दनघोषैश्च नादयन्तो वसुन्धरां।
महाबला दिव्यबलास्त्रधारिणो भुजङ्गभोगप्रतिमैर्महाभुजैः। सुदुर्जया दैत्यवृषाः सुरारयो दितिप्रिया लोहितलोहितेक्षणाः।
ते अम्बुरक्तज्वलनेन्दुवीर्य्या महेन्द्रवज्राशनितुल्यवेगाः। विवृत्तदंष्ट्रा हरिधूम्रकेशा विनर्द्दमानाः शरदीव मेघाः।
सहस्रबाहुर्बाणस्तु बलेः पुत्रो महाबलः। रथातिरथकोट्याऽसौ संनद्धस्तु स वीर्य्यवान्। १२९२०
सर्व्वे मायाधराः शूराः सर्व्वे दिव्यास्त्रयोधिनः। सर्व्वे बलमदोत्सिक्ताः सर्व्वे लब्धवरास्तथा।

सर्व्वे काञ्चनशैलाभाः सर्व्वे कोशेयवाससः । किरीटोष्णीषमुकुटा दिव्यभूषणभूषिताः ।
हिरण्यकवचाः सर्व्वे हिरण्यध्वजकेतवः । चन्दनस्था व्यराजन्त शारदा इव खे घनाः ।
तापनीयैर्व्वरैर्निष्कैः कालाग्निज्वलितप्रभैः । हेमपर्व्वतशृङ्गस्थाः पुष्पिता इव किंशुकाः ।
तेषां मध्यगतो बाणः प्रावृषीवोत्थितो घनः । स्थितः शक्तिगदापाणिश्छिन्नाभ्रप्रतिमे रथे । १२९५५
चित्राश्वेताध्वजयुगे चित्रभक्तिविराजिते । गदापरिघसंपूर्णे हेमजालविभूषिते ।
अर्च्चीयमानो दितिजैर्वालिखिल्यैरिवांशुमान् । नानाप्रहरणैर्घोरैर्दीप्तास्यैरिव चोरगैः ।
पञ्च तस्य महावीर्य्या दानवा युद्धदुर्धराः । रक्षन्ति रथमव्यग्रा व्यादितास्या भयानकाः ।
सुबाहुर्मेघनादश्च भीमवेगश्च वीर्य्यवान् । तथा गगनमूर्द्धा च वेगवान् केतुमानपि ।
कनकरजतभक्तिचित्रपार्श्वे पतगपतिप्रतिमे रथे स्थितोऽभूत् । जलदनिनदतुल्यनेमिघोषे सुरगणसैन्यवधाय दानवेन्द्रः ।१२९६०
अनायुषायाः पुत्रस्तु बलो नाम महासुरः । वृतः शतसहस्रेण रथानां भीमवर्चसां ।
युक्तमृक्षसहस्रेण रथमास्थाय वीर्य्यवान् । नीलायसमयं घोरं वायसाङ्कं सुदुर्जयं ।
नीलाम्बरधरः श्रीमान् वैदूर्य्याचलसन्निभः । महता रथवृन्देन प्रययौ दानवस्तदा ।
तच्चैकार्णवसंकाशे सैन्यमध्ये व्यराजत । प्रभातसमये श्रीमान् समुद्रस्थ इवांशुमान् ।
स तप्तजाम्बूनदतुल्यवर्चसा निशाकराकारतडित्प्रभारुणः । किरीटमुख्येन विभाति शोभिना यथा गिरिः शृङ्गवरेण भास्वता ।१२९६५
षष्टीरथसहस्राणि नमुचेरसुरस्य वै । खरयुक्तानि सर्व्वाणि मेघतुल्यस्वराणि च ।
नानाप्रहरणाः सर्व्वे सर्व्वे ते चित्रयोधिनः । महाभ्रघनसंकाशा वेगवन्तो महाबलाः ।
रथो व्याघ्रसहस्रेण युक्तः परमवीर्य्यवान् । नमुचेरसुरेन्द्रस्य सर्व्वरत्नविभूषितः ।
शार्दूलचिह्नः शुशुभे तस्य केतुर्हिरण्मयः । रथमध्येऽसुरेशस्य दिनमध्ये रविर्यथा ।
स भीमवेगश्च महाबलश्च प्रगृह्य चापं हिमवानिव स्थितः । नीलाम्बरः काञ्चनपट्टनद्धो दिशागजो यद्वदुपेतकक्षः । १२९७०
किङ्किणीजालनिर्घोषं तपनीयपरिष्कृतं । सपताकध्वजोपेतं सचन्द्रमिव तोयदं ।
चक्रैश्चतुर्भिः संयुक्तमष्टनल्वायतान्तरं । हेमजालाकुलं दीप्तं कालचक्रमिवोद्यतं ।
नानायुधधरं दिव्यं व्याघ्रचर्म्मपरिच्छदं । ईहामृगगणाकीर्णं चित्रभक्तिविराजितं ।
तूणीरशतसंपूर्णं शक्तितोमरसङ्कुलं । गदामुद्गरसम्बाधमारुरोह मयो रथं ।
युक्तमृक्षसहस्रेण लम्बकेशरवर्चसा । राजतेनेव शैलेन शोभितं सिंहकेतुना । १२९७५
स तदा शुशुभे दैत्यो विश्वकर्म्मकृते बली । रथस्थे स्थितः श्रीमानुदयस्थ इवांशुमान् ।
विमलरजतबिन्दुशोभिताङ्गं मणिकनकोज्ज्वलशातभक्तिचित्रं । अयुतशतसहस्रमूर्च्छितानां मयमनुयाति महाहवे रथानां ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥
॥ वैशम्पायन उवाच ॥ पुलोमा तु महादैत्यस्तिमिराकारसन्निभः । अध्यारोहायसं घोरं रथं परमदारुणं ।
पर्व्वतोत्करसंकाशं लोहजालान्तरान्तरं । नेमिघोषेण महता क्षुभ्यन्तमिव सागरं ।
गदापरिघनिस्त्रिंशैस्तोमरैः सपरश्वधैः । शक्तिमुद्गरसम्पूर्णं सतोयमिव तोयदं । १२९८०

रथमुष्ट्रसहस्रेण संयुक्तं वायुवेगिना । पुलोमाहस्य युद्धाय प्रस्थितो युद्धदुर्म्मदः ।
षष्टीरथसहस्राणि पुलोमानं महाबलं । अन्वयुः सूर्य्यवर्णानि भ्राजमानानि तेजसा ।
वृषध्वजेन महता तप्तकाञ्चनवर्च्चसा । शुशुभे रथमध्यस्थः पर्व्वतस्थ इवांशुमान् ।
सुचारुचामीकरपट्टनद्धां महागदां कालनिभां महात्मा । प्रगृह्य बभ्राज स सैन्यमध्ये कार्य्यायसीं केतुरिवोच्छ्रितोऽग्र्यः ।
हयग्रीवस्तु बलवान् हयग्रीवैर्म्महासुरैः । वृतः शतसहस्रेण रथानां रथसत्तमः । १२९८५
धराधरनिभाकारं सपताकीकमर्द्दनं । स्यन्दनं भीममास्थाय युद्धायाभिमुखः स्थितः ।
श्वेतशैलप्रतीकाशः श्वेतकुण्डलभूषणः । शुशुभे रथमध्यस्थः श्वेतशृङ्ग इवाचलः ।
महता सप्तशीर्षेण राजता नागकेतुना । वैदूर्य्यमणिचित्रेण प्रवालाङ्कुरशोभिना ।
अमितबलपराक्रमद्युतीनां वररथिनामनुजग्मुरूर्ज्जितानां । असुरगणशतानि गच्छमानं त्रिदशगणा इव वासवं प्रयान्तं ।
प्रह्लादस्तु महाप्राज्ञः सर्व्वशास्त्रविशारदः । सर्व्वमायाधरः श्रीमान् यष्टा क्रतुशतैः प्रभुः । १२९९०
समन्ततेजस्वी पावकार्च्चिःसमप्रभः । रथानीकेन महता दुर्द्दिनाभोदनादिना ।
शूरेणामितवीर्य्येण हेमकुण्डलधारिणा । वृतो दैत्यसहस्रेण देवैरिव पितामहः ।
सुवीर्य्योद्यगोवृद्धो मत्तवारणविक्रमः । सुरसैन्यस्य सर्व्वस्य प्रतिक्षोभ इव स्थितः ।
स धैर्य्येणोदधेस्तुल्यो वपुषाऽग्निरिव ज्वलन् । तेजसा भास्कराकारः क्षमया पृथिवीसमः ।
तालध्वजेन दीप्तेन रथेनातिविराजता । यान्तं तमनुयान्ति स्म दानवाः शतसंघशः । १२९९५
हिरण्मकवचाः सर्व्वे सर्व्वे रत्नविभूषिताः । दिव्याङ्गरागाभरणाः समरेष्वनिवर्त्तिनः ।
जाम्बूनदविचित्राङ्गा वैदूर्य्यरचिताङ्गदाः । दिव्यस्यन्दनमध्यस्थाः खस्था इव महाग्रहाः ।
आचारवांश्चैव जितेन्द्रियश्च धर्म्मे रतः सत्यपरोऽनसूयुः । स्थितोऽग्निरोषाम्बुदवायुकल्पो रूपो यथा सर्व्वहरः कृतान्तः ।
शम्बरस्तु महामायो दैत्यानां रथयूथपः । आरुरोह रथं दिव्यं सर्व्वयुद्धविशारदः ।
लोहिताक्षो महाबाहुः प्रतप्तोत्तमकुण्डलः । जीमूतघनसंकाशो दिव्यस्रगनुलेपनः । १३०००
विद्युद्द्योतनिकाशेन मुकुटेनार्कवर्च्चसा । मणिरत्नविचित्रेण वैदूर्य्यान्तरशोभिना ।
तपनीयेन महता कवचेन विराजता । सन्ध्याभ्रेणेव सञ्छन्नः श्रीमानर्त्तिशिलोच्चयः ।
त्रिंशच्छतसहस्राणि दैत्यानां चित्रयोधिनां । बलिनां कालकल्पानामन्वयुः शम्बरं तदा ।
युक्तं हयसहस्रेण शुक्लवर्णेन राजता । क्रौञ्चध्वजेन दीप्तेन रथेनाहवशोभिना ।
व्यामकवैदूर्य्यसुवर्णजालं नानाविहङ्गोज्ज्वलभक्तिचित्रं । विद्युत्प्रभं भीमरवं सुवेगं रथं समारुह्य रराज दैत्यः । १३००५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रद्भावे दैत्यसन्नहने एकचत्वारिंशदधिकद्विशततोऽध्यायः ॥२४१॥
॥ वैशम्पायन उवाच ॥ अनुह्लादस्तु तत्रैव दैत्यः परपुरञ्जयः । हिरण्यकशिपोः पुत्रः प्रययौ युद्धलालसः
चतुश्चक्रेण यानेन चित्रस्थप्रतिमेन च । युक्तेनाश्वैर्म्महावीर्य्यैः सिंहवक्त्रैरजिह्मगैः ।
भीमगम्भीरघोषेण नेमिघोषेण वल्गुना । चालयन् वसुधां सर्व्वां सशैलवनकाननां ।
विनर्द्दमाना दैत्यास्तं समन्तात् पर्य्यवारयन् । शतं शतसहस्राणां रथानां हेममालिनां ।

व्यराजन्तान्तरीक्षस्था नीला इव पयोधराः । सर्व्वे कालानलप्रख्या रुधिराक्षा महाबलाः ।
सन्दष्टौष्ठपुटा घोरा महाकाया महासुराः । वधाय सुरसैन्यस्य संनद्धास्ते महाबलाः । ११०४०
सर्व्वे कालानलप्रख्या वीराः समरदुर्ज्जयाः । सागरोदरगम्भीरा नीलवर्णा दुरासदाः ।
नेदुर्यान्तोऽसुरवरा वेलातीता इवार्णवाः ।
ते भूरिमायाः सुविस्तृतकायाः किरीटिनः काञ्चनभूषिताङ्गाः । सखड्गदाः स्वायुधदीप्तहस्ता नभः सपक्षा इव पर्व्वतेन्द्राः ।
संदिष्टो बलिपुत्रेण वृत्रभ्राता बलोऽसुरः । वधाय सुरसैन्यस्य संनह्यतेति वीर्य्यवान् ।
हेममाली महादंष्ट्रः खड्गी रुचिरकुण्डलः । रक्तमाल्याम्बरधरश्चक्री समरदुर्ज्जयः । ११०४५
सुमहाद्वृत्तनयनः सकिरीटो धनुर्द्धरः । प्रभिन्न इव मातङ्गः शार्दूलसमविक्रमः ।
महातालनिभं चापं महद्रुचिरसायकं । विस्फारयन्महावेगं वज्रनिष्पेषनिःस्वनं ।
रथेन खरयुक्तेन ध्वजेन भुजगेन च । शुशुभे स्यन्दनस्थः स सन्ध्यागत इवांशुमान् ।
रथैश्च बहुसाहस्रैर्हेमपट्टविभूषितैः । शूलमुद्गरसंकीर्णैर्बाणपूर्णैरिवाम्बुदैः ।
स दैत्येन्द्रोऽभिचक्राम युद्धकाल उपस्थिते । ११०५०
पवनसमगतिर्विशालवक्षा विकचितपङ्कजचारुनेत्रगौरः । प्रवररथगतो ययौ स तूर्णं विबुधगणैरभिलक्षितप्रभावः ।
सिंहिकातनयश्चैव राहुर्नाम महासुरः । विकटः पर्व्वताकारः शतशीर्षः शतोदरः ।
पीतमाल्याम्बरधरो जाम्बूनदविभूषितः । स्निग्धवैदूर्य्यसङ्काशः पद्मपत्रनिभेक्षणः ।
सर्व्वकाञ्चनसंयुक्तं मणिजालपरिष्कृतं । पताकाशतसम्बाधं युक्तं परमवाजिभिः ।
आरुरोह रथं तूर्णं दैत्यः परमवीर्य्यवान् । ननाद च महाघोरं कम्पयन् वसुधातलं । ११०५५
मयेन विहितो दिव्यस्तस्य केतुर्हिरण्मयः । मयूरपक्षसङ्काशं कवचश्चायसं महत् ।
भीमवेगरवैश्चान्यैरथैर्दिव्यैः सुभास्वरैः । नानाप्रहरणाकीर्णैः सेव्यमानो महाबलः ।
असुरगणपतिर्गजेन्द्रगामी गतिरभवत् सुगतिर्महासुराणां । अरिगणमभितो विभुः प्रयातो गिरिवरमस्तमिवांशुमान् सुदीप्तः ।
विप्रचित्तिश्च तत्रैव दनोर्वंशविवर्द्धनः । कश्यपस्यात्मजः श्रीमान् ब्रह्मणस्तेजसा समः ।
यष्टा क्रतुसहस्राणां वेदवित्तपसाऽन्वितः । स्वयम्भुवा दत्तवरो वरदश्च स्वयं प्रभुः । ११०६०
ईशित्वञ्च वशित्वञ्च महत्त्वञ्च महाद्युतेः । ऐश्वर्य्यगुणसम्पन्नो ब्रह्मेव स्वयमूर्ज्जितः ।
शतं पुत्राश्च पौत्राश्च समरश्लाघ्यमहाबलाः । सर्व्वे मायाधराः शूराः कृतास्त्रा रणदुर्ज्जयाः ।
सर्व्वे कनकगर्भाभा मेरुशृङ्गोच्छ्रयोच्छ्रिताः । सर्व्वे रजतसङ्काशाः कैलासशिखरोपमाः ।
मयेन निर्म्मितास्तेषां रथाः पररथारुजः । विचरन्तो व्यराजन्त शारदा इव तोयदाः ।
सर्व्वे हंसध्वजाः श्वेताः श्वेतदण्डसमुच्छ्रयाः । श्वेताम्बरधरा दैत्याः श्वेतमाल्यविभूषिताः । ११०६५
श्वेतातपत्राः सर्व्वे वै श्वेतकुण्डलमण्डिताः । मुक्ताहारावृतोरस्का भान्ति नागेश्वरा इव ।
महाचलनिभाकाराः शत्रूणां लोमहर्षणाः । रक्तचित्राम्बरधराश्चित्राभरणभूषिताः ।

त्रैलोक्यविजयं नाम रथमास्थाय वीर्य्यवान् । कैलासशिखराकारमष्टनल्वायतान्तरं ।
युक्तं वाजिसहस्रेण सितेन शशिवर्चसा । पताकाशतसञ्छन्नं नानायुधविकल्पितं ।
हंसेन्दुकुन्दप्रतिमं विशालं श्वेतातपत्रं दनुजेश्वरस्य । विभाति तस्योपरि धार्य्यमाणं श्वेताद्रिमूर्द्धीव गतः शशाङ्कः । ११०७०
केशी दानवमुख्यस्तु दीप्तताम्रविलोचनः । नीलमेघचयप्रख्यः कालः परुषविग्रहः ।
महापर्वतनिभाकारः शत्रूणां लोमहर्षणः । चित्रमाल्याम्बरधरो रक्ताभरणभूषितः ।
शताक्षः शतबाहुश्च हरिश्मश्रुर्महाबलः । शङ्कुकर्णो महानादो वपुषा रौद्रदर्शनः ।
संयुक्तैर्दिव्यमहिषैर्घण्टाकोटिकृतस्वनं । महावारिधराकारमास्थाय रथमुत्तमं ।
ध्वजेनोच्चैण महता नीलकेशरवर्चसा । नानारागविचित्राभिः पताकाभिर्विभूषितं । ११०७५
द्वापञ्चाशत्सहस्राणि रथानामुग्रतेजसां । ययुस्तस्यासुरेन्द्रस्य प्रयातस्य सुरान् प्रति ।
भान्ति भिन्नाञ्जननिभाः प्रयातस्य महात्मनः । दंष्ट्रार्द्धचन्द्रवदनाः सबलाका इवाम्बुदाः ।
तप्तस्य वैदूर्य्यसुवर्णचित्रं विद्युत्प्रभं भास्करसन्निकाशं । किरीटमाभात्यसुरेश्वरस्य दावाग्निदीप्तं शिखरं यथाऽद्रेः ।
वृषपर्व्वाऽसुरश्चैव श्रीमान् सुरनिसूदनः । आरुरोह रथं दीप्तं मेरुशृङ्गमिवांशुमान् ।
प्रतप्तजाम्बूनदचित्रकूवरं महारथं भारसहं महार्हं । स्वलङ्कृतं राजतनेमिमण्डलं गभस्तिनक्षत्रतडित्प्रकाशं । ११०८०
केयूरमुक्ताङ्गदनद्धबाहुः सहस्रतारेण च वर्म्मणा सः । सांग्रामिकैराभरणैश्च चित्रैर्मध्याह्नसूर्य्यप्रतिमो बभूव ।
महाबलो बद्धतलाङ्गुलित्रो बलोत्कटः किंशुकलोहिताक्षः । विकृष्य चामीकरचारुचित्रं चापं स्थितो वृत्तविशालनेत्रः ।
महासुरेन्द्रस्तु महासुरैर्वृतो बलिस्तदा स्यन्दनमारुरोह । वैदूर्य्यहेमोपचितं विशालं विद्युत्प्रभं षोडशनल्वमात्रं ।
युक्तं सहस्रेण दितेः सुतानां गजाननानां विकृताकृतीनां । चामीकरैरङ्गदभूषितानां विनर्दतां प्रावृडिवाम्बुदानां ।
महारथं देवरथप्रकाशं महन्महामायेन मयेन सृष्टं । ईहामृगाकीर्णितभक्तिचित्रं दिव्यं रथं वीररयानुयातं । ११०८५
सकिङ्किणीकां विमलां सुचित्रां हिरण्मयैः पद्मशतैरलङ्कृतां । अभ्याददे वैजयिकीं जयाय स्रजं बलिर्हेमविचित्रपुष्पां ।
आमुच्य मालां प्रभया विचित्रां बलिस्तदा भाति भुजैर्विशालैः । रराज तैः सर्व्वसमृद्धियुक्तैर्महार्चिषा सूर्य्य इवाम्बरस्थः ।
स्रजं तदा बध्यति चारुभुग्नां सर्व्वासुराणामिव हारभूतां । वैरोचनिः सर्व्वश्रियाऽभिजुष्टो विभ्राजतेऽसौ शरदीव चन्द्रः ।
मेरोस्तटैः काञ्चनरागरक्तैरादित्यसंसक्तमिवाभ्रजालं । प्रासाश्च पाशाश्च हिरण्यनद्धाश्चर्म्माणि खड्गाश्च परश्वधाश्च ।
धनूंषि चेन्द्रायुधसप्रभाणि दिव्या गदा वज्रमुखाश्च शक्तयः । दिव्याश्च शूला विशिखाश्च दीप्ता नाराचपूर्णा विविधाश्च
तूणाः । ११०९०
धृता रथे दैत्यवृषस्य तस्य चकाशिरे प्रज्वलिता यथोल्काः । तथ्यामरापीडधराः सुदंष्ट्राः सुवर्णमुक्तामणिहेमचित्राः ।
वीजन्ति बालव्यजनैर्विनीताः स्वलङ्कृताः स्यन्दनवेदिकास्थाः । अयःशिरा वाजिशिरा दुरापः शिविर्व्वितन्त्रा विकचः
शताक्षः ।
अयो निकुम्भः कुपथश्च दानवो ररक्षुरेते दश दानवाधिपं । पुरःसराश्चैव सहस्रशोऽसुराः पदातयो दानवराजरक्षिणः ।
शतघ्निचक्राशनिशक्तिपाणयः संजग्मुरेतेऽनिलतुल्यवेगिनः । घण्टाः शङ्खाः पणवानकाश्च गोमुखाश्चैव स्राडम्बरा झर्झरडिण्डिमाश्च ।
महारवा दुन्दुभयश्च नेदुः प्रयाणकाले दितिजेश्वरस्य । तस्योच्छ्रितः काञ्चनवेदिकाढ्यो हिरण्मयो दिव्यमहापताकः । ११०९५

महाध्वजो वै तपनीयचन्द्रो रराज वीरश्च यथा विवस्वान् । समुच्छ्रितं काञ्चनमातपत्रं चक्रं काञ्चनी तस्य च तत्र भाति ।
समन्ततस्तैनमुपाचरन्ति दैत्यर्षयः प्राञ्जलयो नयन्तः । पुरोहिताः शुक्रवचोऽभिसाविताश्चैव चान्ये सुतपोऽभिदृष्टाः ।
जप्येश्च मन्त्रैश्च महौषधीभिर्ब्राह्मणाः स्वस्त्ययनं प्रचक्रुः । स तत्र वस्त्राणि शुभानि गा वै पात्राणि रत्नानि तथैव निष्कान् ।
बलिर्द्विजेभ्यः प्रयतः प्रयच्छन् विराजतेऽतीव यथा धनेशः । सहस्रसूर्य्यो बहुकिङ्किणीकः पराक्रमाम्बूदवेगयुक्तः ।
सहस्रचन्द्रोऽद्भुततारकश्च रथो बलेरग्निरिवाऽभिभाति । तमास्थितो दानवसंघहर्ता महाबलः कार्मुकचक्रहस्तः ।　　१११००
उदर्त्यधिर्ष्यत्त्रिदशेन्द्रसेनामतीव रौद्रं स बिभर्त्ति रूपं । स वेगवान् वीररथोऽथ कुञ्जरः प्रयाति देवान् प्रति दैत्यसागरः ।
महानिलोद्धूततरङ्गसङ्कुलो यथाऽर्णवो लोकविनाशनाय । त्रैलोक्यविनाशकरैर्वपुर्भिः समावृतो भाति बलेरथश्च ।
महाबलान्युच्छ्रितकार्मुकाणि सपर्व्वतानीव वनानि राजन् ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने दैत्यसन्नहने द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

॥ वैशम्पायन उवाच ॥ श्रुतस्ते दैत्यसैन्यस्य विस्तरो जनमेजय । भूयस्त्रिदशसैन्यस्य शृणु विस्तरमादितः ।
सुराधिपस्तु भगवानाज्ञापयद्दिवौकसः । सरुद्रांस्तथादित्यान् विश्वान् साध्यांश्च वासवः ।　　१११०५
वसूनष्टौ स्वयं सर्व्वान् यक्षरक्षोमहोरगान् । विद्याधरगणान् सर्व्वान् गन्धर्व्वांश्च महारथान् ।
महार्णवांश्च शैलांश्च तथा ह्यप्सरसो जवः । यमवैश्रवणौ चोभौ वरुणञ्च जलाधिपं ।
ये च सिद्धा महात्मानः पितरश्च मनस्विनः । राजर्षयश्च शतशो योगसिद्धास्तथैव च ।
त्रिदशाञ्ज्ञापकः शक्र आज्ञापयति वीर्य्यवान् । भवन्तो दैत्यनाशाय संनह्यन्तामिति प्रभुः ।
शक्रस्य वचनं श्रुत्वा ततः सर्व्वे दिवौकसः । सन्नह्यन्त महात्मानः शक्रस्य समविक्रमाः ।　　११११०
नानाकवचिनः सर्व्वे विचित्रकवचध्वजाः । नानायुधोद्यतकरा मत्ता इव महागजाः ।
केचिदारुरुहुर्नागान् केचिदारुरुहुर्गजान् । रथानारुरुहुः केचित् केचिदारुरुहुर्हयान् ।
हरिर्हरिश्चैर्हरिभिर्नेत्रो हिरद्वैरावतध्वजं । रथं हरिहयैर्युक्तं स प्रायात् समरं प्रति ।
आदित्यवर्णं विपुलं सुनाभं स्वयम्भुवा निर्म्मितमीश्वरार्थं । जालैश्च जाम्बूनदभक्तिचित्रैरलङ्कृतं काञ्चनदामभिश्च ।
सकूवरोपस्करबन्धुरेशं विद्युत्प्रभाभिः कृतमाभितापं । कैलासशृङ्गोपमनिष्क्रयाणं सुचारुचारु प्रतिचक्रचक्रं ।　　११११५
ताराशतैः खचितं ज्वलद्भिर्द्दिव्याङ्गैरायार्चितसर्व्वदेशं । समुच्छ्रितश्लक्ष्णसमग्रयाखं जाज्वल्यमानं वपुषोत्तमेन ।
आस्थाय तं भासुरमाशुवेगं शचीपतिर्लोकपतिः सुरेशः । वज्रस्य भर्त्ता भुवनस्य गोप्ता ययौ महात्मा भगवान्महेन्द्रः ।
आमुच्य वर्म्माथ सहस्रतारं कृताशमादित्यसमप्रभावं । सूर्य्यप्रभञ्चामुमुचे किरीटं मालाञ्च जाम्बूनदवैजयन्तीं ।
त्वष्ट्रा कृतं भास्कररश्मिदीप्तं सुतीक्ष्णघोरामलनैकधारं । महासुराणां रुधिराशनुपं प्रगृह्य वज्रं शतपर्व्वभीमं ।
महाशनी द्वे च महाशनिप्रभे दीप्तामसोघाञ्च स शक्तिमुग्रां । चक्रं तथैन्द्रं सुमहच्च चापं प्रगृह्य शक्रः प्रययौ रणाय ।　　१११२०
सहस्रदृग्भूतपतिः सनातनः सनातनानामपि यः सनातनः । स वज्रहस्त देवाधिपतिर्महात्मा वेधाश्रमादाय च चर्म्म चित्रं ।
क्षीरोदधिक्षोभसमुत्थितानि पुराऽमृतादुत्तमभूषणानि । देवासुराणां समरार्जितानि सोमार्कसवर्णतडित्प्रभाणि ।
दत्तान्यदित्या मणिकुण्डलानि युद्धं प्रयातस्य सुरेश्वरस्य । तैर्भूषितो याति सरत्नवज्रवह्नौतस्थन् वै विदिशो दिशश्च ।
हरिः प्रभुर्नैकसहस्रचित्रो विभाति युद्धाभिमुखः सुरेन्द्रः । यथा स्थितं शारदमभ्रवृन्दं नभस्थितं चन्द्रसहस्रचित्रं ।

स्तुवन्ति यान्तं विपुलैर्व्वचोभिर्व्वथा ग्रिवा चोर्ज्जितसत्त्ववीर्य्यं। अग्निर्व्वसिष्ठो जमदग्निरौर्व्वो बृहस्पतिर्नारदपर्व्वतौ च ।११९२८

समन्वयुर्देवगणा महेन्द्रं प्रयान्तमादित्यसमप्रभावं। विश्वे च देवा मरुतश्च सर्व्वे साध्यास्तथादित्यगणाश्च सर्व्वे।

ते देवराजस्य पुरन्दरस्य हयाश्च ते मातलिसंगृहीताः। प्रयान्ति देवेश्वरमुद्वहन्तो नभस्तलं पक्षिरिवाभिपन्नाः।

ब्रह्मर्षयश्चैव सुरर्षयश्च राजर्षयश्चाक्षयपुण्यलोकाः। सर्व्वेऽनुजग्मुः सहसा ज्वलन्तं तेजोऽन्वितं शक्रमनिन्द्यबाहुं।

प्रगृह्य शूलानि परश्वधांश्च दीप्तानि चापानि तथाऽश्मनीश्च। वर्म्माणि चामुच्य हिरण्मयानि सयान्ति सूर्य्यांशुसमप्रभाणि।

तथा कुबेरोऽश्वसहस्रयुक्तं श्रेष्ठं रथं सर्व्वसहं महार्हं। दिव्यं समारुह्य रणाय यातो धनेश्वरो दीप्तगदाग्रहस्तः। ११९३०

निशाचराः पावकधूम्रकाया रक्षोवृता रुद्रसखस्य तस्य। विशालनानायुधदीप्तहस्ता यान्त्यग्रतो वैश्रवणस्य राज्ञः।

ते लोहिताक्षाः परिपार्श्वे देवं व्रजन्ति भिन्नाञ्जनचूर्णवर्णाः। यक्षोत्तमा यक्षपतिं धनेशं रक्षन्ति वै प्रासगदासिहस्ताः।

पुण्यः प्रभुः प्राणपतिर्यतात्मा वैवस्वतो धर्म्मभृतां वरिष्ठः। तडिद्गुणाभं शतवाजियुक्तं रथं समारोहत सूर्य्यकल्पं।

तं लोकपालं पितरोऽनुजग्मुर्निर्मुक्तपापा ज्वलितास्तपोभिः। सर्व्वे च भूता भुवनप्रधाना नानायुधव्यग्रकराः सुभीमाः।

दण्डं महास्त्रं प्रतिगृह्य देवो लोकान्तकुद्धं विग्रहनिश्चितात्य। हिरण्मयानां कमलोत्पलानां मालां मनोज्ञामवसज्य कण्ठे।११९३५

स्थितोऽस्त्रिमेदामिवलोहिताक्षं सर्व्वासुराणां निधनं विकाङ्क्षन्। तेजोमयं मुद्गरमुग्ररूपं विकर्षमाणोऽरुणधूम्रनेत्रः।

समन्वितो व्याधिगणैरनेकैर्ययौ हरिश्मश्रुरुदारसत्त्वः। महासुराणां निधनाय बुद्धिं चक्रे तदा व्याधिपतिः कृतान्तः।

ततस्त्रिशीर्षैर्भुजगैर्महद्भिर्युक्तं रथं हेमचितं महात्मा। आस्थाय कुन्देन्दुनिभं जलेशो ययौ रणायासुरदर्पहन्ता।

वैदूर्य्यमुक्तामणिभूषिताङ्गस्तेजोमयः पाशगृहीतहस्तः। महासुराणां निधनाय देवः प्रयाति कृष्णाङ्गदनद्धबाहुः।

अन्वीयमानो जलदेवताभिर्निषेव्यमाणो जलजैश्च सत्त्वैः। संस्तूयमानश्च महर्षिवृन्दैः संपूज्यमानश्च महाभुजङ्गैः। ११९४०

कैलासशृङ्गप्रतिमोऽप्रमेयः समुद्रनाथोऽमृतपो महात्मा। महोरगैः स्वैस्तनयैश्च गुप्तो ययौ रथेनार्कसमप्रभेण।

युद्धाय तं यान्तमदीनसत्त्वं नभस्तले चन्द्रमिवातिकान्तं। पश्यन्ति भूतानि महानुभावं संहृष्टरोमाणि कृताञ्जलीनि।

धाताऽर्य्यमांऽशोऽथ भगो विवस्वान् पर्ज्जन्यमित्रौ च शशी च देवः। त्वष्टा तथैवोर्ज्जितविश्वकर्म्मा पूषा च साक्षादिव
देवराजः।

सोरश्छदैः सध्वजकिङ्किणीकैर्वैदूर्य्यनिष्कार्चितहेमकण्ठैः। हयोत्तमैः शक्रहयप्रकाशैर्युक्तान्यथानारुरुहुः सुरास्ते।

दिवाकराकारनिभानि केचिद्धुताशनार्च्चिःप्रतिमानि केचित्। निशाकरांशुप्रतिमानि केचित्तडिद्गुणोद्योतनिभानि
केचित्। ११९४५

नीलांशुमेघप्रतिमानि केचित् कार्त्तस्वराकारनिभानि केचित्। वर्म्माणि दिव्यानि महाप्रभाणि त्वष्ट्रा कृतान्युत्तमभानुमन्ति।

आमुच्य मालाश्च सुवर्णपद्माः प्रयान्ति तोयानिलतुल्यवेगाः। दावश्विनौ चापि महानुभावौ रूपोत्तमौ धर्म्मभृतां वरिष्ठौ।

रथं समारुह्य सुवर्णचित्रं रणं गतौ काञ्चनगौरवर्णौ। मनोः सुता वै वसवश्च सर्व्वे बलोत्कटा दैत्यवधाय देवाः।

रथांश्च नागांश्च महाप्रमाणानास्थाय जग्मुः सुधितासिहस्ताः। रुद्राश्च सर्व्वेऽरुणधूम्रकायाः श्वेतैर्वृषैर्गोपतिभिर्महद्भिः।

महौजसः सत्त्वगुणोपपन्ना दीप्तात्मतेजोभिरभिज्वलन्तः। नानायुधव्यग्रकराः सुरास्ते लोकान् समस्तानिव निर्द्दहन्तः। ११९५०

ययुः ससैन्यास्तपनीयकण्ठाः सविद्युतस्तोयधरा यथैव। विश्वे च देवास्तपसा ज्वलन्तो वीर्य्योत्तमाः सूर्य्यमरीचिवर्णाः।

ययुः ससैन्या युधि दुर्न्निवार्य्या बलोत्कटाः पुष्करमालिनश्च। रथैः सुयुक्तैस्तपनीयवर्णैर्वैदूर्य्यमुक्तामणिदामचित्रैः।

नानायुधाकारसमाकुलास्ते पारिप्लवैश्चैव सितातपत्रैः । तेजोमयैः काञ्चनजालचित्रैः सुनिर्म्मलैः पावकसन्निभैश्च ।
उरश्छदैः सध्वजकिङ्किणीकैर्हयैश्च वायोः समवेगवद्भिः । दिशागजेन्द्रैश्च महाबलैश्च कैलासशृङ्गप्रतिमैर्महद्भिः ।
प्रजग्मुरुग्रायुधदीप्तहस्तास्तुर्युगान्ते ज्वलिता इवोल्काः । साध्याश्च देवाः सुमहाप्रभावाः स्वाधीनपक्षाः प्रतिदीप्तवक्त्राः ।।११९८५
ययुः सजाम्बूनदभूषिताङ्गा गङ्गौघमानैर्गगनैश्चलौघैः । विद्योतयन्तो विदिशो दिशश्च महाबलास्ते जयतां वरिष्ठाः ।
वरिष्ठपृष्ठाष्टभुजाः सुदृप्ता वैश्वानरार्कप्रतिमप्रभावाः । ते ब्रह्मविद्भिश्च नमस्यमानाः संपूज्यमानाश्च सुरैः समग्रैः ।
गन्धर्व्वसंघैरनुगम्यमाना वधाय तेषाममुराधिपानां । वैदूर्यरत्नस्फटिकाग्रचित्रैर्द्धजैः सुवर्णैश्च परिष्कृतानां ।
रूपं समुत्कटभूषणानां दैत्येन्द्रनाशाय विभूषितानां । आत्मप्रभाभिश्च बलोत्कटाभिर्व्वर्णप्रभाभिश्च तमोनुदाभिः ।
ध्वजोत्तमाभिः स्वशरीरभाभिर्व्वहाप्रभाभिश्च महोज्ज्वलाभिः । विभान्ति ते देववराः ससाध्याः प्रभातसङ्कस्तनर्दितसंघ
नादाः । ११९९०
महारथास्तु दिवौकसस्ते महाबलाः शत्रुबलं प्रयान्ति । महास्त्रहस्ता ययुरुग्ररूपा महासुराणां निधनाय देवाः ।
तथैव सर्व्वे मरुतोऽतिवीर्य्या बलोत्कटास्ते समरं प्रतीताः । ययुर्म्महामेघसमानवर्णा वज्रायुधास्तोयदनादनादाः ।
महेन्द्रकेतुप्रतिमा महाबला गदां प्रगृह्यासुरसूदनां युधि । रणोत्कटा लोहितचन्दनाक्ताः सुगन्धिमाल्याम्बरभूषिताङ्गाः ।
ते युद्धशौण्डाः सुभुजाः सुदीप्ता वीर्य्योत्कटाः क्रोधविलोहिताक्षाः । ययुः सजाम्बूनदपद्ममाला यथेष्टनानायुधकामरूपाः ।
खड्गप्रभाश्यामललितांसपीठाः पुरन्दरं वै परिवार्य्य देवाः । वैदूर्यचामीकरचारुचित्राण्याबध्य गात्रेषु महाप्रभाणि । ११९९५
वर्म्माणि दैत्यास्त्रनिवारणानि प्रयान्ति युद्धाय सपत्नसाहाः । तैरुच्छ्रितैः काञ्चनवेदिकाग्रैर्व्वरध्वजैर्भास्कररश्मिवर्णैः ।
यथा सुराणां प्रतनोग्रतेजाः समुन्नदन्तो युधि सिंहनादान् । इत्येतदुग्रं त्रिदशेश्वरस्य सैन्यं तदासीत् सुमहाप्रभावं ।
युद्धं प्रयातस्य जयावहस्य वधाय तेषामसुराधिपानां ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवसज्जने त्रिचत्वारिंशदधिकद्विशततोऽध्यायः ॥ २४३ ॥
॥ वैशम्पायन उवाच ॥ ततः प्रवृत्तोऽसुरदेवविपक्षसदाऽद्भुतो वै त्रिदशासुराकुलः । वेलामतिक्रम्य युगान्तकाले महार्णवानामिव सङ्गमो महान् ।
नानायुधोद्योतविदीपिताङ्गा महाबला व्यायतकार्म्मुकास्ते । मदोत्कटा वारणहस्तहस्ताः सुदुर्ज्जयास्तोयदनादनादाः । १२०००
विस्फारयन्तः सहसा धनूंषि चक्राणि चादित्यसमप्रभाणि । समुत्क्षिपन्तो ह्यशनीश्च घोराः खड्गांश्च ते वज्रमुखांश्च शक्तीः ।
महागदाः काञ्चनपट्टनद्धास्तथायसान् कार्म्मुकमुद्गरांश्च । शूलानि दृप्तांश्च विसृज्य दीप्तान्नदन्ति शूराः शतशो रणस्थाः ।
एतस्मिन्नन्तरे तेषामन्योन्यमभिनिघ्नतां । द्वन्द्वयुद्धान्यवर्त्तन्त देवानां दानवैः सह ।
मरुतां पञ्चमो यस्तु वायुं सोऽयुध्यतासुरं । महाबलः सुरवरः सावित्र इति यं विदुः ।
अनायुषायाः पुत्रस्तु बलो नाम महासुरः । सोऽयुध्यत रणेऽत्युग्रो ध्रुवेण वसुना सह । १२००५
पुलोमा तु महादैत्यो बलिना वायुना सह । सवैन्यः पर्व्वताकारो रणेऽयुध्यत दंशितः ।
नमुचिश्चासुरश्रेष्ठो धरेण समयुध्यत । सार्द्धं सर्व्वेण सैन्येन ह्यादितास्त्र इवान्तकः ।
विश्वकर्म्मा सुरश्रेष्ठो मयेन समयुध्यत । प्रवरौ विश्वकर्म्माणौ ख्यातौ देवासुरेश्वरौ ।
हयग्रीवश्च दितिजः सह पूष्णा त्वयुध्यत । शूरेणामितवीर्य्येण भास्कराकारतेजसा ।

शम्बरस्तु महावीर्य्यो महामायो महासुरः । भगेनायुध्यत तदा यदितो युद्धदुर्मदः । ११९८०
शरभः शलभश्चैव दैत्यानां चन्द्रभास्करौ । प्रयुद्धौ सह सोमेन शिशिरांशेण धीमता ।
विरोचनस्तु बलवान् बलेर्ब्बलवतः पिता । विष्णुक्रमेण साध्येन तदाऽयुध्यत दानवः ।
कुजम्भस्तु महातेजा हिरण्यकशिपोः सुतः । अंशेनायुध्यत सह प्राणप्रवरेण वै ।
अश्विलोमा तु बलिना मारुतेन महाहवे । तदाऽयुध्यत दीप्ताक्षो विकृतः पर्व्वतायुधः ।
अनायुषायाः पुत्रस्तु वृत्रो नाम महासुरः । अश्विभ्यां देववैद्याभ्यां महायुध्यत संयुगे । ११९८५
एकचक्रस्तु दितिजश्चक्रहस्तो दुरासदः । महायुध्यत देवेन साध्येन दितिनाशिना ।
बलस्तु मधुपिङ्गाक्षो वृत्रभ्राता महासुरः । मृगव्याधेन रुद्रेण महायुध्यत वीर्य्यवान् ।
राहुस्तु विकृताकारः शतशीर्षो महोदरः । अजैकपादेन रणे महायुध्यत वीर्य्यवान् ।
केशी तु दानवश्रेष्ठः प्रावृट्कालाम्बुदप्रभः । धनेश्वरेण महता महायुध्यत संयुगे ।
बलिना वृषपर्व्वा तु सह निष्कम्भुना रणे । विश्वदेवेन देवेन महायुध्यत वीर्य्यवान् । ११९९०
प्रह्लादस्तु महावीर्य्यो वीरैः कालनयैर्वृतः । युयुधे सह कालेन रणे काल इव स्थितः ।
अनुह्रादः कुबेरेण धनदेन महाबलः । गदाहस्तेन युयुधे शोभयन् देववाहिनीं ।
विप्रचित्तिस्तु दैत्येन्द्रो वरुणेन महात्मना । प्रवृत्तो वै रणं कर्त्तुं दैत्यानां नन्दिवर्द्धनः ।
बलिस्तु सह शक्रेण सुरेशेन महात्मना । युयुधे देवराजेन बलिना बलवाधने ।
एवं देवाश्च दैत्याश्च जघ्नुरन्योन्यमाहवे । विनदन्तो महानादान् प्राणाविश्वरणकाङ्क्षिभिः । ११९९५
अदृश्यन्त महोत्पाता ये प्रोक्ता जगतः क्षये । महतः सप्त ते क्षुब्धा व्यशीर्य्यन्त च पर्व्वताः ।
सप्त चैवोत्थिताः सूर्य्याः शोषयन्तो महार्णवान् । वसुधाऽभिचलत धरा मथ्यमानेव वायुना ।
व्युत्थिताश्च महामेघाः शक्रचापाङ्कितोदराः । प्रचेलुः सर्व्वभूतानि सर्व्वाः सतिमिरा दिशः ।
देवानामनयः क्रूरो दृश्यते कालनिर्म्मितः । घोरोत्पातः समुद्भूतो युगान्तसमये यथा ।
न चान्तरीक्षं न दिशो न भूमिर्न भास्करोऽदृश्यत रेणुजालैः । ववुश्च वातास्तुमुलाः सधूमा दिशश्च सर्व्वास्तिमिरोप
गूढाः । १२०००
एते चान्ये च बहवो दृश्यन्ते दैवनिर्म्मिताः । भूमौ तथाऽन्तरीक्षे च घोरोत्पाताः समन्ततः ।
तद्युद्धं देवदैत्यानां भीमानां भीमदर्शनं । अपश्यत गुहश्रेष्ठा सर्व्वैरेव सुरैः सह ।
वेदैश्चतुर्भिः साङ्गैश्च विद्याभिश्च सनातनः । पद्मयोनिर्वृतः श्रीमान् ऋषिभिश्च परमर्षिभिः ।
नानामणिरत्नमयप्रवरविचित्रमारुह्य यानं ददृशे स्वयम्भूः । शुभाक्षरं भूतवरप्रयुक्तं महीधनागं वपुषा परेण ।
प्रतप्तजाम्बूनददामचित्रमानन्दभेरीस्तनितप्रणादं । नवचन्द्रांशुभिरंशुमन्तं वैडूर्य्यपीनार्कविभूषिताङ्गं । १२००५
तमात्मजो वै पुलहः पुलस्त्यस्तथा मरीचिर्भृगुरङ्गिराश्च । वाक्यैरमभिः सन्तमभिष्टुवन्तः सेवन्ति देवं वरदं विमाने ।
ते पावका देवगुरुं दिवीशं साङ्गाश्च वेदा मखदेवताश्च । सेवन्ति सेव्यं भुवनेश्वरेशं भूतानि चान्यानि महानुभावं ।
एते च भूयश्च महर्षिमुख्या वैखानसाः पावकयोजकाश्च । सर्व्वे चतुर्वेदपुरोधसश्च सुखीसुखाः सर्व्वसुरासुराणां ।

योगेश्वराः षट् च दिवाकराभा वाय्वग्निभूमिजलसर्व्वधीराः । अन्तर्हिता वै ददृशुर्न भक्ता नारायणश्चैव नरश्च देवः ।
वक्त्रैश्चतुर्भिर्वेदधरैश्चतुर्भिः संपूर्णचन्द्रप्रतिमैः सुकान्तैः । सर्व्वा दिशो निस्तिमिराश्चकार नवोदितोऽसौ शरदीव चन्द्रः । ११११०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥
॥ वैशम्पायन उवाच ॥ उभयोः सेनयो राजन् भूयो युद्धमवर्त्तत । यथा यज्ञो महानादेन त्रैलोक्यमिदमव्ययं ।
गोमुखाडम्बराणाञ्च भेरीणां मुरजैः सह । शङ्खैर्डिण्डिमनादैश्च बभूवुश्च महात्मनाः ।
प्रवृत्तो युद्धयज्ञस्तु तुमुलो लोमहर्षणः । रणभूमौ महानादः स्वर्गीयः क्रूरदर्शनः ।
युद्धयज्ञस्य नेताऽभूत् प्रह्लादो नाम दानवः । विरोचनस्तथाऽध्वर्य्युर्युद्धयज्ञप्रवर्त्तकः ।
होता चैवाच नमुचिर्ब्रह्मा चौपचकल्पकः । अन्याश्च दैत्याः प्रथिता यज्ञकर्म्मणि तत्र वै । ११११५
अनुयातास्तु पितरमधिका वा पराक्रमैः । यथा वै तत्र वाणास्तु सम्यगेवावतिष्ठते ।
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं सुदुर्ज्जयं । मन्त्रास्तत्राभ्यवर्त्तन्त साध्वनुष्ठानवर्जिताः ।
उद्गाता च मयः श्रीमान् स्थितः प्रभुभयङ्करः । विनदन् दितिजश्रेष्ठो देवानीकान्यशारयत् ।
बलिस्तु बलवान् राजा वैश्वानरसमद्युतिः । जयैश्चाभिश्च संयुक्तो यज्ञमानमकरोत् प्रभुः ।
रणाग्निर्ज्वलितो घोरो वैरेन्धनसमीरितः । हूयते समुरैश्चात्र रथवेद्यां सुसंहतः । १११२०
शङ्खशब्दः सुविपुलो भेरीणाञ्च महास्वनः । उद्गीथं तुमुलश्चैव सामशब्दं प्रयुज्यते ।
बलश्च बलकश्चैव पुलोमा च महासुरः । प्रशस्तं चमसं कृत्वा मन्त्रं सम्यक् प्रचक्रिरे ।
कल्माषदण्डा विमला विपुला रथपङ्क्तयः । यूपाश्च समकल्पन्त युद्धयज्ञे महाफले ।
कर्णिनालीकनाराचवत्सदन्तोपबृंहकाः । तोमराः सोमकलशा विविधानि धनूंषि च ।
अस्थीन्यन्नकपालानि पुरोडाशाः शिरांसि च । आज्यञ्च रुधिरं रौद्रं तस्मिन् युद्धेऽभिहूयते । १११२५
दर्भाः परिधयस्तत्र प्रासाश्च विपुला गदाः । हयग्रीवोऽविलोमा च राहुः केशी च दानवः ।
विरोचनश्च जम्भश्च कुजम्भश्च महाबलः । सदस्यास्तत्र तु मखे विप्रचित्तिश्च वीर्य्यवान् ।
दृवत्रस्तु ध्रुवस्तत्र रथाश्चक्रमुखाः शुभाः । धनुष्कोट्यो धनुर्ज्याश्च स्रुचस्तत्र महामखे ।
प्रतिप्रास्थानिकं कर्म्म वृषपर्व्वाऽकरोत्तदा । बलिस्तु दीक्षितस्तत्र तस्य पत्नी महाचमूः ।
शम्बरस्तत्र शामित्रमकरोद्दितिनन्दनः । अतिरात्रे महाबाहुर्वितते यज्ञकर्म्मणि । १११३०
दक्षिणा तस्य यज्ञस्य कालनेमिः प्रतापवान् । वैतानं कर्म्मणि ततं यः ख्यातो हव्यवाडिव ।
छिद्यमानास्तु सैन्यस्य शरीरैर्गतजीवितैः । तस्मिन् यज्ञे तु चयनं वर्द्धते दैत्यनिर्म्मितं ।
देवानां रुधिरं संख्ये पशुवपाः छितैः सुताः । गर्ज्जमानाः प्रमुदिताः सोमपानं रणाध्वरे ।
यदा बलिर्म्महादैत्यो विजेता समरे सुरान् । तदा त्ववभृथो यज्ञे भविता वै न संशयः ।
महासुरेन्द्रपतयो वध्यन्तो भूरिदक्षिणाः । वेदवन्तो बलवन्तः शूराः सर्व्वे तनुत्यजः । १११३५
त्रैलोक्यहरणे यत्ता युद्धयज्ञाय दीक्षिताः । बद्धकृष्णाजिनाः सर्व्वे व्रतिनो मुञ्जधारिणः ।
एकनिश्चयकार्य्याश्च त्रैलोक्यजयकांक्षिणः । सुरदानवसैन्यानां शब्दः समभवन्महान् ।

नानायुधविचित्राणां नदितानां प्रधावतां । क्ष्वेडितोत्क्रुष्टनिनदैर्गजबृंहितनिस्वनैः ।
शङ्खदुन्दुभिनिर्घोषैर्हयहेषितनिस्वनैः । रथनेमिस्वनैर्घोरैस्तुमुलः सर्वतोऽभवत् ।
सुराणां हेषमाणानां दानवानाञ्च गर्जतां । क्ष्वेडितोत्कृष्टसंनादैः पाणिपादरवैस्तथा । ११२४०
दानवानां परेषाञ्च शङ्खवन्ति महान्ति च । समरे भीमकर्माणि सैन्यानि प्रचकाशिरे ।
ततो नागा रथाश्चैव जाम्बूनदविभूषिताः । भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ।
चर्मष्टिशक्तिगदा दीप्ताः शूलखड्गपरश्वधाः । चारु बभ्राजिरे तत्र क्षेप्यमाणेषु सर्वशः ।
रथा बहुविधाकाराः शतशोऽथ सहस्रशः । हेमशृङ्गशिखरा ज्वलन्त इव पर्वताः ।
दानवानां सुराणाञ्च समालोक्य तु सैनिकाः । काञ्चनैः कवचैः सर्वे ज्वलितार्कसमप्रभैः । ११२४५
समन्ततः समदृश्यन्त ज्योतींषि गगने यथा । उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।
ऋषभाक्षा सुरगणाश्चमूमुखगता बभुः । नानावर्णाः पताकाश्च ध्वजमालाश्च संयुगे ।
युध्यतां रणशौण्डानामीरयामास मारुतः । ध्वजालङ्कारवस्त्राणि चर्माणि कवचानि च ।
रश्मिभिर्भासयामास रश्मिवर्णानि रश्मिवान् । सर्वेषाममेयानां बलानां पादचारिणां ।
रजः सञ्छादयामास पर्जन्यपाण्डुरं दिशः । दीप्ताम्बरधराः सर्वे दीप्ता युद्धाय ये स्थिताः । ११२५०
प्रतितस्थिरेऽन्योन्यमनीकं प्रत्यनीकतः । गिरिकूटोच्छ्रयाः सर्वे तदा ते देवदानवाः ।
अन्योन्यमभिनिघ्नन्तो रणश्लाघिजयैषिणः । मुद्गरैर्मुसलैः शूलैरयस्पोतैरुलूखलैः ।
वज्रैरशनिभिश्चैव खड्गतोमरादिभिस्तथा । उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ।
बाणैः सुरुचिरैस्तीक्ष्णैः पञ्चबाणैर्दुरासदैः । तथाप्रवर्त्तते तेषां विमर्देऽद्भुतविक्रमे ।
सावित्रस्य वधं प्रेप्सुर्बाणो जग्राह कार्मुकं । शरजालेन दिव्येन छादयानः सुरोत्तमं । ११२५५
सम्वेष्टत इवार्चिष्मान् संप्रजज्वाल तेजसा । सागराभां महासेनां देवानां दैत्यपुङ्गवः ।
अशोषयत बाणौघैरर्कोऽंशुभिरिवार्णवं । मारुतः स महावेगः सावित्रः शक्तिमुत्तमां ।
चिक्षेप बलिपुत्राय शक्रोऽशनिमिवाहवे । आपतन्ती च सा शक्तिर्महोल्का ज्वलिता यथा ।
द्विधा छिन्ना क्षुरप्रेण बाणेनाद्भुतकर्मणा । हतायामथ शक्त्यान्तु सावित्रो देवसत्तमः ।
विश्वकर्मकृतं दिव्यं सुतीक्ष्णं दानवार्दनं । सुपीतधारं विपुलं विमलं चन्द्रवर्चसं । ११२६०
अष्टचन्द्रमितं खड्गमाशीविषविषोपमं । तं गृहीत्वा रणमुखे प्रज्वलन्तं महाप्रभं ।
बाणाभ्याशे महातेजाः खड्गपाणिरवस्थितः । तत्र स्थितं समालक्ष्य सावित्रं बलिनन्दनः ।
लोहिताक्षो महाकायश्चिक्षेप च ननाद च । ततोऽर्ककिरणाकारानग्निप्रतिमाञ्छरान् ।
सन्दधे चापमुद्बाणोऽथाशीविषसमान् बली । स्वर्णपुङ्खान् प्रदीप्ताग्रानुग्रवेगानजिह्मगान् ।
आकर्णपूर्णांश्चिक्षेप शरानग्र्यान् समन्ततः । दृढचापप्रमुक्तास्ते शरा वैश्वानरप्रभाः । ११२६५
सावित्रं छादयामासुः कैलासमिव तोयदाः । स च्छाद्यमानः शरौघैर्मेघेनेव बलिसूनुना ।
पराङ्मुखः सुरवरः प्रयातः सरथध्वजः । तं पराजित्य सावित्रं बाणः परमहर्षितः ।

प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति । बलश्चाप्यसुरश्रेष्ठः प्रगृह्य महतीं गदां ।
ध्रुवाय वसवे मूर्द्ध्नि रौद्रीं चिक्षेप दानवः । तस्य निर्भर्त्सितस्यांशो हेमचित्रस्य वर्म वै ।
गदावेगेन भीमेन ध्रुवस्य समरे तदा । शेषाश्च वसवः सर्व्वे दिव्यास्त्रैर्घोरदर्शनाः । १२२१०
प्राच्छादयन्त दैत्यमादित्यमिव तोयदाः । ततः सोऽमर्षितो बाणैर्बलो दानवसत्तमः ।
अवातरद्रथात्तस्माद्गदामुद्यम्य वेगवान् । शिरःसु पातयामास शत्रूणां तां गदां तदा ।
दिशः प्राद्रावयत्सर्वाश्छिन्दन्नाशु सा महागदा । इन्द्राशनिरिवेन्द्रेण प्रहृष्टा सुमहात्मना ।
तस्याः सविद्युद्घोषायास्तेन शब्देन वेजिताः । व्यद्रवन्त परित्यक्ता रथेभ्यो रथिनस्तदा ।
तद्दृष्ट्वा रथानीकं सूर्याभं मेघनिस्वनं । देवानां शरधाराभिरभ्यवर्षत्समन्ततः । १२२१५
शरैर्विविधैर्भिन्नैर्भिन्नदन्तैः शिलीमुखैः । रुक्मपुङ्खैर्महातेजाः प्रत्यविध्यन्महासुरं ।
बलकस्तु महाबाहुर्व्यादितास्य इवान्तकः । तडिद्व्याकसदृशो वैश्वानरसमप्रभः ।
पिबन्निव शरौघांस्तान् देवचापसमुत्थितान् । अभ्यद्रवत दैत्येन्द्रो महार्णव इवापरः ।
अवस्फूर्ज्जन् दिशः सर्व्वाः स्वेन वीर्य्येण दानवः । आवर्जयंस्तान् दैत्यः सिन्धुवेगो नगानिव ।
अभ्युद्रवन्ससा देवान् वायुर्वृक्षानिवौजसा । समरस्थस्तु बाणानां वसुभ्यां समसज्जत । १२२२०
आपश्चैवानिलश्चैव ववर्षतुररिन्दमौ । शरवर्षाणि दीप्तानि मेघाविव परन्तपौ ।
दीप्तांस्तान् विशिखान्दीप्तांश्चिच्छेद स नभस्तले । अभ्युत्पपात तत् कर्म्म ध्रुवस्तमभिदुद्रुवे ।
तौ समं शरवर्षाभ्यामन्योन्यमभिजघ्नतुः । उत्तमाभिजनौ शूरौ देवदैत्यौ यशस्करौ ।
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ । रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्ततां ।
निर्भिन्दन्तौ च गात्राणि विक्षिपन्तौ च सायकैः । लाघयन्तौ च बलिनौ प्रतुदन्तौ रणे स्थितौ । १२२२५
चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः । मुहुराजघ्नतुः क्रुद्धावन्योन्यमभिमानिनौ ।
असिभ्यां चर्म्मणी दिव्ये विपुले च शरासने । निक्षिप्याऽचलसङ्काशौ बाहुयुद्धं प्रचक्रतुः ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ । बाहुभिः समसज्जेतामायसैः परिघैरिव ।
तयोरासीद्भुजाघातनिघर्षः प्रघट्टनया । अतीव भीमः संह्रादो वज्रपर्व्वतयोरिव ।
द्विपाविव विषाणाग्रैः शृङ्गैरिव महावृषौ । अन्योन्यमभिसंरब्धौ मुहूर्त्तं पर्य्यकर्षतां । १२२३०
ततः पराजितो देवो बलकेन तदा ध्रुवः । रथं त्यक्त्वा भयात्तस्य प्रनष्टः प्राङ्मुखो वसुः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४५॥
॥ वैशम्पायन उवाच ॥ पुनरेव तु तत्रासीत्तस्य युद्धं सुदारुणं । कुहस्य नमुचेश्चैव धरस्य च महात्मनः ।
संरब्धौ च महाबाहू सर्वेष्वास्त्रावरिन्दमौ । परस्परमुदीक्षेतां दहन्ताविव लोचनैः ।
विस्फार्य च महच्चापं हेमपृष्ठं दुरासदं । संरम्भात् वसुश्रेष्ठस्तत्र प्रागामयुध्यत ।
स चाप्यक्रमदैत्यस्य धरो दैत्यरथं प्रति । भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत् प्रभां । १२२३५
ततः प्रहस्य नमुचिर्धरस्य तु शिलाशितान् । शरजालान्यकान्दीप्तान् भीमवेगान्सुरासदान् ।

महातेजा महाबाहुर्महावेगो महारथः । विव्याधातिरथो दैत्यो नवभिर्नतपर्वभिः शरैः ।
स तोत्त्रैरिव मातङ्गो वार्य्यमाणः पतत्रिभिः । अभ्यधावत संक्रुद्धो नमुचिं वसुसत्तमः ।
तमापतन्तं वेगेन नमुचीरमथाहवे । दैत्यः प्रत्यग्रहीद्देवं सम्यो मत्तमिव द्विपं ।
ततः प्राध्मापयच्छङ्खं भेरीघननिनादितं । विक्षोभ्य तद्बलं सर्वाद्भूतार्णवसमप्रभे । १११९०
अश्वानृष्यसवर्णांश्च संयतैः स वाजिभिः । निग्रहन् समरे दैत्यो वसुं प्राच्छादयच्छरैः ।
समाश्लिष्टौ तथाऽन्योन्यं वसुदानवयोरथौ । दृष्ट्वा प्राकम्पत मुञ्चद्भिर्दानवानां महद्बलं ।
क्रोधसंरम्भरक्ताक्षौ प्रेक्षमाणौ परस्परं । गर्ज्जन्ताविव शार्दूलौ प्रभिन्नाविव वारणौ ।
यमराष्ट्रोपमं रौद्रमासीद्दारुणयोधनं तयोः । नराश्वरथसम्बाधं मत्तवारणसंकुलं ।
समाजमिव तं दृष्ट्वा प्रेक्षमाणा महारथाः । आशंसन्तो जयं ताभ्यां योधास्ते गगने स्थिताः । १११९५
तयोः प्रैक्षन्त समरं सन्निकृष्टं महात्मनोः । सिद्धगन्धर्व्वमुनयो देवदानवयोस्तदा ।
तौ छादयन्तावन्योन्यं समरे निशितैः शरैः । शरजालावृतं व्योम चक्रतुश्च महाबलौ ।
तावन्योन्यं जिघांसन्तौ शरैर्दीप्तैर्महारथौ । प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ।
सुवर्णविकृतान् बाणान् प्रमुञ्चन्तावरिन्दमौ । भास्कराभं तदाकाशमुल्काभिरिव चक्रतुः ।
तयोः शराः प्रकाशन्ते देवदानवयोस्तदा । पंक्तयः शरदि मत्तानां सारसानामिवाम्बरे । ११२००
छिद्यमानगजानां हि शरीरैर्गतजीवितैः । क्षणेन संवृता भूमिर्मेघैरिव नभस्तलं ।
ततः क्षुरधारं ज्वलितं सूर्य्यमण्डलसन्निभं । धराय वसवे मुक्तं चक्रं नमुचिना रणे ।
पतता तेन चक्रेण धरस्य रथसत्तमः । सध्वजः सायुधः साश्वो दग्धोऽर्कसमप्रभः ।
स त्यक्त्वा तं रथं देवः प्रदीप्तं चक्रतेजसा । भयात्तस्यासुरेन्द्रस्य गतः खं वसुसत्तमः ।
पराजित्यासुरो देवं नमुचिर्बलगर्व्वितः । प्रयातः स्वेन सैन्येन भूयः सुरचमूं प्रति । ११२०५
अथ त्वष्टा मयश्चैव देवदैत्यौ सुविश्रुतौ । प्रवरौ विश्वकर्म्माणौ मायाशतविशारदौ ।
तयोः प्राणहरश्चासीत् संप्रहारो महात्मनोः । अन्योन्यस्पर्द्धिनोस्तत्र चिरात्प्रभृति दीप्तयोः ।
त्वष्टा तु निशितैर्बाणैर्दैत्यं तं बलगर्व्वितं । पराक्रान्तं पराक्रम्य विव्याध बहुभिः शरैः ।
मयस्तु प्रतिविव्याध त्वष्टारं निशितैः शरैः । महावेगैः प्रसन्नाग्रैः शातकुम्भविभूषितैः ।
ननाद दितिजश्रेष्ठं हत्वा त्वष्टा शरैर्मयं । संक्रुद्धो दैत्यसैन्यस्य पिबन्निव जीवितं । ११२१०
शक्तिं कनकवैदूर्य्यचित्रदण्डां महाप्रभां । देवो मदोत्कटां समरे दैत्येन्द्रे प्रत्यवासृजत् ।
भीमां सर्व्वायसीं त्वष्टा पुरन्दर इवाशनिं । तां लघु भेजनिर्मुक्तामर्कवैश्वानरप्रभां ।
मयश्चिच्छेद तीक्ष्णाग्रैः शीघ्रं सप्तभिराशुगैः । ततः पिबन्निव प्राणांस्त्वष्टुः कोपात्महासुरः ।
प्रेषयामास संरब्धः शरान् वर्हिणवाससः । चिच्छेद बाणांस्त्वष्टा तान् ज्वलितैर्नतपर्व्वभिः ।
दैत्यस्य सुमहावेगैः सुवर्णविकृतैः शरैः । तौ वृषाविव नर्द्दन्तौ बलिनौ वाशितान्तरे । ११२१५
शार्दूलाविव चान्योन्यं प्रसभावभिजघ्नतुः । अन्योन्यं प्रतिविध्यन्तावन्योन्यस्यान्तरैषिणौ ।

अन्योन्यमभिवीक्षेतां क्रुद्धावाशीविषाविव । महागजाविवासाद्य विषाणाग्रैः परस्परं ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः । ततः सुविपुलां दीप्तां मयो रुक्माङ्गदां गदां ।
त्वष्टरि प्राहिणोत् क्रुद्धः सर्व्वप्राणहरां रणे । तया जघानाऽऽनिरथस्त्वष्टुस्तस्य च वाजिनः ।
गदया दानवः क्रुद्धो वज्रेणेन्द्र इवाचलान् । अथ क्रुद्धो महादैत्यैः क्षुराभ्यां तस्य संयुगे । १२२१०
पुनर्द्वाभ्यां शराभ्यान्तु निशिताभ्यां महारणे । ध्वजं त्वष्टुरथ च्छित्वा सूतं प्रेष्य यमक्षयं ।
महाकायान्महावेगान् सदश्वान् गदयाऽहनत् । दृष्ट्वा त्वष्टा तु समरे ध्वजं सूतञ्च पातितं ।
हताश्वस्तमुत्सृज्य रथं भूमौ व्यवस्थितः । विस्फार्य्य सुमहच्चापं युद्धाय कृतनिश्चयः ।
हताश्वस्तं विरथं कृत्वा रिपुमवस्थितः । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
मयः कालान्तकप्रख्यश्चापपाणिरदृश्यत । निर्द्दहन्देवसैन्यानि दावाग्निरिव काननं । १२२१५
त्वष्टुः सोऽभिपतात्युग्रो नाराचांस्तिग्मतेजसः । चतुर्द्दश शिलाधौतान् सायकान् विविधाकृतीन् ।
ते पपुस्तस्य देवस्य शोणितं रुक्मभूषणाः । आशीविषा इव क्रुद्धा भुजगाः कालचोदिताः ।
ते तु क्षितिं समासाद्य शोभन्ते स्वर्णपुङ्खिताः । अर्द्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ।
तं प्रत्यविध्यत्त्वष्टा तु जाम्बूनदविभूषितैः । चतुर्द्दशभिरत्युग्रैर्नाराचैरभिदारयन् ।
ते तस्य दैत्यस्य भुजं सव्यं निर्भिद्य पत्रिणः । विदार्य्य प्राविशन् भूमिं भुजङ्गा इव वेगिताः । १२२२०
ते व्यकाशन्त नाराचाः प्रविशन्तो वसुन्धरां । अस्तं गच्छन्तमादित्यं प्रविशन्त इवांशवः ।
मयस्तु त्रिभिरत्युग्रैस्त्वष्टारन्तु पतत्रिभिः । अर्द्दयामास दैत्येन्द्रो ज्वलितैः शोणिताशनैः ।
त्वष्टाऽथ मयनिर्मुक्तैः सायकैरर्द्दितो भृशं । अपायाद्रथमुत्सृज्य क्रीडयाऽभिसमन्वितः ।
तं तत्र हतसूताश्वं भुजङ्गमिव निर्विषं । त्वष्टारं विरथं कृत्वा मुदितः स तु दानवः ।
विस्फारयन् सुरुचिरं चापं रुक्माङ्गदं दृढं । रणे व्यतिष्ठद्दैत्येन्द्रो ज्वलन्निव हुताशनः । १२२२५
पुलोमा तु बलश्लाघी दृप्तो दानवसत्तमः । रणे श्वेताश्वयुक्तेन रथेन प्रत्यदृश्यत ।
ततो वै सर्व्वभूतानां शरीरान्तरचारिणा । बलिना कालकल्पेन महायुध्यन वायुना ।
पुलोमा तत्र पवनः श्रुत्वा व्यातत्तनिस्वनं । नाम्यधत यथा मत्तो गजः प्रतिगजस्वनं ।
दैत्यचापच्युतैर्व्वाणैः प्राच्छादयन्त दिशो दश । रश्मिजालैरिवाकांश्च विततं भास्वरं जगत् ।
स ताम्रनयनः क्रुद्धः श्वसन्निव महोरगः । बभौ दैत्यशरैर्व्याप्तो रश्मिवानिव भास्करः । १२२३०
दैत्यचापभुजोत्सृष्टाः शरा बर्हिणवाससः । रुक्मपुङ्खा व्यकाशन्त हंसाः श्रेणीगता इव ।
चापध्वजपताकाभ्यश्चक्रवाहोषामुखाद्युगात् । प्रपतन्तः स्म दृश्यन्ते दैत्यच्यायुतशः शराः ।
एवं सुनीतान् खचराञ्ज्वलभानिव पावके । सुवर्णविकृतान् सर्व्वाम्मुमोच दितिजः शरान् ।
तमन्तकमिव क्रुद्धमापतन्तं स मारुतः । त्वरया प्राणानतिक्रम्य विव्याध नवभिः शरैः ।
तस्य वेगमसंहार्य्यं दृष्ट्वा वायुः सनातनः । उत्तमं जवमास्थाय व्यधमत्सायकव्रजान् । १२२३५
ततो विधम्य बलवान् शरजालानि मारुतः । विव्याध दैत्यं त्वरया विशिखैर्नतपर्व्वभिः ।

महद्गणानां प्रवरा इव दिव्या महौजसः । साधु साध्विति वेगेन सिंहनादं प्रचक्रिरे ।
तस्मिन् समुत्थिते शब्दे तुमुले लोमहर्षणे । अभ्यधावन्त दितिजाः पौलोमाः क्रोधमूर्च्छिताः ।
ततः प्रच्छादयामासुः पवनं शरवृष्टिभिः । पर्व्वतं वारिधाराभिः प्रावृषीव बलाहकाः ।
ते पीडयन्तः पवनं क्रुद्धाः सप्त महारथाः । प्रजासंहरणे घोराः सोमं सप्तग्रहा इव । १३३६०
ततो दक्षिणमक्षोभ्यं नानारत्नविभूषितं । करं करिकराकारमुद्यम्य युधि मारुतः ।
तेषां मूर्द्धसु दैत्यानां पातयामास वीर्य्यवान् । निहता वायुवेगेन तेन सप्त महारथाः ।
त्यक्ता प्राणान् पुलोमा तु विव्याध नवभिः शरैः । तस्यापि तमसंह्यार्थं दृष्ट्वा वायुः सनातनः ।
असम्भ्रमन् शरौघांस्तान् ज्वलितान् वै पुलोमतः । तेषां विदार्य्य तेजांसि दानवानां महात्मनां ।
शोणितक्लिन्नमुकुटा गैरिकाक्ता इवाद्रयः । ते छिन्नमर्म्मास्थिभुजाः पतन्तो भान्ति दानवाः । १३३६५
मातङ्गयूथपा रुग्णाः पुष्पिता इव पादपाः । तेषां विदारितैर्देहैर्दानवानां महात्मनां ।
ततः प्रावर्त्तत नदी रौद्ररूपा भयावहा । प्रस्रवन्ती रणे रक्तं भीरूणां भयवर्द्धिनी ।
देवदैत्यगजाश्वानां रुधिरौघपरिप्लुता । रणभूमिरभूद्रौद्रा तत्र तत्र सहस्रशः ।
संवृता गतसत्त्वैश्च यन्त्रराक्षसखेचरैः । सानुकर्षपताकैश्च पातितैश्च ध्वजैरथैः ।
शीर्णकुम्भैस्तथा नागैर्घण्टाभिः सुविभूषितैः । सुवर्णपुङ्खैर्ज्वलितैर्नाराचैस्तिग्मतेजितैः । १३३७०
देवदानवनिर्मुक्तैः सविषैरुरगैरिव । प्रासतोमरभल्लैश्च शक्तिखड्गपरश्वधैः ।
सुवर्णविकृतैश्चापैर्गदामुषलपट्टिशैः । कनकाङ्गदकेयूरैर्मुकुटैः कुण्डलैः शुभैः ।
तनुत्रैः सतलत्रैश्च हारैर्निष्कैश्च शोभनैः । छत्रैश्च दितिजैर्भिन्नैः शशाङ्कसदृशवर्च्चितैः ।
पातितैरपविद्धैश्च प्रबभौ द्यौरिव ग्रहैः । निपातितध्वजरथो हतवाजिरथद्विपः ।
विमर्द्दो देवदैत्यानां सदृशः कर्म्मणा बभौ । अथ दैत्यसहस्रेण पौलोमेन महारथः । १३३७५
संवृतः पवनः श्रीमान् गदामुषलपाणिना । ते जघ्नुः शतसाहस्राः पवनं दानवोत्तमाः ।
तैर्बध्यमानस्तु बभौ तोयाद्रिरिव द्विपः । हत्वाऽष्टौ तत्र दैत्यानां शतानि पवनः प्रभुः ।
कृत्वा मार्गं महाबाहुः प्रयातः स महारथः । अद्यापि च सुविस्तीर्णः पन्थाः संदृश्यते दिवि ।
नाम्ना वायुपथो नाम सिद्धाः पश्यन्ति तं सदा ।
॥ वैशम्पायन उवाच ॥ हयग्रीवस्तु दितिजः पूषणमासाद्य वीर्य्यवान् । ननाद सुमहानादं सिंहवत्सुमहाबलः । १३३८०
विस्फार्य्य सुमहाचापं हेमजालविभूषितं । पूषणं दितिजोऽपश्यत् क्रुद्धो घोरेण चक्षुषा ।
भुजाभ्यामाददानस्य सन्दधानस्य सायकान् । मुञ्चतः कर्षतो वाऽपि ददृशे तत्र नान्तरं ।
अग्निचक्रोपमं दीप्तं मण्डलीकृतकार्म्मुकं । तथाविधो दानवेन्द्रस्य सव्यदक्षिणमस्यतः ।
रुक्मपुङ्खैस्ततस्तस्य चापमुक्तैः शितैः शरैः । प्राच्छाद्यन्त शिलाधौतैर्दिशः सूर्य्यस्य च प्रभाः ।
ततः काञ्चनपुङ्खानां शराणां नतपर्व्वणां । नभश्चराणां नभसि दृश्यन्ते बहवो व्रजाः । १३३८५
गिरिशृङ्गनिभाश्चापात्प्रभवन्तः शरोत्तमाः । श्रेणीकृताः प्रकाशन्ते चाम्नः क्रौञ्चा इवाम्बरे ।

माङ्गपत्राञ् शिलाधौतान् कार्त्तस्वरविभूषितान् । प्रसन्नाग्रान्महावेगान्मुमोच दितिजः शरान् ।
ततश्चापबलोद्धूताः शातकुम्भविभूषिताः । देहे समवकीर्य्यन्त पूष्णः सुनिशिताः शराः ।
ते व्योम्नि रुक्मविकृताः संप्रकाशन्त सर्व्वशः । खद्योता इव घर्म्मान्ते खे चरन्तः सहस्रशः ।
शिलाधौताः प्रसन्नाग्राः पूषणं विव्यधुः शराः । दैत्यः प्रच्छादयामास पूषणं शरवृष्टिभिः । १२३९०
पर्व्वतं वारिधाराभिश्छादयन्निव तोयदः । ततस्तु पूष्णो देवस्य बलवीर्य्यपराक्रमं ।
व्यवसायञ्च सत्त्वञ्च ददृशुस्त्रिदशाऽद्भुतं । तां समुद्रादिवोद्भूतां शरवृष्टिं समुत्थितां ।
नाचिन्तयत्तदा पूषा दैत्यश्चाप्यद्रवद्रुषा । हेमपृष्ठं महानादं पूष्ण आसीन्महद्धनुः ।
विकृष्टं मण्डलीभूतं शक्रायुधमिवापरं । ततः शराः प्रादुरासन् पूरयन्त इवाम्बरं ।
सुवर्णपुङ्खाः पूष्णस्ते प्रभवन्तः शरासनात् । मालेव रुक्मपुङ्खानां वितता व्योम्नि पत्त्रिणां । १२३९५
प्रादुरासीन्महाघोरा सृजती पूषकार्म्मुकात् । ततो व्योम्नि विमुक्तानि शरजालानि सर्व्वशः ।
आहतानि व्यशीर्य्यन्त शरैः सन्नतपर्व्वभिः । ततः कनकपुङ्खानां शराणां कङ्कवाससां ।
पततां पात्यमानानां खमासीत् संवृतं शतैः । पूषा त्वच्छादयद्बाणैर्हयग्रीवं शिलाशितैः ।
नानाङ्कैरर्कसदृशैर्दिव्यैर्हेमपरिष्कृतैः । ततो व्यसृजदुग्राणि शरवर्षाणि दानवः ।
अमर्षी बलवान् क्रुद्धो दिधक्षन्निव पावकः । पूष्णस्त्वाजौ ध्वजञ्चैव पताकां धनुरेव च । १२४००
रश्मीन् योक्त्राणि चाश्वानां हयग्रीवो रणेऽच्छिनत् । अथाश्वांश्चास्य पुनर्भित्त्वा चतुर्भिः सायकोत्तमैः ।
सारथिं सुमहातेजा रथोपस्थादपातयत् । हतस्तु विरथः पूषा हयग्रीवेण संयुगे ।
समकम्पत भीतोऽसौ सिन्धोरिव महोर्म्मयः । ततः शक्ररथाभ्याशं मुक्तो मृत्युमुखादिव ।
तत्राद्भुतमिदं भूयो युद्धमासीत् सुदारुणं । कृतप्रतिकृतं घोरं शम्बरस्य भगस्य च ।
सप्तकिष्कुपरीणाहं द्वादशारत्निकार्म्मुकं । वासवाशनिनिर्घोषं दृढज्यं भारसाधनं । १२४०५
कर्षन्नथाप्रमेयात्मा व्यसृजत् सायकान् बहून् । क्रोधसंरक्तनयनः शम्बरः सर्व्वयोगवित् ।
तेन विद्राव्यमाणानि देवसैन्यानि सर्व्वशः । समकम्पन्त भीतानि सिन्धोरिव महोर्म्मयः ।
तमापतन्तं संप्रेक्ष्य विरूपाक्षं विभीषणं । भगः प्रस्फुरमाणोष्ठस्त्वरमाणो न्यवारयत् ।
ततो भगो महेष्वासो दिव्यं विस्फारयन्धनुः । अवाकिरद्दिशः सर्व्वा ज्याविक्षेपेण नादयन् ।
तमभ्यधाद्भगो दैत्यं तूर्णमत्यन्तमन्तिकात् । मातङ्गमिव मातङ्गो दृप्तं प्रतिमदो यथा । १२४१०
तौ प्रगृह्य महावेगौ धनुषी भारसाधने । प्रच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ।
तयोः सुतुमुलं युद्धमासीद्घोरं महारणे । भगशम्बरयोर्भीममप्रमेयं महात्मनोः ।
अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्व्वभिः । व्यदारयेतामन्योन्यं कांस्ये निर्भिद्य वर्म्मणी ।
तौ तु विक्षतसर्व्वाङ्गौ शोणितौघपरिप्लुतौ । संप्रेक्षमाणौ रथिनावुभौ परमदुर्म्मदौ ।
तक्षमाणौ शितैर्बाणैर्वीक्षितुमशक्नुतां । ततो विव्याध समरे त्वरमाणोऽसुरो भगं । १२४१५
नाराचैः क्रोधताम्राक्षः कालान्तकयमोपमः । गरुत्मानिव चाकाशे पोथयानो महोरगान् ।

नाराचा न्यपतन्देवे तूर्णं शम्बरचोदिताः । अप्राप्तानन्तरीक्षे तान् भगश्चिच्छेद पत्रिभिः ।
ज्वलितान् सुमहावेगान् दिवाकरसमप्रभान् । ततो भगं चतुःषष्ट्या विव्याधासुरसत्तमः ।
सायकानां सुतीक्ष्णानां सुमुखानां सुवेगिनां । तयोस्तु सुचिरं कालं युद्धं समभिवाभवत् ।
शम्बरस्य च मायाभिर्नादृश्यत ततोऽन्तरं । दोर्भ्यां विक्षिपतश्चापं रथं विष्टभ्य तिष्ठतः । १२४२०
श्रूयते धनुषः शब्दो विस्फूर्जितमिवाशनेः । स भगस्य हयान् हत्वा छित्त्वा च ध्वजमाहवे ।
अभ्यवर्षच्छरैर्दैत्यः पर्जन्य इव वृष्टिमान् । न तस्यासीदनिर्भिन्नं गात्रे सूक्ष्ममथान्तरं ।
भगादित्यस्य देवस्य शम्बरेणास्त्रयोधिना । दैत्यस्य चाद्भुतं दिव्यमस्त्रेणास्त्रमवारयत् ।
मायायुद्धेन मायावी शम्बरस्तु महाबलः । अवध्ययत्नं दैत्यो मायाभिर्लाघवेन च ।
सहस्रमायो द्युतिमान्देवसेनानिषूदनः । शम्बरोऽदृश्यत पुनः सञ्छन्नः शतधा शरैः । १२४२५
पतितोऽदृश्यत पुनर्व्यसुर्भूमौ महाबलः । अथ स्म दृश्यते भूयः शतधा शैलसन्निभः ।
दिग्नागेन्द्रसमारूढो दृश्यते च पुनर्बली । प्रादेशमात्रश्च पुनर्भूत्वा भवति शैलवत् ।
महामेघनिभः श्रीमांस्तिर्यगूर्ध्वश्च सोऽभवत् । पुनः कृत्वा विरूपाणि घोराणि विकृतानि वै ।
सर्व्वां भीषयते सेनां देवानां भीमदर्शनः । ते भीताः प्रपलायन्ते सिंहं दृष्ट्वा मृगा इव ।
ततश्चान्यं नवं देहं कृत्वा प्रांशुतरं पुनः । गच्छत्यूर्ध्वगतिं घोरो दिशः शब्देन पूरयन् । १२४३०
नभस्तलगतश्चापि वर्षते वासवो यथा । सम्वर्त्तकाम्बुदप्रख्यः पूरयन् पृथिवीमिमां ।
संवर्त्तकोऽनलश्चैव भूत्वा भीमपराक्रमः । शतावर्त्तः शतशिखो ददाह च पुनः सुरान् ।
मुहूर्त्ताच्च महाशैलः शतवर्ष्मा शतोदरः । अदृश्यत दिवं स्पृशन् कैलास इव पर्व्वतः ।
यान्यादित्याश्च साध्याश्च यानि विश्वे च देवताः । क्षिपन्त्यस्त्राणि दिव्यानि तान्यसौ ग्रसतेऽसुरः ।
युध्यमानश्च समरे सरथः सोऽसुरोत्तमः । गन्धर्व्वनगराकारस्तत्रैवान्तरधीयत । १२४३५
तं भीताः समुदैक्षन्त त्रिदशा भीमविक्रमं । सहस्रमायं समरे शम्बरं चित्रयोधिनं ।
भगोऽपि भयसंत्रस्तो दानवेन्द्रस्य संयुगे । रथं त्यक्त्वा महाभागो महेन्द्रं शरणं गतः ।
पराजित्य तु तं देवं दानवेन्द्रः प्रतापवान् । गतो यत्र महातेजा जातवेदा महाप्रभः ।
स वह्निं वाग्भिरुग्राभिः क्रुद्धोऽतर्ज्जयतासकृत् । भवाम्येव हि ते मृत्युरित्युक्त्वाऽन्तर्दधे च सः ।
एतस्मिन्नन्तरे चैव श्राद्धदेवो महाबलः । जघान सोमः शीतांशुर्दानवानां चमूं रणे । १२४४०
कैलासशिखराकारो द्युतिमच्छ्रीपदैर्वृतः । अवधीद्दानवाञ्छुभ्रो दण्डपाणिरिवान्तकः ।
पादातयूथवृन्दानि वाजिवृन्दानि वै प्रभुः । दैत्येषु चपरक्षोमान् युगान्ते कालवद्बली ।
स कर्षयद्वृन्दानि जवयोगेन चन्द्रमाः । ददाह दानवान् सर्व्वान् दावाग्निरिव चोदितः ।
स्वरथेभ्यो रथिनो गजेभ्यो गजयोधिनः । वाजिनाश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातिनः ।
हिमेन व्यधमत् सर्व्वान् वायुर्वृक्षानिवौजसा । चन्द्रमाः सुमहातेजा दानवानां महाचमूं । १२४४५
तदाऽश्रममवश्यस्य प्रविश्य प्रचुशोषितैः । पिनाकमिव रुद्रस्य क्रुद्धस्याभिहतः पशून् ।

युगान्तकोपमः श्रीमान् दैत्येषु व्यचरद्बली । आवार्य्य महतीं सेनां प्राद्रवन्तीं पुनः पुनः ।
चक्रं मृत्युमिवायान्तं दृष्ट्वा योधा विसिस्मियुः । यतो यतः प्रविपति शिशिरांशुस्तमोनुदः ।
ततस्ततो व्यशीर्य्यन्त दैत्यसैन्यानि सर्व्वशः । व्यदारयत सैन्यानि स्वबलेनाभिसंवृतः ।
ग्रसन्तमरिसैन्यानि व्यादितास्यमिवान्तकं । तं तथा भीमकर्म्माणं दृष्ट्वोतास्तं महाहवे । १२७५०
दृष्ट्वा शशाङ्कमायान्तं दैत्यानां चन्द्रभास्करौ । तालमात्राणि चापानि कर्षमाणौ महाबलौ ।
छादयेतां शरैश्चन्द्रं वृष्टिमन्ताविवाम्बुदौ । अथ विस्फार्य्यमाणानां कार्म्मुकाणां सुरासुरैः ।
अभवत्तुमुलः शब्दो दिशः संनादयन्निव । विनदद्भिर्म्महानागैर्हेषमाणैश्च वाजिभिः ।
भेरीशङ्खमृदङ्गैश्च वाद्यमानैर्न्नभस्तले । युयुत्सवस्ते संहृष्टा जयगृद्धा यशस्विनः ।
अन्योन्यमभिगर्ज्जन्तो गोष्ठेष्विव महावृषाः । शिरसां पात्यमानानां समरे निशितैः शरैः । १२७५५
अश्मवृष्टिरिवाकाशे ह्यभवत् सेनयोस्तयोः । कुण्डलोष्णीषधारीणि जातरूपस्रजांसि च ।
पतितानि स्म दृश्यन्ते शिरांसि रणमूर्द्धनि । विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्म्मुकैः ।
सहस्ताभरणैश्चान्यैः प्रच्छन्नैरुधिरोक्षितैः । कवचैरावृतैर्गात्रैर्हस्तैर्भिश्चापि भास्वरैः ।
मुखैश्च चन्द्रसङ्काशैस्ताम्रकुण्डलभूषणैः । गजवाजिमनुष्याणां सर्व्वगात्रैः समन्ततः ।
आसीत्सर्व्वा समाकीर्णा मुहूर्त्तेन वसुन्धरा । चापमेघाश्च विपुलाः शस्त्रविद्युत्प्रकाशिनः । १२७६०
वाहनानाञ्च निर्घोषः स्तनयित्नुसमोऽभवत् । स संप्रहारस्तुमुलः कटुकः शोणितोदकः ।
प्रावर्त्तत सुराणाञ्च दानवानाञ्च संयुगे ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

॥ वैशम्पायन उवाच ॥ तस्मिन्महाहवे रौद्रे तुमुले लोमहर्षणे । ववर्षुः शरवर्षाणि संरब्धा देवदानवाः ।
व्यक्रोशन्त गजास्तत्र शरवर्षप्रपीडिताः । अश्वाश्च पर्य्यधावन्त हतारोहा दिशो दश ।
उत्पत्य निपतन्त्यन्ये शरवर्षप्रपीडिताः । देवानां दानवानाञ्च गजाश्वरथिनां तदा । १२७६५
समरे तत्र शूराणां प्रवराणां तरस्विनां । धनुर्ज्यातलशब्देन न प्राज्ञायत किञ्चन ।
शरशक्तिगदाभिस्तु खड्गैश्चामिततेजसः । निजघ्नुर्म्महतीं सेनामन्योन्यस्य परन्तपाः ।
शार्ङ्गनामुत्तमाङ्गानां कार्म्मुकाणाञ्च संयुगे । राशयः समदृश्यन्त देवदैत्यसमागमे ।
अश्वानां कुञ्जराणाञ्च रथानाञ्च वरूथिनां । अन्तं स्म नाधिगच्छन्ति निहतानां सुरासुरैः ।
गदाभिरसिभिः प्रासैर्बाणैः संनतपर्व्वभिः । योधास्तत्राभ्यहन्यन्त हस्त्यश्वाश्चापि तद्रणे । १२७७०
प्रावर्त्तत ततो घोरा शोणितौघतरङ्गिणी । नदी मध्येन सैन्यानां केशशैवलशाद्वला ।
हाहाकारमहाशब्दो योधानामभवत्तदा । दानवैर्हन्यमानानां चिदशानां महारणे ।
एकं तदभवद्युद्धं देवानामसुरैः सह । विभीषणं महारौद्रं विततं भीमदर्शनं ।
विरोचनस्तु तत्रैव विष्वक्सेनं महारणे । जघान रुधिराभार्थं साध्यं परमधन्विनं ।
तमायान्तमभिप्रेक्ष्य विष्वक्सेनः शरैस्त्रिभिः । अमेयात्मा सुरश्रेष्ठः प्रत्यविध्यत् स्तनान्तरे । १२७७५

साध्यस्य बाणाभिहतस्तोत्राहित इव द्विपः । विरोचनः प्रजज्वाल क्रोधेनाग्निरिवाध्वरे ।
स कार्मुकविनिर्मुक्तैर्जिह्मगैर्दानवसत्तमः । विष्वक्सेनं बिभेदाशु दीप्तैः सप्तभिराशुगैः ।
सोऽतिविद्धो बलवता दानवेन सुरोत्तमः । मूर्च्छामभिजगामाशु ध्वजस्यापाश्रयस्तदा ।
ततः स पुनराश्वस्य साध्यो युद्धे मनो दधे । विस्फार्य सुमहच्चापं दैत्यमध्ये व्यवस्थितः ।
विरोचनस्तु बलवानभ्ययुध्यत सर्व्वशः । क्षोभयन् सुरसैन्यानि समन्ताज्जिह्मितैः शरैः । १२५७०
ततस्तस्यासुरेन्द्रस्य युध्यमानस्य संयुगे । श्रूयते तुमुलः शब्दो जीमूतस्येव गर्जतः ।
स जगर्ज्ज महाघोरो विनिघ्नन्देववाहिनीम् । यथा मेघोऽम्बरगतः सविद्युत्स्तनयित्नुमान् ।
दिशो विद्रावयामास शरवर्षेण दानवः । सर्व्वसैन्यानि देवानामुद्यतास्त्रो महाहवे ।
ते प्राद्रवन्त वित्रस्ता रथेभ्यो रथिनस्तदा । सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ।
श्रुत्वा कार्मुकनिर्घोषं विस्फूर्जितमिवाशनेः । सर्व्वसैन्यानि भीतानि व्यशीर्यन्त संयुगे । १२५७५
विरोचनभयत्रस्ता रथेभ्यो रथिनस्तदा । पदातीनां वपुः संख्ये यथा देवः शचीपतिः ।
विष्वक्सेनस्य साध्यस्य सर्व्वतः सुमहाबलः । पादरक्षांश्चक्राणि निजघान चतुर्द्दश ।
अश्ववृन्देषु नागेषु रथानीकेषु वा विभुः । पदातीनाञ्च संघेषु विनिघ्नन् प्रत्यदृश्यत ।
वितत्य श्येनवत् पक्षौ सर्व्वतः स वरूथिनीम् । भित्त्वा भित्त्वा महाबाहुः शिरांस्याजावकृन्तत ।
सादिनश्च पदाताश्च हतशेषास्तथा रथाः । विष्वक्सेनेन सहिता विरोचनमभिद्रवन् । १२५८०
तेऽसिचर्म्मगदाशक्तिपरिघप्रासतोमरैः । तमेवानुप्रधावन्तः सिंहनादं विनेदिरे ।
अथ सोऽसिं समुद्यम्य अवमास्थाय दानवः । चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च ।
रथनागाश्ववृन्देषु बलवानरिमर्द्दनः । विरोचनश्चरन् मार्गान् प्रकारानेकविंशतिं ।
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतं । सम्पातं समुदीर्णञ्च दर्शयामास दानवः ।
केचिद्वरासिना कृत्ता दानवेन महात्मना । विनेदुर्भिन्नमर्म्माणो निपेतुश्च गतासवः । १२५८५
छिन्नपृष्ठा हतारोहा दानवेन महात्मना । विद्रुताः स्वान्यनीकानि जग्मुस्त्रिदशवारणाः ।
निपेतुरर्द्धमाकाशमाक्रान्ता दृढधन्वना । विविधाश्चामराश्चापा महामात्रशिरांसि च ।
प्रतीपमाहरन्नागानश्वांश्च भ्रमविच्युतान् । चकर्त्त रथिनामाजौ शिरांसि च धनूंषि च ।
आप्लुत्य रथिनः कांश्चित् पराक्रम्य महाबलः । सूतांश्चिच्छेद खड्गेन ध्वजानपि च दानवः ।
मुहुरुत्पततो दिक्षु धावतश्च चर्म्मिणः । मार्गांश्च चरतश्चित्रान् व्यस्मयन्त ततोऽसुराः । १२५९०
निजघान परान् कांश्चिदाविध्यान्यानपोथयत् । खड्गेनान्यांश्च चिच्छेद नादेनान्यानभीषयत् ।
ऊरुस्तम्भगृहीताश्च प्रपतन्नपरे भुवि । अपरे चैव सम्प्रेक्ष्य भयात् प्राणानवासृजन् ।
तस्मिंस्तु वर्त्तमाने वै युद्धे महति दारुणे । रथाश्ववाजिनागानां सुराणाञ्च महाक्षये ।
कुजम्भो दितिजश्रेष्ठो संग्राममादित्यमाहवे । योधयामास समरे वृषः प्रतिवृषं यथा ।
जघानानलसंकाशो मत्तवारणविक्रमः । क्षुरप्रैर्निशितैस्तीक्ष्णैः शरैः षड्भिराशुगैः । १२५९५

देवसेनासहस्राणि सरथानि महाहवे । तस्य बाणपथं प्राप्य नाभ्यवर्त्तन्त सर्व्वशः ।
प्रणेदुः सर्व्वभूतानि बभूवुस्तिमिरा दिशः । देवानामजयश्चैव प्रत्यदृश्यत दारुणः ।
जंभस्तु दानवेन्द्रस्य अधानीकसमविक्रमः । अनीकं दशसाहस्रं कुञ्जराणां तरस्विनां ।
आपतन्तं गजानीकं कुजम्भो वीक्ष्य दानवः । गदापाणिरवारोहद्रथोपस्थादरिन्दमः ।
अद्रिसारमयीं गुर्व्वीं प्रगृह्य महतीं गदां । अभ्यद्रवद्गजानीकं व्यादितास्य इवान्तकः ।
स गजान् गदया निघ्नन् व्यचरत् समरे बली । कुजम्भो दानवश्रेष्ठो दण्डपाणिरिवान्तकः ।
विशीर्णदन्तांश्च बहून् भिन्नकुम्भांश्च वारणान् । अकरोद्दानवश्रेष्ठ उद्दिश्योद्दिश्य तान् बली ।
विशीर्णदन्ता बहवो भिन्नकुम्भास्तथाऽपरे । कुजम्भेनार्द्दिता नागा व्यद्रवन्त दिशो दश ।
कुजम्भस्य च येऽमात्या दानवा घोरदर्शनाः । नाराचैर्विमलैस्तीक्ष्णैरभ्यघ्नन् गजयोधिनः ।
क्षुरैः क्षुरप्रैर्भल्लैश्च दात्रैरञ्जलिकैस्तथा । चिच्छेद चोत्तमाङ्गानि कुजम्भो दानवोत्तमः ।
शिरोभिः प्रपतद्भिश्च गगनं समपूर्य्यत । अश्मवृष्टिरिवाभाति बाहुभिश्च सहाङ्कुशैः ।
हृतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः । अदृश्यन्त महाराज ताला विशिरसो यथा ।
आपतन्तं महानागमंशस्यासुरसत्तमः । विव्याधैकेषुणा क्रुद्धस्ततः स विमुखोऽभवत् ।
विगाह्यैवं गजानीकं कुजम्भो दानवोत्तमः । विनिघ्नन् प्रवरान् सैन्यान् गदया गदिनाम्बरः ।
एकप्रहाराभिहतान् कुजम्भेन महागजान् । अपश्यन्त सुराः सर्व्वे पर्व्वतानिव पातितान् ।
कुजम्भस्य च मार्गेषु विशीर्णास्ते महागजाः । वज्राहता इवेन्द्रेण विशीर्णा इव पर्व्वताः ।
अमन्यन्त सुरास्तत्र मूर्त्तिमन्तमिवान्तकं । गन्धादेव व्यशीर्य्यन्त सिंहस्येवेतरे मृगाः ।
स स्वायसीं गदां बिभ्रद्दूषितां गजशोणितैः । व्यादितास्यो नदन् क्रुद्धो रौद्रं रूपमधारयत् ।
यथा हि भगवान् क्रुद्धः प्रजानां संक्षये पुरा । प्रक्रीडमानो गदया रणमध्ये महासुरः ।
गोपाल इव दण्डेन कालयत् स महागजान् । क्रुद्धं कालमिवाकाशे दण्डमुद्यम्य दानवं ।
अपश्यन्त सुराः सर्व्वे कुजम्भं भीमविक्रमं । हतारोहास्तु तत्रान्ये प्रभिन्ना वारणोत्तमाः ।
गदया हन्यमानाश्च बाणैश्च भृशविक्षताः । असहन्तः कुजम्भस्य गदावेगं महाहवे ।
स्वान्यनीकानि मृद्नन्तः प्राद्रवन्त महागजाः । महावात इवाभ्राणि विधम्य गदया गजान् ।
अतिष्ठत् समरे दैत्यः कालः संवर्त्तको यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४७॥

॥ वैशम्पायन उवाच ॥ ततः सर्व्वाणि सैन्यानि देवराजस्य शासनात् । अभ्यद्रवन्त दितिजान्नदतो भैरवारवान् ।
तं सैन्यौघमपर्य्यन्तं देवानां सुदुरासदं । रथनागाश्वकलिलं शङ्खदुन्दुभिनादितं ।
आपतन्तं सुदुष्पारं रजसा सर्व्वतो वृतं । दैत्यसागरसंक्षोभं समुद्रमिव पर्व्वणि ।
तदाश्चर्य्यमपर्य्यन्तमसङ्ख्येयमिवाद्भुतं । रथनागाश्वकलिलं समुदीर्णं महाबलं ।
आवार्य्य तरसा सर्व्वं कुजम्भो बलिनाम्बरः । अतिष्ठत् समरे दैत्यो गिरिर्मेरुरिवाचलः ।

अनीकानि कुजम्भस्तु गदया संन्यवारयत्। अनीकिनी कुजम्भेन वारिताऽभून्निरुद्यमा। ११५३५
तस्मिंस्तथा वर्त्तमाने संप्रहारे सुदारुणे। तेषान्तु संप्रहारे वै वर्त्तमाने महात्मनां।
असिलोमा हरिश्चैव जघ्नतुर्वै परस्परं। असिलोमा तु बलवान् संक्रुद्धो दानवाधिपः।
देवसैन्यस्य सर्व्वस्य धूमकेतुरिवोत्थितः। तमांस्यर्क इवापोहन् सुरसैन्यानि संयुगे।
सहस्ररश्मिप्रतिमो दानवस्य रथोत्तमः। शरैर्मेघ इवावर्षत् देवानीके प्रतापवान्।
शरौघैर्रश्मिभिर्दीप्तैः प्रतपन् घोरदर्शनः। रौद्रः क्रूरो दुराधर्षो दुर्व्वार्य्यो ध्वजिनीमुखे। ११५४०
युध्यते हरिणा सार्द्धं ग्रसमान इव प्रभुः। उपेयुरुग्रवदनो मृद्यमानो महागजान्।
सुराणामुत्तमाङ्गानि प्राच्छिनोत् सुमहाबलः। ग्रसमानः स सैन्यानि शरदंष्ट्रः प्रतापवान्।
अग्निजिह्वो दुराधर्षश्चापव्यात्ताननोऽसुरः। परश्वधधरः श्रीमान् महच्छापूरितध्वनिः।
अतिष्ठद्दानवव्याघ्रः संयुगे व्याघ्रवद्बली। मौर्व्वीघोषस्तनयित्नुः पृषत्कपृषतो महान्।
धनुर्विद्युद्गणाटोपो महामेघ इवापरः। बलौघसागरो घोरो बाहुग्राहो दुरासदः। ११५४५
कार्म्मुकोर्म्मितरङ्गौघो बाणावर्त्तमहाह्रदः। गदासिमकरो रौद्रो ध्वजवेलः शिरोयोद्धृतः।
नाराचमीनः सुमहान् गर्ज्जितोत्कृष्टघोषवान्। हयान् गजान् पदातींश्च रथांश्च तरसा बहून्।
न्यमज्जयत संग्रामे परवीरान्महारथान्। अप्लावयत्स देवौघान् दारुणो दानवेश्वरः।
प्रामर्द्दत युधि श्रीमान्दैत्यश्रेष्ठो महाबलः। अपश्यंस्त्रिदशाः सर्व्वे शुद्धजाम्बूनदप्रभं।
समन्ततस्तत्र युध्यन्तं ज्वलन्तमिव पावकं। मध्यन्दिनगतं सूर्य्यं तपन्तमिव तेजसा। ११५५०
न शेकुः सर्व्वसैन्यानि दानवं प्रसमीक्षितुं। यथा प्रवृद्धो घर्म्मान्ते दहेत्कक्षं हुताशनः।
तथा सुरवरान्दैत्यो दहति स्म स्वतेजसा। देवानां दानवानाञ्च बलं नर्द्दति दारुणं।
विमूढमभवत्सर्व्वमाकुलञ्च समन्ततः। ततः शूरा बलोदग्रा हस्त्यश्वरथधूर्गताः।
आर्य्यां बुद्धिं समास्थाय न त्यजन्ति महाहवं। तदुत्पिञ्जलकं युद्धमभवद्रोमहर्षणं।
देवदानवयोर्घोरं रुधिरस्रावकर्द्दमं। न दिशः संप्रजानन्ति भयघातनिपीडिताः। ११५५५
शस्त्रघातांश्च विविधान्दानवानां महारणे। अन्योन्यं मूढचित्तास्ते निजघ्नुर्भ्रान्तलोचनाः।
स्वान् परांश्चाप्यजानन्त विमूढाः शस्त्रतेजसा। शिरोरुहेषु संगृह्य कश्चिच्छूरस्य संयुगे।
शूरश्छिन्दन्ति मूर्द्धानं सन्दष्टौष्ठपुटाननः। बाहुभिर्म्मुष्टिभिश्चैव वज्रकल्पैः सुदारुणैः।
प्रहरन्ति रणे वीरा न्यस्तशस्त्राः परस्परं। योधप्राणहरे रौद्रे स्वर्गद्वारविघट्टने।
सङ्कुले तुमुले युद्धे वर्त्तमाने भयावहे। हयो हयं गजो नागं वीरो वीरं महाहवे। ११५६०
अभिदुद्राव वेगेन न्यहनच्चैवमन्तिकात्। असुराश्च सुराश्चैव विक्रमाढ्या महारथाः।
उत्सृजन्तो रणे प्राणान्निजघ्नुरितरेतरं। मुक्तकेशा विकवचा विरथाश्छिन्नकार्म्मुकाः।
हस्तैः पादैरयुध्यन्त दानवास्त्रिदशैः सह। हरिस्तु निशितं भल्लं प्रेषयामास संयुगे।
स तस्य धनुषः कोटिं छित्त्वा भूमावपातयत्। पुनश्चापि पृषत्कानां शतानि नतपर्व्वणां।

प्राहिणोत्सहसा तस्य दानवेन्द्रस्य संयुगे । तस्य देहे विमुक्तास्ते मारुतेन समीरिताः । ११५६५
मग्नार्द्धकाया विबभुः पन्नगा इव पर्व्वते । स तैर्निपातितैर्गात्रैः क्षरद्भिरसृगव्ययं ।
बभौ दैत्यो महाबाहुर्मेरुर्धातुमिवोत्सृजन् । ततोऽश्विनौ महात्मा संक्रुद्धः प्रगृह्यान्यन्महद्धनुः ।
रुक्मपुङ्खांश्च निशितान् प्रेषयामास सायकान् । तैस्तं मर्म्मसु विव्याध सर्पानलविषोपमैः ।
गात्रं सञ्छादयामास महाभ्रैरिव पर्व्वतं । भूयः सन्धाय च शरं सुघोरं पावकसन्निभं ।
सुपुङ्खं सूर्य्यसङ्काशं वाणमप्रतिमं रणे । तेन विद्धः स वाणेन संयुगे भीमकर्म्मणा । ११५७०
मुमोह सहसा देवो भूमौ च निपपात ह । ततो हाहाकृतं सर्व्वं देवे भूतलमाश्रिते ।
जगत्सदेवमाविग्नं यथाऽर्कपतने तथा । परिवारांश्च समरे जघानास्य महासुरः ।
एकविंशत्सहस्राणि योधानां दानवोत्तमः । जयश्रिया सेव्यमानो दीप्यमान इवानलः ।
प्रगृह्य कार्म्मुकं घोरं गतः शक्ररथं प्रति । तत्रैव तु महायुद्धे ससैन्यावश्विनावुभौ ।
प्रयुद्धौ सह वृत्रेण बलिना देवतारिणा । वराश्वधनुष्पाणिः समरे त्यक्तजीवितः । ११५७५
आसाद्य सोऽश्विनौ वृत्रः स्थितो गिरिरिवाचलः । ततः शङ्खमुपाध्माय द्विषतां लोमहर्षणं ।
ज्याघोषतलनिर्घोषैः सर्व्वभूतान्यमोहयत् । ततः संहृष्टरोमाणः शङ्खशब्दं विशुश्रुवुः ।
सचराचरदेवौघास्सशैलार्णवसमस्तकं । गदापरिघनिस्त्रिंशशक्तिशूलपरश्वधाः ।
प्रगृहीता व्यराजन्त यत्नराजसबाहुभिः । तैः प्रमुक्तान्महाकायैः शूलशक्तिपरश्वधान् ।
भल्लैर्वृत्रः प्रचिच्छेद भीमवेगरवैस्तथा । सोऽन्तरीक्षचराणाञ्च भूमिष्ठानाञ्च गर्ज्जतां । ११५८०
शरैर्विव्याध गात्राणि देवानां प्रियदर्शनः । वृत्रासुरभुजोत्सृष्टैर्वज्रभिर्यन्त्ररक्षसां ।
निकृत्तान्येव दृश्यन्ते शरीराणि शिरांसि च । अथ रक्तमहावृष्टिरभ्यवर्षत मेदिनीं ।
गदापरिघभिन्नानां देवानां गात्रसम्भवा । प्रच्छाद्यमानं देवौघैर्वृत्रं भीमपराक्रमं ।
ददृशुः सर्व्वभूतानि सूर्य्यमभ्रगणैरिव । स रश्मिभिरिवादित्यः प्रतपन् सर्व्वदेवताः ।
अविध्यद्बलवान् क्रुद्धः सायकैर्म्मर्म्मभेदिभिः । नदतो विविधान्नादानर्दितस्यापि सायकैः । ११५८५
न मोहमसुरेन्द्रस्य ददृशुस्त्रिदशा रणे । तेऽसिशक्तिगदाभिश्च परिघप्रासतोमरैः ।
परश्वधैस्त्रिशूलैश्च प्रववर्षुर्महारथाः । ततो वृत्रः सुसंक्रुद्धस्तैस्तदाऽभ्यर्द्दितो बली ।
अभ्यवर्षच्छरैर्घोरैस्तान् सर्व्वान् सत्यविक्रमः । ते वै विप्रहता देवा विप्रकीर्णमहायुधाः ।
घोरमार्त्तस्वरं चक्रुर्वृत्रासुरभयार्द्दिताः । उत्सृज्य ते गदाशक्तिशूलासिपरशून् रणे ।
जग्मुस्तां दिशमाजग्मुस्त्रासिता दृढधन्वना । ततः शूलगदापाणिर्व्यूढोरस्को महाभुजः । ११५९०
प्रावलात रणे दैत्यस्त्रासयन् सचराचरं । तत्रैकस्तु महाबाहुरग्नी शूलधरः प्रभुः ।
अभ्यधावत दैत्येन्द्रं वृत्रमप्रतिमं रणे । गृहीतचापो वेगेन प्रभिन्न इव वारणः ।
वत्सदन्तैस्त्रिभिः पार्श्वे विव्याधासुरसत्तमं । सोऽतिविद्धो महेष्वासो वृत्रः परमकोपनः ।
गदां जग्राह बलवान् गदायुद्धविशारदः । तां प्रगृह्य गदां भीमामद्रिसारमयीं दृढां ।

अश्विनं सहसागम्य ताडयामास वीर्य्यवान्। दीप्यमानं ततः शूलमश्वी सुविपुलं दृढं । ११८९९
प्रचिक्षेपाशु दैत्याय समरे लोमहर्षणं। भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविशारदः।
अश्विनं सहसाऽभ्यच्छ्रन्दत्माणिव पन्नगं। सोऽन्तरीक्षं समुत्पत्य विधूय महतीं गदां।
नासत्योरसि चिक्षेप गिरिशृङ्गोपमां बली। गदयाऽभिहतोऽप्यश्वी त्यक्त्वा शूलमनुत्तमं।
प्रययौ सहसा तत्र यत्रायुध्यत वासवः। पराजित्य तु संग्रामे सोऽश्विनं भीमविक्रमं।
जयश्रिया सेव्यमानो हृष्टो युद्धे व्यवस्थितः। ११९००
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः॥२४८॥
॥ वैशम्पायन उवाच ॥ तत्रैव सुमहायुद्धे रणाजिरे द्विजसत्तम:। युध्यते सह दैत्येन एकचक्रेण धीमता।
प्रच्छाद्य रथपन्थानमुत्क्रोशन्तं महारवं। एकचक्रस्य सैन्यन्तु शरवर्षैरवाकिरत्।
महासुरा महावीर्य्या महापट्टिशयोधिनः। शूलानि च भुशुण्डीश्च चिक्षिपुश्च महारणे।
तच्छूलवर्षं सुमहद्दाशनिसमाकुलं। असिवं दितिजैर्मुक्तं दुर्निवार्य्यं चराचरैः।
अन्योन्यमभ्यवर्त्तन्त देवासुरगणा युधि। महाद्रिशिखराकारा वीर्य्यवन्तो महारथाः। ११९०५
शतं शताश्च तुरगास्तस्य युक्ता महारथे। महासुरवरस्येव हिरण्यकशिपोर्युधि।
तेषां चरणपातेन चक्रनेमिस्वनेन च। तस्य बाणनिपातैश्च हता वै शतशः सुराः।
ततः स लघुभिस्तीक्ष्णैः शरैः सन्नतपर्व्वभिः। आयुधान्यच्छिनत् क्रुद्धः शतशोऽथ सहस्रशः।
बध्यमानाः शरैस्तीक्ष्णैरथद्विरदवाजिनः। गमिताः प्रलयं केचित्केचिद्दीनवा रणे।
ततः प्रक्षीयमाणांस्तानुपलभ्य दितेः सुताः। त्यक्त्वा प्राणान् न्यवर्त्तन्त प्रगृहीतशरासनाः। ११९१०
ते दिशो विदिशश्चैव प्रतिरुध्य प्रहारिणः। अभ्यघ्नन्निशितैः शस्त्रैर्देवान्दितिसुता रणे।
रणाजिरं चलितं घोरं परमं तिग्मतेजसं। सुमोचास्त्रं महाबाहुर्मथनं नाम संयुगे।
ततः शस्त्राणि शूलानि निशितानि सहस्रशः। अस्त्रवीर्य्येण महता दितिजः संप्रचिच्छिदे।
छित्त्वा शूलांश्च तान् सर्व्वानेकचक्रो महासुरः। प्रत्यविध्यत तं साध्यं दशभिर्निशितैः शरैः।
अस्त्रवेगं निहत्यैवं सोऽक्षैस्तांस्तान् सैनिकान्। ज्वलितैरपरैः शीघ्रैस्तानविध्यत् सहस्रशः। ११९१५
तेषां छिन्नानि गात्राणि विस्रवन्ति स्म शोणितं। पाटलीवातिहृष्टानि शृङ्गाणि धरणीभृतां।
रुक्माग्निसमस्पर्शैर्वेगवद्भिरजिह्मगैः। दितिजैर्बध्यमानाश्च विनेशुः सुरसत्तमाः।
एकचक्रो रणे तिष्ठन्नपश्यद्गजयूथपान्। वराभरणनिर्ह्रादान् समुद्भ्रान्तनिस्वनान्।
मत्तान् सुकल्पितान् दृप्तान्महामात्रैरधिष्ठितान्। कुलीनान् वीर्य्यसम्पन्नान् प्रतिद्विरदघातिनः।
शिक्षितान् गजशिक्षायामैरावणसमान् युधि। न्यहनत् परसैन्यस्य गजान् गज इवासुरः। ११९२०
विचरन्तो महानागान् भीमरूपांस्त्रिधा मदं। मेघस्तनितनिर्घोषान् महाद्रीनिव चोच्छ्रितान्।
घण्टाघण्टितान् दिव्यान् जाम्बूनदपरिष्कृतान्। सुवर्णजालैर्वितताश्चरणाद्दितिनन्दनः।
एकचक्रो गदापाणिर्व्यनदान् गदिनाम्बरः। उत्सारयामास गजान् महाभ्राणीव मारुतः।

निहत्य गदया सर्व्वांस्तान् गजान् गजमर्द्दनः। भूयोऽश्वसंघान् स बली निरैक्षत महासुरः।
शुकवर्णान् सवर्णांश्च मयूरसदृशांस्तथा। पारावतसवर्णांश्च हंसवर्णांस्तथैव च। ११११५
मल्लिकाक्षान् विरूपाक्षान् क्रौञ्चवर्णान्मनोजवान्। अश्वसैन्यं महाबाहुस्तदप्रतिमपौरुषः।
निसूदयामास बली गदया भीमविक्रमः। रथाजिताश्च समरे सर्व्वं दृष्ट्वा सुरद्विषः।
अचिन्त्यविक्रमः श्रीमान् स युद्धाद्विरराम ह। गदायुद्धेषु कुशलो रथेन रथयूथपः।
वृष्णिसैन्यो महाबाहुः प्रस्थितः शक्रसन्निधौ। चित्रक्षतसहस्राणि प्राणिनां विनिहत्य च।
रणेऽतिष्ठत् स दैत्येन्द्रो विधूम इव पावकः। तस्मिन्नेव तु संग्रामे बलो नाम महासुरः। १११२०
मृगव्याधं महात्मानं योधयत्यजितं रणे। मृगव्याधस्य रुद्रस्य महापारिषदास्ततः।
समुत्पेतुर्बलं दृष्ट्वा हुताग्निसमतेजसः। गजैश्चान्यै रथैर्हयैर्वाजिभिश्च महाजवैः।
अन्येश्च निशितैस्तीक्ष्णैर्भल्लैश्चोपचिता रणे। ततस्ते ददृशुर्वीरा दीप्यमानं महासुरं।
रश्मिवन्तमिवोद्यन्तं सुतेजोरश्मिमालिनं। संग्रामस्थं महावेगं महासत्त्वं महाबलं।
महामतिं महोत्साहं महाकायं महारथं। तं समीक्ष्य महायोधं दिक्षु सर्व्वास्ववस्थितं। १११२५
ततः प्रहरणैर्घोरैरभिपेतुः समन्ततः। तस्य सर्व्वायसाः पीताः शराश्चीरमुखाः शिताः।
शिरस्यग्निप्रतीकाशा मृगव्याधेन पातिताः। तैरर्पितैरथाविद्धः शरैः शिरसि दानवः।
उत्पपात तदा व्योम दिशो दश विनादयन्। ततश्च चिरशो वीरः सरथः सज्यकार्म्मुकः।
अनुवव्राज संहृष्टः खे तदा सुमहाबलः। असुरं छादयामास तं व्योम्नि शरवृष्टिभिः।
वृष्टिमानिव जीमूतो निदाघान्ते धराधरं। अर्द्यमानस्ततस्तेन मृगव्याधेन दानवः। १११३०
चकार निनदं घोरमम्बरे जलदो यथा। स क्रूरं सहसोत्पत्य मृगव्याधरथेऽसुरः।
निपपात महावेगः पक्षवानिव पर्व्वतः। बभञ्ज च ततो दैत्यो सशिम्भाकूवरं रथं।
मृगव्याधः परित्यज्य स्थितो भूमौ महाबलः। विरथं प्रेक्ष्य रुद्रन्तु तस्य पारिषदाः शुभाः।
उत्थिता रोषताम्राक्षा व्योम्नि मुद्गरपाणयः। स तु तैः सहसोत्थाय विष्ठितो विमलेऽम्बरे।
मुद्गरैरर्द्दितो भीमैर्वृक्षः परशुभिर्यथा। तेषां वेगवतां वेगान्निहत्य स महासुरः। १११३५
निपपात पुनर्भूमौ सुपर्णसमविक्रमः। स शालवृक्षमुत्पाट्य महाशाखं महाबलः।
सर्व्वान् पारिषदान् संख्ये सूदयामास दानवः। स तैर्विततदेहश्च रुधिरौघपरिप्लुतः।
शुशुभे दानवश्रेष्ठो बालसूर्य्य इवोदितः। अथोत्पाट्य गिरेः शृङ्गं स मृगव्याधपार्श्वं।
जघान तान् पारिषदान् समरे दानवेश्वरः। ततस्तेष्वथसर्व्वेषु महापारिषदेषु वै।
सर्व्वं तवद्रोषं स नाशयामास वीर्य्यवान्। अश्वरथान् गजैर्नागान् योधैर्योधाश्चयेरथान्। १११४०
दानवः सूदयामास युगान्तेऽन्तकवत् प्रजाः। हतैरश्वैश्च नागैश्च भग्नैश्च महारथैः।
चित्रैश्चाभवद्भूमी रक्तमार्गा समन्ततः। एवं बलश्च दैत्येन्द्रो मृगव्याधश्च वीर्य्यवान्।
युधि प्रयुद्धौ बलिनौ प्रभिन्नाविव वारणौ। तथैव युध्यते रुद्रो द्वितीयो राक्षसा सह।

विश्रुतस्त्रिषु लोकेषु क्रोधात्मा ह्यज एकपात्। तत्तयोस्तुमुलं युद्धं सुमहल्लोमहर्षणं।
आसीत् प्रतिभयं रौद्रं वीराणां जयमिच्छतां। देवदानवदैत्यैस्तु दुस्तरा लोमवाहिनी। ११९५५
शरीरसंघातवहा प्रसृता शोणितापगा। निजघानासुरं क्रुद्धो रुद्रो रौद्राकृतिः प्रभुः।
गाढं शतमुखं युद्धे शत्रुसैन्यविदारणं। तस्य काञ्चनचित्राङ्गं रथं सार्द्धं ससारथिं।
जघान समरे श्रीमान् क्रुद्धो दैत्यस्य सायकैः। तस्य पारिषदो ह्येको रथशक्त्या महाबलः।
बिभेद समरे हृष्टो दानवं तं स्तनान्तरे। विभिन्नगात्रो रुद्रेण तथा पारिषदैरपि।
रुद्रस्य रथमायान्तं राजन् दानवसत्तमः। प्रममाथ तलेनाशु सहसा क्रोधमूर्च्छितः। ११९६०
भिन्नगात्रः शरैस्तीक्ष्णैः स रुद्रममितौजसं। रुद्रपारिषदांश्चापि जघानाशु पराक्रमी।
सृजन्तं शरवर्षाणि दानवं घोरदर्शनं। बिभेद समरे रुद्रो बाणैः सन्नतपर्वभिः।
वर्त्तमाने तथा रौद्रे संग्रामे लोमहर्षणे। रुधिरौघप्रवाहिन्यो महानद्यः प्रसुस्रुवुः।
दानवः समरे रुद्रं नीलाञ्जनचयोपमः। निर्बिभेद शरैस्तीक्ष्णैर्वेदं स्वयं रवांशुभिः।
हतैर्दानवमुख्यैस्तु शूलशक्तिपरश्वधैः। पतितैः पर्व्वताभैश्च दानवैः कामरूपिभिः। ११९६५
वर्त्तमाने महाघोरे संग्रामे लोमहर्षणे। महाभेरीमृदङ्गानां पणवानां तथैव च।
शङ्खानां पटहानाञ्च सम्बभूव महास्वनः। हतानां स्वनतां तत्र दैत्यानाञ्चापि निस्वनः।
देवानाञ्च तथा तत्र शुश्रुवे दारुणो महान्। तुरङ्गमखुरोत्कीर्णं रथनेमिसमुद्धतं।
रुरोध मार्गं योधानां चक्षूंषि च धरारजः। शस्त्रपुष्पोपहारा सा तत्रासीद्युद्धमेदिनी।
दुर्दर्शा दुर्विगाह्या च मांसशोणितकर्द्दमा। भग्नैः खड्गैर्गदाभिश्च शक्तितोमरपट्टिशैः। ११९७०
अपविद्धैश्च शतशो रथैः सांग्रामिकैर्हतैः। निहतैः कुञ्जरैर्मत्तैस्तथा विदशदानवैः।
चक्राक्षयुगशस्त्रैश्च भग्नैरवनिमाश्रितैः। बभूवायोधनं घोरं पिशिताशनसङ्कुलं।
उत्पेतुश्च कबन्धानि दिक्षु सर्व्वासु संयुगे। अन्योन्यबद्धवैराणां शूराणां जयमिच्छतां।
संप्रहारस्तदा युद्धे वर्त्तते स्म भयङ्करः। सैन्यानां संप्रयुक्तानां शूराणामनिवर्त्तिनां।
अजस्य चैकपादस्य राहोश्चैव महात्मनः। तेषान्तु तत्रापततां सैन्यानामतिनिस्वनः। ११९७५
उद्धर्त्ततामन्तकाले समुद्राणामिव स्वनः। तत्रैकस्तु स धूम्राक्षो भीमो रुद्रो महाबलः।
बिभेद केशिनं शक्त्या गदापट्टिशशूलभृत्। घोरा नानाप्रहरणा भीमाक्षा भीमदर्शनाः।
निष्पेतुरुद्रदयिता महापारिषदास्तथा। रथमास्थाय स श्रीमांस्तप्तकाञ्चनकुण्डलः।
दानवैः संवृतः केशी युध्यते युधि दुर्ज्जयः। तस्य संग्रामशौण्डस्य संग्रामाग्रे युयुत्सतः।
निष्पेतुरुग्रवीर्य्यस्य ज्वालाः प्रविततामुखात्। स तु सिंहाञ्चितस्कन्धः शार्दूलसमविक्रमः। ११९८०
महाजलदसंकाशो मृदङ्गसमनिस्वनः। तस्य निष्पतमानस्य दानवैः संवृतस्य वै।
बभूव सुमहानादः क्षोभयंस्त्रिदिवं तथा। तेन शब्देन वित्रस्ता विदशानां महाचमूः।
द्रुमशैलप्रहरणा योद्धुमेवाभ्यवर्त्तत। तेषाञ्च देवदैत्यानां युयुत्सूनां परस्परं।

सन्निपात: सुतुमुलो रौद्रो लोकभयावह:। तेषां युद्धं महाघोरं संजज्ञे लोमहर्षणं।
देवदानवसंघानां प्राणांस्त्यक्त्वा महाहवे। सर्व्वे ह्यतिबला: शूरा: सर्व्वे पर्व्वतसन्निभा:। १२६८५
सर्व्वे सर्व्वास्त्रविद्वांस: सर्व्वे सर्व्वायुधोद्यता:। त्रिदशा दानवाश्चैव परस्परजिघांसव:।
तेषां विनदतां शब्द: संयुगे मेघनिस्वन:। शुश्रुवेऽतिमहाघोरस्त्रस्तस्थावरकम्पन:।
रेणुश्चारुणसङ्काश: सुभीम: समपद्यत। उद्धूतो देवदैत्यौघै: संरुरोध दिशो दश।
अन्योन्यं रजसा तेन कौशेयारुणपाण्डुना। संवृता बलरूपेण ददृशुर्नैव संयुगे।
न ध्वजो वा पताका वा न वर्म्म तुरगोऽपि वा। आयुधं स्यन्दनो वाऽपि ददृशे नैव सारथि:। १२६९०
स शब्दस्तुमुलस्तेषामन्योन्यमभिधावतां। श्रूयते तुमुले युद्धे न रूपाणि चकाशिरे।
दानवा एव संरब्धा दानवान् असुराहवे। त्रिदशांस्त्रिदशाश्चापि निजघ्नुस्तुमुले तदा।
ते परांश्च विनिघ्नन्त: स्वांश्च युद्धे सुरासुरा:। रुधिरार्द्रा तथा चक्रुर्मेदिनीं ते सुरासुरा:।
ततस्तु रुधिरौघेण संसिक्तं स्फुरितं रज:। शरीरशतसंकीर्णो बभूव स महारण:।
शूलशक्तिगदाखड्गपरिघप्रासतोमरै:। त्रिदशा दानवाश्चैव अघ्नन्नन्योन्यमाहवे। १२६९५
बाहुभि: परिघाकारैर्निघ्नन्त: पर्व्वतैस्तथा। रुद्रपारिषदा: सर्व्वे सूदयन्ति स्म दानवान्।
रुद्रपारिषदांश्चैव महाद्रुममहाश्मभि:। निजघ्नु: समतिक्रम्य शरैश्चासाद्य दानवा:।
एतस्मिन्नन्तरे क्रुद्ध: केशी दानवसत्तम:। संग्रामहर्षी घोर: स सैन्यानीकानि हर्षयन्।
तेषां परमसंक्रुद्धो वज्रमस्त्रमुदैरयत्। वज्रेणास्त्रेण दिव्येन दैत्येन सुमहात्मना।
महापारिषदा: सर्व्वे हता युधि सुदुर्ज्जया:। वज्रास्त्रपीडिता भ्रान्ता रुद्रपारिषदा युधि। १२७००
विप्रकीर्णद्रुमा: पेतु: शैला वज्रहता इव। एवं तत्तुमुलं युद्धमभवल्लोमहर्षणं।
केशिन: सह रुद्रेण तदद्भुतमिवाभवत्।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामनप्रादुर्भावे देवासुरयुद्धे ऊनपञ्चाशदधिकद्विशततमोऽध्याय:॥ २४९ ॥

॥ वैशम्पायन उवाच॥ वृषपर्व्वा तु दैत्येन्द्रो विस्मयाद्भुतविक्रमं। निष्कम्भं योधयामास लोहितार्कसमद्युति।
क्रोधमूर्च्छितवक्त्रस्तु धुन्वन् परमकार्मुकं। ध्वजिनीं प्रेक्ष्य शक्राणां सारथिं त्वरितोऽब्रवीत्।
अत्रैव तावत्त्वरितं नय मे सारथे रथं। एते हि देवा. सहिता घ्नन्ति न: समरे बलं। १२७०५
एतानिहन्तुमिच्छामि समरश्लाघिनो रणे। एतैर्हि दानवानीके कृतं छिद्रमिदं महत्।
तत: प्रजविताश्वेन रथेन रथिनाम्वर:। अरीनभ्यहनत् क्रुद्ध: शरजालैर्महासुर:।
न त्रातुं देवता: शक्ता: किं पुनर्योद्धुमाहवे। वृषपर्व्वेषुभिर्भिन्ना: सर्व्व एवाभिदुद्रुवु:।
तान्मृत्युवशमापन्नान् वैवस्वतवशङ्गतान्। समीक्ष्य भ्रातॄन्निष्कुम्भुरवतस्थे महाबल:।
दृष्ट्वा तं तत्र निष्कम्भं सर्व्वशस्त्रिदशोत्तमा:। समेत्य सहिता: सर्व्वे तं द्रुतं पर्य्यवारयन्। १२७१०
व्यवस्थितश्च निष्कम्भुं दृष्ट्वा ते त्रिदशोत्तमा:। बभूवुर्म्मुदवन्तो वै तत्रास्त्रबलशालिन:।
वृषपर्व्वा तु शैलाभं निष्कम्भुं समरे स्थितं। महेन्द्र इव धाराभि: शरवर्षैरवाकिरत्।

अचिन्तयित्वा बाणांस्तान् शरीरे पतितान् बहून् । स्मितपूर्व्वमुखो श्रीमान् सर्व्वैश्च स महाबलः ।
संप्रहस्य महातेजा वृषपर्व्वाणमाहवे । अभिदुद्राव वेगेन कम्पयन्निव मेदिनीं ।
तस्य त्वाधावमानस्य दीप्यमानस्य तेजसा । बभूव रूपं दुर्द्धर्षं दीप्तस्येव विभावसोः । १२०१५
रथं त्यक्त्वा स तु श्रीमान् सक्रोधः कमलेक्षणः । वृक्षमुत्पाटयामास महाशाखं महोच्छ्रयं ।
ततश्चिक्षेप तं वृक्षं निष्कम्भुर्वृषपर्व्वणः । तं दृष्ट्वा महावृक्षं पाणिनैकेन दानवः ।
विनद्य सुमहानादं भ्रामयित्वा च वीर्य्यवान् । सगजांश्च गजारोहान् सरथान् रथिनस्तदा ।
जघान दानवस्तेन शाखिना त्रिदशांस्तथा । तमन्तकमिव क्रुद्धं समरे प्राणहारिणं ।
वृषपर्व्वाणमासाद्य त्रिदशा विप्रदुद्रुवुः । तमापतन्तं संक्रुद्धं त्रिदशानां भयावहं । १२०२०
ददर्श वीरो निष्कम्भुश्चुकोप च ननाद च । स तत्र निशितैर्बाणैश्छिन्नशाखा मर्म्मभेदिभिः ।
निर्बिभेद महावीर्य्यो निष्कम्भुर्दानवाधिपं । दैत्यानामथ निष्कम्भुः शरशक्तिभिरर्द्दितः ।
विद्धः समरमूर्द्धस्थो रुधिरं प्रास्रवद्बहु । उद्विग्ना मुक्तकेशाश्च भग्नदर्पाः पराजिताः ।
श्वसन्तो दुद्रुवुः सर्व्वे भयाद्वै वृषपर्व्वणः । अन्योन्यं प्रसमन्युस्ते चासिता वृषपर्व्वणा ।
पृष्ठतस्त्राससंमूढाः प्रेक्षमाणा मुहुर्म्मुहुः । त्यक्तप्रहरणाः सर्व्वे कृतास्ते वृषपर्व्वणा । १२०२५
संग्रामे युद्धशौण्डेन तदा निष्कम्भुसैनिकाः । तत्रैव तु महावीर्य्यः प्रह्लादः कामसाहवे ।
योधयामास रक्ताक्षो हिरण्यकशिपोः सुतः । तस्य दानववीरस्य युद्धकाले जयक्रियाः ।
चकार त्वरया युक्तो भार्गवो विजयावहाः । कृताशनं तर्पयतो शान्त्यर्थांश्च समन्ततः ।
आज्यगन्धं प्रतिवहन् मारुतः सुरभिर्ववौ । स्रजश्च विविधाकारा जयार्थमभिमन्त्रिताः ।
प्रह्लादस्य शुभे मूर्द्ध्नि आबबन्धोशना स्वयं । कालेन बहु संग्रामे प्रयुद्धस्य महात्मनः । १२०३०
प्रह्लादस्यातिवीर्य्यस्य शान्तिमुक्के स भार्गवः । दश शिष्यसहस्राणि भार्गवस्य महात्मनः ।
यानि दानवमुख्यानां जेपुः शान्तिमनुत्तमां । अथर्व्वाणमथो दिव्यं ब्रह्मघं शत्रवोदितं ।
रणप्रवेशसदृशं कर्म्म वैजयिकं कृतं । ततः सर्व्वास्त्रविदांश्च समरेष्वनिवर्त्तिनः ।
विद्याव्रतसमायुक्ताः कृतस्वस्त्ययनक्रियाः । धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य दानवाः ।
बलिमभ्यर्च्य राजानं प्रह्लादं पर्य्यवारयन् । आस्थाय दिव्यं विपुलं रथं परमदारुणं । १२०३५
नानाप्रहरणाकीर्णं सचक्रमिव पर्व्वतं । तद्बभूव मुहूर्त्तेन स्वेच्छितास्फोटिताकुलं ।
मेरोः शिखरमापूर्णं यैरिवाम्बुधरागमे । ध्वजः पद्मपलाशानामामुच्य सुविभूषिताः ।
बाणवान् संपरिष्वज्य संपतन्ति रणप्रियाः । महायुधधरः श्रीमान् शुभवर्म्मधरः प्रभुः ।
सतनुत्रशिरस्त्राणो धन्वी परमदुर्ज्जयः । सिंहशार्दूलवृन्दानां महतां किङ्किणीकिनां ।
तस्य सैन्यसहस्राणि प्रयान्त्यपि महारणे । सैन्यपक्षगतास्तस्य रथाः परमदुर्ज्जयाः । १२०४०
सप्ततिर्व्वै महाभाग गजास्तावन्त एव च । मध्ये व्यूहोदरस्थस्तु कालनेमिर्महासुरः ।
धनुर्विस्फारयन् घोरं ननाद प्रजहास च । तस्मिन् शतसहस्राणि पुरो यान्ति महायुधेः ।

दानवानां बलवतां शक्रप्रतिमतेजसां। स समं वर्द्धमानस्तु पत्ताभ्यां त्रिवृतो महान्।
अभवद्दानवव्यूहो दुर्भेद्यः सर्व्वदैवतैः। ततः शतसहस्राणि दानवानां धनुर्भृतां।
नानाप्रहरणानाञ्च परिमाणं न विद्यते। गदापरिघनिस्त्रिंशशूलपट्टिशमुद्गरैः। १२०७५
प्रगृहीतैर्व्यराजन्त दानवाः पर्व्वता इव। गर्ज्जन्तो विनदन्तश्च विक्रोशन्तश्च दानवाः।
अयुध्यन्त महावीर्य्याः समरेष्वनिवर्त्तिनः। ततस्तूर्य्यसहस्राणां संजज्ञे निस्वनो महान्।
हयानाञ्च गजानाञ्च गर्ज्जतामतिवेगिनां। दुन्दुभीनाञ्च निर्घोषः पर्ज्जन्यनिनदोपमः।
शुश्रुवे शङ्खशब्दश्च पटहानाञ्च निस्वनः। तेन शङ्खनिनादेन भेरीतूर्य्यरवेण च।
निर्घोषेण रथानाञ्च क्षोभतीव नभस्तलं। सागरप्रतिमौघेन बलेन महता वृतः। १२०८०
प्रह्लादोऽयुध्यत क्रुद्धः कालान्तकयमोपमः। तस्य नादेन रौद्रेण घोरेणाप्रतिमौजसः।
विनेदुः सर्व्वभूतानि त्रैलोक्यविगतैः स्वरैः। अन्तरीक्षात् पपातोल्का वायुश्च परुषो ववौ।
वमन्त्यः पावकं घोरं शिवाश्चैव ववाशिरे। प्रह्लादस्तु महावीर्य्यः प्रहसन् युद्धदुर्म्मदः।
उवाच वचनं श्रीमांस्तत्कालसदृशमुत्तमं। अद्याहं दर्शयिष्यामि स्वबाहुबलमूर्ज्जितं।
अद्य मद्बाणनिहतान् देवान् द्रक्ष्यथ संयुगे। बान्धवा निहता येषां चिरवैरिभिराहवे। १२०८५
अद्य ते निर्व्वपिष्यन्ति शत्रुमांसानि दानवाः। इममद्य समुद्धूतं रेणुं समरमूर्द्धनि।
अहं संशमयिष्यामि शत्रुशोणितविस्रवैः। तिमिरौघहतार्कश्च सैन्यरेणुहतोऽतं।
आकाशं संपतिष्यन्ति खद्योता इव मे शराः। हृष्टाः संपरिमोदध्वं देवेभ्यस्त्यज्यतां भयं।
अद्याहं निहनिष्यामि कालेन्द्रं धनुषा रणे। तोषयिष्यामि राजानं बलिं बलवतां वरं।
त्रिदशान् समरे जित्वा बाणैरन्तकसन्निभैः। अक्षयाः सन्ति मे तूणाः शराश्चाशीविषोपमाः। १२०९०
स्थातुं मे पुरतः शक्ताः के रणे जीवितेप्सवः। हत्वा रिपुगणांस्तुष्टिरतुला गन्ता राजसु।
हतस्य त्रिदिवे वासो नास्ति युद्धसमा गतिः। न भयं पृष्ठतः कृत्वा रणे दानवसत्तमाः।
निहत्येमानरीन् सर्व्वान् मोदध्वं नन्दने वने। एवमुक्त्वा महासैन्यं प्रह्लादो दानवोत्तमः।
कालस्य समरे सैन्यं तरसा ऽमर्द्दतासुरः। सर्व्वास्त्रविच्च शूरश्च नित्यञ्चाप्यपराजितः।
युद्धेष्वभिमुखो नित्यं स्वबाहुबलदर्पितः। षष्टीरथसहस्राणि विविधायुधधारिणां। १२०९५
प्रह्लादस्यातिवीर्य्यस्य ये तस्य तनया जिताः। तैश्च क्रतुशतैरिष्टं विपुलैराप्तदक्षिणैः।
शान्ता धर्म्मपरा नित्यं नित्यं व्रतपरायणाः। दातारः प्रियवक्तारो वक्तारः साधवस्तु।
स्वदारनिरता दान्ता ब्रह्मण्याः सत्यसङ्गराः। यष्टारः क्रतुभिर्नित्यं नित्यं स्वाध्ययने रताः।
रथस्थकुशलाः सर्व्वे सर्व्वशो दृढविक्रमाः। मत्तवारणविक्रान्ताः शत्रुसैन्यविमर्द्दकाः।
दंरथन्तः पराक्षेपैः सुघोरान् वातरंहसान्। युद्धोत्सुकधियो नित्यं क्रोधरक्तितलोचनाः। १२१००
सन्दष्टौष्ठपुटा दैत्या विनेदुर्भीमविक्रमाः। पोथिताश्लिष्टितरवैर्द्धर्षयन्तः परस्परं।
रेणुशङ्खरवैश्चैव सिंहनादैश्च पुष्कलैः। आहुत्याहूय सहसा रणे समरमेकशः।

तालमात्राणि चापानि विकृष्य सुमहाभुजाः । ग्रसमानास्सहसा दनवा वाणपाणयः ।
सुरासुरैरप्यजितं योधयन्ति रणेऽन्तकं । प्रतप्तहेमाभरणाः सर्व्वे ते श्वेतवाससः ।
दानवा मानिनः सर्व्वे सर्व्वे स्वर्गाभिकाङ्क्षिणः । सर्व्वे जयैषिणो वीराः सर्व्वे शत्रुवधोद्यताः । ११०७५
शुशुभे सा चमूर्दृप्ता पताकाध्वजमालिनी । गजाश्वरथसम्बाधा स्वर्गमार्गाभिकाङ्क्षिणी ।
ततः कालस्तु निर्यातो भीमो भीमपराक्रमः । विनदन् सुमहाकायो व्याधिभिर्व्वहुभिर्वृतः ।
ददर्श महतीं सेनां दानवानां बलीयसां । अभिसंजातहर्षाणां कालं समभिगर्ज्जतां ।
आपतन्तं तदाऽनीकं दानवानां तरस्विनां । प्रतिलोमं चकाराशु व्याधिभिः सहितोऽन्तकः ।
प्रविश्य ध्वजिनीश्चैषां घातयामास वीर्य्यवान् । कालो रुधिररक्ताक्षः खेनानीकेन संवृतः । ११०८०
प्रह्लादबलमत्युग्रं प्रह्लादञ्च महासुरं । आजघान रणे कालो दण्डमुद्गरपट्टिशैः ।
शरशक्त्यृष्टिखड्गांश्च शूलानि मुषलानि च । गदाश्च परिघाश्चैव विचित्राश्च परश्वधाः ।
धनूंषि च विचित्राणि शतघ्न्यश्च स्थिरायसाः । पात्यन्ते व्याधिभिर्युद्धे दानवानां चमूमुखे ।
बहवो व्याधयो युद्धे बहूनसुरपुङ्गवान् । व्याधीनपि च दैत्योघा निजघ्नुर्व्वहवो बहून् ।
शूलेन मथिताः केचित् केचिच्छिन्नाः परश्वधैः । परिघैराहताः केचित् केचिच्च परमायुधैः । ११०८५
केचिद्विधाकृताः खड्गैः स्फुरन्तः पतिता भुवि । व्याधयो दानवैरेवं नानाशस्त्रैर्विदारिताः ।
ते चापि व्याधिभिः सर्व्वे विविधैरायुधोत्तमैः । खड्गैश्च विमलैस्तीक्ष्णैः प्रासतोमरमुद्गरैः ।
विभिन्ना दानवाः शूलैर्निकृत्ताश्च परश्वधैः । मुद्गरैः पट्टिशैश्चैव व्याधिभिश्च हता भृशं ।
हताः शस्त्रैरनेकैश्च मुष्टिभिश्च हता भृशं । वेमुः शोणितमत्युग्रं विस्फारितनेत्रणाः ।
आर्त्तस्वरश्च नदतां सिंहनादश्च गर्ज्जतां । बभूव तुमुलः शब्दः संग्रामे लोमहर्षणः । ११०९०
मुष्टिभिश्चोत्तमाङ्गानि तलैर्गात्राणि चाहतन् । सादितानि महीं जग्मुश्छिन्नतामेव संयुगे ।
वस्त्रफेना ध्वजावर्त्ता छिन्नबाहुमहोरगा । शूलशक्तिमहामत्स्या चापग्राहसमाकुला ।
रथैश्चोपलसम्बाधा ध्वजद्रुमसमावृता । सशब्दघोरविस्तारा लोहितोदाऽभवन्नदी ।
स्वधनुःशक्रधनुषौ काञ्चनाङ्गदविद्युतौ । तौ दैत्यकालजलदौ शरधारां ववर्षतुः ।
तौ महामेघसङ्काशौ रथनागगतौ तदा । बभूवतुरतिक्रुद्धौ साम्बुगर्भाविवाम्बुदौ । ११०९५
तप्तकाञ्चनसन्नाहौ दिव्यहारविभूषितौ । तौ विरेजतुरायत्तौ सूर्य्यवैश्वानराविव ।
तौ महाचलसंकाशावन्योन्यस्य चमूं तदा । वज्राशनिसमस्पर्शैर्बाणैर्ज्जघ्नतुराहवे ।
परस्परं समासाद्य तयोर्युधि दुरासदे । नाशंसन्त तदा योधा जीवितान्यपि संयुगे ।
शरनिर्भिन्नसर्व्वाङ्गा युधि प्रक्षीणजीविताः । निपेतुर्योधमुख्यास्तु रुधिरोक्षितवक्षसः ।
पतितैर्निपतद्भिश्च पात्यमानैश्च संयुगे । बभूव भूः समाकीर्णा योधैरुद्गतजीवितैः । १११००
न स्पृशतोः शरान् घोरान् न च सन्दधतोस्तयोः । अन्तरं ददृशे कश्चित् प्रयत्नादपि संयुगे ।
लघुत्वाच्च महाबाहू युद्धशौण्डौ महाबलौ । मण्डलीकृतचापौ तु सहसैव बभूवतुः ।

प्रह्रादस्य तु बाणौघैर्द्रावितान्तकवाहिनी । तुद्यमाना बलवता वायुनेवाभ्रमण्डलं ।
हतदर्पन्तु विज्ञाय प्रह्रादः कालमाहवे । अपयातश्च समरादिवसं संप्रतक्र्य तं ।
मत्वा वशगतश्चैव प्रह्रादो युद्धदुर्मदः । तश्चैवान्यां चमूं भूयः प्रामर्द्दत महासुरः । ११८०५
कालप्रह्रादयोर्युद्धमभवद्यादृशं तदा । तादृशं सर्व्वभूतेषु न भूतं न भविष्यति ।
एवमद्भुतवीर्य्यौजा महारणकृतश्रमः । प्रह्रादः परिहृष्टोऽथ कालश्चापहृतो रणात् ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे पञ्चाशदधिकद्विशततोऽध्यायः ॥ २५० ॥
॥ वैशम्पायन उवाच ॥ अनुह्रादो धनाध्यक्षं प्रह्रादस्यानुजो बली । समेत्यो योधयामास क्षोभयन् यक्षवाहिनीं ।
महता च बलौघेन अनुह्रादः सुरोत्तमं । अर्द्दयामास संक्रुद्धो धनाध्यक्षं प्रतापवान् ।
अम्लयमाणश्छिदाशानाहवश्चानुदायुधान् । चकार कदनं घोरं धनुष्पाणिर्महासुरः । ११८१०
आवर्त्त इव संजज्ञे बलस्य महतो महान् । क्षुभितस्याप्रमेयस्य सागरस्येव संभ्रमः ।
त्रिदशानां शरीरैश्च दानवानाञ्च मेदिनी । बभूव निचिता सर्व्वा पर्व्वतैरिव संवृता ।
मेरुपृष्ठन्तु रक्तेन रञ्जितं संप्रकाशते । सर्व्वतो माधवे मासि पुष्पितैरिव किंशुकैः ।
हतैर्वीरैर्गजैरश्वैः प्रावर्त्तत महानदी । शोणितोदा महाघोरा यमराष्ट्रविवर्द्धिनी ।
शक्तमेदोमहापङ्का विप्रकीर्णान्त्रशैवला । छिन्नकायशिरोमीना अङ्गावयवशर्करा । ११८१५
गृध्रहंसगणाकीर्णा कङ्कसारसनादिनी । वसाफेनसमाकीर्णा प्रोतकुण्डलितस्तना ।
तां कापुरुषदुर्द्धर्षां युद्धभूमिमहानदीं । नदीमिवातपापाये हंससारससेविताम् ।
त्रिदशा दानवाश्चैव तेरुस्तां दुस्तरां तदा । यथा पद्मरजोध्वस्तां नलिनीं गजयूथपाः ।
ततः सृजन्तं बाणौघाननुह्रादं रणे स्थितं । ददर्श तरसा देवो निघ्नन्तं यक्षवाहिनीं ।
क्रुद्धस्ततो दैत्यबलं सूदयामास वित्तपः । विक्षिपन्निव खे वायुर्महाभ्रपटलं बलात् । ११८२०
समीक्ष्य तुमुलं युद्धमनुह्रादश्चमूपतिः । रथेनादित्यवर्णेन कुवेरमभिदुद्रुवे ।
स धनुर्धन्विनां श्रेष्ठो विकृष्य रणमूर्द्धनि । उत्ससर्ज्ज शितान् बाणान् वित्तेशस्य महात्मनः ।
कुवेरं प्राप्य ते बाणा निर्भिद्य सुसमाहिताः । अपरान् पृष्ठतो जघ्नुर्य्यक्षान् यत्तरान् समान् ।
देवः शरैरभिहतो निशितैर्ज्वलनोपमैः । अनुह्रादं प्रत्युदियात् संक्रुद्धः परमाहवे ।
ततो वैश्रवणो राजा क्रुद्धो यक्षगणैः सह । ववर्ष शरवर्षाणि दानवान् प्रति वीर्य्यवान् । ११८२५
तद्यथा शारदं वर्षं गोवृषः शीघ्रमागतं । अपारयन् वारयितुं प्रतिमुञ्चति मौलिनः ।
एवमेव कुवेरस्य शरवर्षं महासुरः । निमीलिताक्षः सहसा दैत्योऽसहत दारुणं ।
रोषितः शरवर्षेण धनदेन महाबलः । इन्द्रकेतुप्रतीकाशममितोऽग्रहीत द्रुमं ।
प्रवृद्धशाखाविटपं तरुणाङ्कुरपल्लवं । उत्पाट्य कुपितो दैत्यस्तं फलसमाकुलं ।
निजघान हयश्रेष्ठान् कुवेरस्य महाजवान् । तस्य कर्म्म महाघोरं दृष्ट्वा सर्व्वे महासुराः । ११८३०
सिंहनादं नदन्ति स्म अनुह्रादप्रहर्षिताः । तयोः सुतुमुलं युद्धं संजज्ञे देवदैत्ययोः ।

ततस्तौ क्रोधरक्ताक्षावन्योन्यवधकाङ्क्षिणौ । अन्योन्यं विविधैः शस्त्रैर्घोरैर्जघ्नतुराहवे ।
चिच्छिदुर्दानवा युद्धे मथिताः प्राणवत्तरैः । दानवैश्छिद्यमानाश्चापि क्रुद्धैर्भुवि निपातिताः ।
दानवास्त्वथ संक्रुद्धाश्छिद्यमाना निशितैः शरैः । विव्यधुर्व्वह्निसंकाशैः कङ्कपत्रैरजिह्मगैः ।
विदार्य्यमाणा दैत्यौघैश्छिद्यमानास्तु महाबलैः । अमर्षिततरा भूयस्तकुः कर्माण्यभीतवत् । ११८३५
ते गदाभिः सुभीमाभिः पट्टिशैः शूलमुद्गरैः । परिघैश्च सुतीक्ष्णाग्रैर्दानवाः पीडिताः शरैः ।
शरनिर्भिन्नगात्राश्च खड्गविच्छिन्नवक्षसः । अपतंस्ते शिलाश्चैव द्रुमांश्चासुरसत्तमाः ।
ते भीमवेगा दितिजा नर्द्दमानाः पुनः पुनः । ममन्थुश्छिद्यमानं वीर्य्याच्छतशोऽथ सहस्रशः ।
ततः सुतुमुलं युद्धं तेषां तत्समवर्त्तत । शिलाभिर्विपुलाभिश्च वज्रैश्चैव च पादपैः ।
परिघैः पट्टिशैश्चैव भिन्दिपालैः परश्वधैः । केचिच्छिन्नशिरसः केचिच्च विदलीकृताः । ११८४०
केचिद्विनिहता भूमौ रुधिरार्द्राः सुरासुराः । केचिद्विद्राविता नष्टाः परस्परवधार्द्दिताः ।
विभिन्नहृदयाः केचिच्छिन्नपादाश्च शेरते । विदारिताश्च शूलैश्च केचित्तत्र गतासवः ।
तद्युद्धं सुमहद्घोरं देवदानवसंकुलं । बभूव शस्त्रतुमुलं शिलापादपसंकुलं ।
धनुर्ज्यातन्त्रिमधुरं हिक्कातालसमन्वितं । आर्त्तस्तनितनिर्घोषं युद्धगान्धर्वमाबभौ ।
कुवेरस्तु धनुष्पाणिर्दानवानामुरसि । द्विषो विद्रावयामास संक्रुद्धः शरवृष्टिभिः । ११८४५
कुवेरेणार्द्दितं सैन्यं विद्रुतं प्रेक्ष्य दानवः । अभ्यद्रवदनुह्रादः प्रगृह्य विपुलां शिलां ।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः । शिलां तां पातयामास कुवेरस्य रथोत्तमे ।
आपतन्तीं शिलां दृष्ट्वा गदापाणिर्धनाधिपः । रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत ।
सचक्रकूवरहयं सध्वजं सशरासनं । भंक्त्वा रथोत्तमं तस्य निपपात शिला भुवि ।
प्रमथ्य तु कुवेरस्य प्रह्रादस्यानुजो रथं । सुराणां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः । ११८५०
प्रभिन्नशिरसो भग्नाश्छिद्यमाः शोणितोक्षिताः । द्रुमैः प्रमथिताश्चाश्च निपेतुर्द्धरणीतले ।
विद्राव्य विपुलं सैन्यमनुह्रादो महासुरः । गिरिशृङ्गं महद्गृह्य कुवेरमभिदुद्रुवे ।
तमापतन्तं धनदो गदामुद्यम्य वीर्य्यवान् । विनर्द्दमाह्वयामास दानवेन्द्रं महाबलः ।
तस्य क्रुद्धस्य संक्रुद्धो गदां तां वज्रकण्टकां । न्यपातयत वित्तेशो दानवस्योरसि प्रभुः ।
दैत्यस्तु क्रोधरक्ताक्षस्तं प्रहारमचिन्तयन् । वित्तेशस्योपरि तदा गिरिशृङ्गमपातयत् । ११८५५
स विह्वलितसर्व्वाङ्गो गिरिशृङ्गेण ताडितः । पपात सहसा भूमौ स पिङ्गाक्षो महाबलः ।
रराज पतितो भूमौ विकीर्ण इव पर्व्वतः । वित्तेशं विह्वलं दृष्ट्वा सर्व्वे ते यक्षराक्षसाः ।
परिवार्य्य महात्मानं ररक्षुर्भीमविक्रमाः । मुहूर्त्तं विह्वलो भूत्वा प्रभुर्विश्रवसः सुतः ।
उत्थितः सहसा देवः पिङ्गलाक्षो महाबलः । ननाद च महानादं त्रैलोक्यमभिनादयन् ।
जनयन्निव निर्घोषं विधमन्निव पर्व्वतान् । तमवध्यन्तु विज्ञाय निहतं पुनरुत्थितं । ११८६०
भेत्स्य पिङ्गाक्षमायान्तं दानवा विप्रदुद्रुवुः । तांस्तु विद्रवतो दृष्ट्वा अनुह्रादोऽसुरोऽब्रवीत् ।

कालनेमिं सुनेमिञ्च महानेमिञ्च दानवं। आत्मानञ्चैव वीर्य्येण विख्याताभिजनं तथा।
क गच्छथ भयत्रस्ताः प्राकृता इव दानवाः। निवर्त्तध्वं महावीर्य्याः किं प्राणान् परिरक्षथ।
नालं युद्धाय यद्योऽयं महतीयं विभीषिका। एतां समुत्थितामद्य दानवानां विभीषिकां।
विक्रम्य विधमिष्यामि निवर्त्तध्वं महासुराः। तेऽसुराः संनिवृत्याथ समदा इव कुञ्जराः। ११८६५
निजघ्नुः परमक्रुद्धा देवसैन्यं महासुराः। क्षीणप्रहरणाः केचिन्मेघगम्भीरनिस्वनाः।
दर्पोत्कटा भुजैरेव संप्रहारं प्रचक्रिरे। प्रांशुभिश्चैव काष्ठैश्च शिलाभिश्च महाबलाः।
बाहुभिश्च तथाऽन्योन्यमाक्षिपन्ति स्म वेगिताः। मुष्टिभिश्च तलैश्चैव नखपातैर्महाबलाः।
पादपैश्च महाशाखैरयुध्यन्त महारणे। अनुह्रादस्तु संक्रुद्धो देवतानां महाचमूं।
ममन्थ परमायस्तो वनान्यग्निरिवोत्थितः। रुधिरार्द्रास्तु बहवः शेरते योधसत्तमाः। ११८७०
निकृत्ताः पतिता भूमौ ताम्रपुष्पा इव द्रुमाः। अनुह्रादस्य विक्रान्तो देवश्चाशीविषोपमान्।
युध्यमानस्य समरे व्यसृजन्निशितान् शरान्। धनाधिपेन विद्धस्य अनुह्रादस्य संयुगे।
अङ्गारमिश्राः क्रुद्धस्य मुखान्निश्चेरुरर्च्चिषः। अथ बाणसहस्रेण विनिघ्नं दानवोत्तमः।
विव्याध समरे क्रुद्धो दण्डपाणिरिवान्तकः। कुबेरस्तु शरैर्भिन्नः समन्तात् क्षतशोणितः।
रुधिरं परिसुस्राव गिरिः प्रस्रवणैरिव। लब्ध्वा स तु पुनः संज्ञां रोषरक्तेक्षणः सुरः। ११८७५
गदामथ समासाद्य भीमां भीमपराक्रमः। चिक्षेप दैत्यमुद्दिश्य बलवान् क्रोधमूर्च्छितः।
अप्राप्तामन्तरे सोऽथ तां गदां गदयाऽसुरः। बभञ्ज विनदन् क्रुद्धस्तदाश्चर्य्यमभूत्तदा।
प्रगृह्य तु गदां भूयो अभिदुद्राव दानवं। तमापतन्तं दृष्ट्वैव अनुह्रादो महाबलः।
गिरिशृङ्गमथोत्पाट्य कैलासाचलसन्निभं। धनाधिपं प्रदुद्राव व्यादितास्य इवान्तकः।
तमन्तकमिवायान्तमजय्यं सकलैः सुरैः। ग्रसन्तमिव दैतेयं त्रैलोक्यमखिलं तदा। ११८८०
तमालोक्य तथारूपं धनाध्यक्षो रणं भयात्। अपहाय ययौ तत्र यत्र देवः शचीपतिः।
तस्य चातिमहत् कर्म्म दृष्ट्वा वित्तपतिस्तदा। जगाम भयसंत्रस्तो यत्र देवः शचीपतिः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे एकपञ्चाशदधिकद्विशततमोऽध्यायः॥ २५१ ॥

॥ वैशम्पायन उवाच ॥ विप्रचित्तिस्तु वरुणं दैत्यानामधिपोऽव्ययः। जघानेषुगणैः क्रुद्धो दीप्तैरिव महोरगैः।
संदह्यमानो दैत्येन दीप्तैः शरगभस्तिभिः। नाभ्यजानत कर्त्तव्यं संग्रामे स जलेश्वरः।
सर्व्वलोकेश्वरस्यैव परमेष्ठी प्रजापतिः। नाशक्नोदमनः स्थातुं विप्रचित्तेर्जलाधिपः। ११८८५
वज्रो नाम महाव्यूहो निर्भयः सर्व्वतोमुखः। संव्यूह्य प्रत्ययुध्यन्त दानवा देववाहिनीं।
अग्निज्वालासमन्ताच्च रविमण्डलसन्निभं। मुखमाभाति दैत्यस्य विप्रचित्तेर्महात्मनः।
वरुणस्तु महातेजा विप्रचित्तिं महासुरं। प्रदहन्निव तेजोभिर्निर्जिगीषुः समभ्यवैक्षत।
स्रग्दाममालाभरणं दन्तपद्मादृतान्तरं। जग्राह परिघं दैत्यः कैलासशिखरोपमं।
पिनद्धं काञ्चनैः पट्टैर्हेममालिनमायसं। यमदण्डोपमं घोरं दैत्यानां भयनाशनं। ११८९०

भ्रामयामास तं क्रुद्धो महाशक्रध्वजोपमं । विननाद निरुत्साहो विप्रचित्तिर्महासुरः ।
स कण्ठस्थेन निष्केण भुजस्थैरपि चाङ्गदैः । कुण्डलाभ्यां विचित्राभ्यां स्रजा चैव विचित्रया ।
दानवो भूषणैर्भाति परिघेणायसेन च । यथेन्द्रधनुषा मेघः सविद्युत्स्तनयित्नुमान् ।
प्रस्फोट्य परिघाग्रेण वायुस्कन्धं महात्मनः । प्रजज्वाल सधूमार्च्चिः सङ्घर्षजनितोऽनलः ।
विद्याधरगणैः सार्द्धं गन्धर्व्वनगरैरपि । सह चैवामरावत्या सिद्धलोकैस्तथा सह । ११८९५
ग्रहनक्षत्ररचितं सार्कचन्द्रविभूषितं । दैत्येन्द्रपरिघोद्धूतं भ्रमतीव नभस्तलं ।
दुरासदः स संजज्ञे परिघाभरणः प्रभुः । सुरेन्धनोऽसुरेन्द्राग्निर्युगान्ताग्निरिवोत्थितः ।
त्रिदशा वरुणश्चैव न शेकुः स्पन्दितुं भयात् । तथा वीक्षितभयत्रस्तः कौशिको वासवः प्रभुः ।
भास्करप्रतिमं घोरं परिघं रौद्रदर्शनं । पातयामास सेनायां जलेशस्य स दानवः ।
पतता तेन संग्रामे जलेशस्य महात्मनः । भूतानां दशसाहस्रं परिघेण समाहतं । ११९००
तेषां गात्राणि चासाद्य व्यशीर्य्यत सहस्रधा । विशीर्य्यमाणो विबभावुल्कापातमिवाम्बरे ।
भूयश्चैनं तदा भ्राम्य वरुणायाभ्यपातयत् । पात्यमाने तदा तस्मिन् शरीरे वरुणस्य च ।
स भिन्नः परिघो घोरो देवगात्रे व्यशीर्य्यत । शीर्य्यमाणस्य चूर्णानि खद्योता इव चाम्बरे ।
स तु तेन प्रहारेण न चचाल जलाधिपः । परिघेणाहतः शैलो यथा भूमिचलेऽचलः ।
स्वसैन्येष्वथ भग्नेषु भिन्नदेहेषु चाहवे । मुहूर्त्तमगमत् क्षोभमपाम्पतिरमर्षणः । ११९०५
सोऽमर्षवशमापन्नो वरुणोऽमितविक्रमः । सर्व्वसंहारमकरोत् स्वपक्षोऽरिमर्द्दनः ।
स सागरैश्चतुर्भिश्च वृतो दीप्तैश्च पन्नगैः । शङ्खमुक्तामणिनिभो बिभ्रत्तोयमयं वपुः ।
पाण्डरोद्धूतवसनो नानारत्नविताङ्गदः । वरुणः पाशधृक् श्रीमान् कूर्म्ममीनसमाकुलः ।
वरुणस्तु तदा क्रुद्धस्तान्निरीक्ष्य स्वसैनिकान् । उवाच दृष्टा युध्यध्वं दानवानां जिघांसया ।
अहमेनं हनिष्यामि भयं मुक्त्वा तु युध्यत । ततस्ते पन्नगाः सर्व्वे महार्णवसमाश्रयाः । ११९१०
जघ्नुर्दैत्यान् रणमुखे नर्द्दन्तो जयगृद्धिनः । ते तु नालीकनाराचैर्गदाभिर्मुषलैस्तथा ।
अभ्यघ्नन्दानवान्घोरान्मुदिता वरुणानुगाः । विप्रचित्तिस्तु संक्रुद्धो महाबलपराक्रमः ।
पन्नगाणां शरीराणि व्यधमद्रणमूर्द्धनि । गारुडेन च सोऽस्त्रेण पन्नगान्दानवोत्तमः ।
घातयामास समरे गारुडैः पन्नगाशनैः । स शरैः स्वर्णपुङ्खाभैः शातकुम्भविभूषितैः ।
पन्नगान् समरे वीरः प्रममाथ सुदुर्ज्जयः । ते भिन्नगात्राः समरे पन्नगाः शरपीडिताः । ११९१५
पेतुर्म्मथितसर्व्वाङ्गा गजा इव महागजैः । तं तपन्तमिवादित्यं दीप्तैर्ब्बाणगभस्तिभिः ।
अभ्यधावत संक्रुद्धः समरे वरुणः प्रभुः । ततस्ते दानवास्तत्र भिन्नदेहाः सहस्रशः ।
व्यथिता विद्रवन्ति स्म दिशो दश विचेतसः । इन्द्रस्यार्थे पराक्रम्य वरुणस्त्यक्तजीवितः ।
विमर्द्दमानो युयुधे समरे पाशभृद्धरः । वारुणाः पर्व्वताभैश्च मुष्टिभिश्च बलोत्कटाः ।
अभ्यवर्षन्त समरे विप्रचित्तिं महासुरं । तांस्तत्रैव शिलाभिश्च प्रहरन्तो बलोत्कटान् । ११९२०

छपोहत महातेजा विप्रचित्तिर्महासुरः। ततः पावकसङ्काशैः प्रयुक्तैः श्रोणगामिभिः ।
वरुणस्य महावेगान् बिभेद समरे हयान्। कर्म्मणा तेन महता विप्रचित्तेर्महात्मनः ।
अग्नेराज्याहुतस्येव तेजः समभिवर्द्धत । स शरैः सूर्य्यसङ्काशैः सुयुक्तैः श्रोणगामिभिः ।
वारुणीं तां महासेनां निर्ममन्थ महाबलः । योधास्तां सायकाक्रान्तां शरजालेन मोहितां ।
शूलप्रासर्ष्टिभिश्चास्य चकार रुधिरोक्षितां । अभिद्रुतस्तु दैत्येन सर्व्वैन्यः सलिलाधिपः । ११८१५
महेन्द्रं शरणं प्राप्तो विप्रचित्तिभयार्द्दितः ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

॥ वैशम्पायन उवाच ॥ पराजयन्तु दैत्यानां दृष्ट्वाऽग्निस्त्रिदशोत्तमः। चकार बुद्धिं दैत्यानां वधे ब्रह्मर्षिभिः स्तुतः ।
स्वयम्प्रभायाः शाण्डिल्या यः पुत्रो हव्यवाहनः । हिरण्यरेताः पिङ्गाक्षो देवदूतो हुताशनः ।
लोहितो लोहितग्रीवो हर्त्ता दाता हविः कविः । पावको विश्वभुग्देवः सर्व्वदेवाननः प्रभुः ।
शुक्रात्मा सुवर्चस्कः सहस्रार्चिर्विभावसुः । कृष्णवर्त्मा चित्रभानुर्देवाग्र्यश्चित्र एकराट् । ११८२०
लोकसाक्षीऽद्दिजश्रेष्ठप्रियोऽर्च्चिष्मान् वषट्कृतः । हव्यभक्षः शमीगर्भः खयोनिः सर्व्वकर्म्मकृत् ।
पावनः सर्व्वभूतानां त्रिदशानां तपोनिधिः । शमनः सर्व्वपापानां सलिलानन्तनूनपात् ।
प्रदक्षिणावर्त्तशिखः शुचिरोमा महाकृतिः । हव्यभुग्भूतभव्येशो हव्यभागहरो हरिः ।
सोमपश्च महातेजा भूतेशः सर्व्वभूतपात् । अग्र्यः पावको भूतिर्भूतात्मा वै स्वधाधिपः ।
स्वाहापतिः सामगीतः सोमपूताशनोऽर्च्चिष्कृत् । देवदेवो महाक्रोधो रुद्रात्मा ब्रह्मसंस्तुतः । ११८२५
लोहिताश्वं वायुचक्रं रथमास्थाय भूतकृत् । धूमकेतुर्धूमशिखो नीलवासाः सुरोत्तमः ।
उद्यम्य दिव्यमाग्नेयमस्त्रं देवो रणे महत् । दानवानां सहस्राणि प्रयुतान्यर्वुदानि च ।
समरे विजयाकाङ्क्षी ददाहानिलसारथिः । प्राणो यः सर्व्वभूतानां देहे तिष्ठति पञ्चधा ।
यन्ता यस्य हुताशस्य सखा च प्रभुरीश्वरः । प्रभञ्जनो यो लोकानां युगान्ते सर्व्वनाशनः ।
सप्तस्वरगता यस्य योनिर्गीर्भिरुदीर्य्यते । यो ह्याकाशमयो देवो दूरगः शब्दसंभवः । ११८३०
यः कर्त्ता च विकर्त्ता च गतिर्गन्तिमतां प्रभुः । वेदकर्त्ता समो लोके ब्रह्मणा यः सनातनः
अमूर्त्तिमन्तं यं प्राहुर्महाभूतं महत्तरं । सोऽग्निं समीरयामास शमीगर्भं समीरणः ।
त्रिदिवारोहिभिर्ज्वालैर्जृम्भमाणो दिशो दश । दानवानामभावाय युगान्ताग्निरिवाभवत् ।
मेदोमज्जामहापङ्कां केशशैवलशाद्वलां । योधशीर्षोपलवतीं हतद्विपतटोत्कटां ।
शोणितोदां रणे दृष्ट्वा संग्रामसरितं विभुः । वह्निः प्रस्कन्दयामास दैत्यानां भयवर्द्धनः । ११८३५
ततोऽग्निर्दितिजान् सर्व्वान् प्रह्लादप्रमुखांस्तदा । पराजयामास विभुः क्रोशमानान्महाहवे ।
केचित्प्रदीप्तैर्मुकुटैः केचिद्दीप्तैः शिरोरुहैः । केचिद्गात्रैः प्रदीप्तैश्च केचिद्दीप्तैर्भुजाननैः ।
केचित् प्रदीप्तैरुरुभिः केचिच्चक्षैर्ध्वजैरथैः । असुरास्तत्र दृश्यन्ते प्रदीप्तेनाग्निना हताः ।
असुरा भयवित्रस्ता विद्रुताश्च दिशो दश । त्यक्तायुधानि सर्व्वाणि विप्रकीर्णरथध्वजाः ।

प्रयान्ति समरे भीताः पावकेन पराजिताः । न च पश्यन्ति वह्निं ते संप्रदीप्तं महाहवे । ११८५०
दिशः खं गाश्च मेघांश्च दीप्तान् पश्यन्ति दानवाः । ध्रुवं स्वयम्भुवा सृष्टो युगान्तस्तोययोनिना ।
इत्येवं दानवाः सर्व्वे मेनिरे भयपीडिताः । मयश्च शम्बरश्चैव महामायाधरावुभौ ।
पार्ज्जन्यवारुणी माये व्यधत्तां वारिविस्तरे । ताभ्यां वह्निः स मायाभ्यां सिच्यमानः समन्ततः ।
तोयौघैः पर्व्वतनिभैर्म्मेदुरैर्भिरभवद्रणे । शाम्यमानन्तु समरे पावकं दैत्यनाशनं ।
बृहत्कीर्त्तिर्महातेजा वह्निमाह बृहस्पतिः । ११८५५
॥ बृहस्पतिरुवाच ॥ हिरण्यरेतः शुचिश्च ज्वलनाच्युत सर्व्वभुक् । सप्तजिह्वानल स्वाम लोहिताश्व महाबल ।
आत्मा वायुस्तव विभो शरीरममृत वीरुधः । योनिरापश्च ते प्रोक्ता योनिस्त्वमसि चाम्भसः ।
ऊर्द्ध्वञ्चाधश्च गच्छन्ति सञ्चरन्ति च पार्श्वतः । अर्च्चिषस्ते महाभाग सर्व्वतः प्रभवन्ति च ।
त्वमेवाग्ने सर्व्वमसि त्वयि सर्व्वमिदं जगत् । त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ।
त्वमग्ने हव्यवाडेकस्त्वमेव परमं हविः । यजन्ते च सदा सन्तस्त्वामेव परमाध्वरे । ११८६०
त्वमन्नं प्राणिनां भुङ्क्ते जग्धपीताश्रितं विभो । त्वत्तः प्रवृत्तो विजयस्त्वयि लोकाः प्रतिष्ठिताः ।
सृष्ट्वा लोकांस्त्रीनिमान् हव्यवाह प्राप्ते काले त्वं पचस्येव दीप्तः । त्वमेवैकस्तपसे जातवेदो नान्यस्तप्ता विद्यते गोषु देव ।
वृषाकपिः सिन्धुपतिस्त्वमग्ने महामखेष्वध्वरहरस्त्वमेव । विश्वस्य भूतिस्त्वमसि प्रसूतिस्त्वञ्च प्रतिष्ठा भगवन् प्रजानां ।
सृजस्यपो रश्मिभिर्जातवेदस्त्वमोषधीरोषधीनां रसांश्च । विश्वं त्वमादाय युगान्तकाले स्रष्टा भवस्यानल सर्गकाले ।
त्वमग्ने सर्व्वभूतानां योनिर्व्वेदेषु गीयसे । त्वया देवहितार्थाय निहता दानवा रणे । ११८६५
स्वयोनिस्ते महातेजस्तोयं मखशतार्च्चितं । तत्स्वयोनिं समासाद्य किं विषीदसि पावक ।
त्रायस्व समरे देवान् दैत्येभ्यः सुरसत्तम । युगान्ताभामरारिघ्न विश्वकर्म्मन् सहस्रभुक् ।
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन् हुताशन ।
इतिश्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे अग्निस्तवे त्रिपञ्चाशदधिकद्विशततोऽध्यायः ॥ २५३ ॥
॥ वैशम्पायन उवाच ॥ बृहस्पतेस्तु वचनं श्रुत्वाऽग्निः सत्यमीरितं । भूयः प्रजज्वाल रणे हविषेव महामखे ।
हतास्तु माया दैत्यानां प्रदीप्तेनाग्निना रणे । हतमाया हतबला बलिं ते समुपस्थिताः । ११८७०
पराजितेषु दैत्येषु वह्निनाऽद्भुतकर्म्मणा । प्रह्लादस्तु परं वाक्यमाह दैत्यपतिं बलिं ।
भवानाग्निश्च वायुश्च भास्करः शशिनं प्रभो । नक्षत्राणि दिशो व्योम भूश्च दानवसत्तम ।
भविष्यश्चैव भूतश्च भवश्चासुरसत्तम । दत्तं हि ते भगवता वरदेन स्वयम्भुवा ।
इन्द्रत्वञ्चामरत्वञ्च युद्धे चाप्यपराजयः । ईशित्वञ्च वशित्वञ्च बलञ्चैवामितं तव ।
सर्व्वभूतेश्वरत्वञ्च प्रभुत्वञ्च सदा तव । महायोगेश्वरत्वञ्च शूरत्वञ्च महामृधे । ११८७५
अमितत्वं लघुत्वञ्च ये चान्ये सात्त्विका गुणाः । तत्पराजय देवेन्द्रं देवान् सर्व्वांश्च सानुगान् ।
यथोक्तं ब्रह्मणा राजंस्तत्तथा न तदन्यथा । तच्च तद्वचनं श्रुत्वा प्रह्लादस्य महात्मनः ।
बलिः परमसंहृष्टो गतः शक्रयो यतः ।

ततः प्रयान्तं त्रिदशेन्द्रसन्निधौ महासुरेन्द्रं बलिमुत्तमश्रियं। तमप्रमा चक्रुरभिप्रदक्षिणं द्विजाश्च मुख्याः प्रयतस्य

मङ्गलाः।

महाजटाभारधरास्तपस्विनस्तदा तमाशुर्विविधैश्च मङ्गलैः। अभिष्टुवन्तः कवयः स्वलङ्कृतं बलिं प्रयान्तं रणमूर्द्धनि ११९८०

स्थिताः।

प्रतप्तजाम्बूनदचित्रभूषणैर्दिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमानः परमेण वर्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।

स वै तदा शत्रुबलारितं बलं बलिर्ददर्शोत्तमवीर्यविक्रमः। जलागमे शोमदिवाभ्रमण्डलं विकीर्य्यमाणं नभसीव

वायुना।

ततो ददर्शाथ बलानि सर्वतो रणे सुगुप्तानि शतक्रतुनेन वै। समुच्छ्रितान्युत्पतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।

स शूलशक्त्यृष्टिगदासिसायकान् क्षिपन्विपूर्णां समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्यवान्।

दिव्यास्त्रधूमो भुजवेगवायुर्बलोद्धतः पौरुषविक्रमेन्धनः। युगान्तवह्निरिव कालवह्निः सुघोररूपो विबभौ रणे बलिः।११९८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

॥ वैशम्पायन उवाच ॥ बलिना तु सुराः सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्नाः ससैन्या वै पराजिताः।

विमुखा सा तु दैत्येन्द्रैर्बध्यमाना महाचमूः। जितास्तु बलिना देवाः शक्रमाहुर्महाबलं।

॥ देवा ऊचुः ॥ भवानिन्द्रस्य धाता च लोकानां प्रभुरव्ययः। त्वमप्रतिमकर्म्मा च तथैवानुपमद्युतिः।

विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरैः। ११९९०

रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रशः। भिन्नाश्छिन्नाश्च शतशो गदामुषलपट्टिशैः।

महाभैरवरूपं हि दैत्येन्द्रेण कृतं रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूं।

त्रायस्व त्रिदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।

संवर्त्तकाग्निवत् क्रुद्धः सर्व्वानदहतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभुः।

वैदूर्य्योत्करसंकाशो नानारत्नचिताङ्गदः। मयूररामा धूम्राक्षः शतबाहुः सहस्रदृक्। ११९९५

हरिदेको हरिश्मश्रुर्नागकेतुर्महाबलः। वज्रप्रहरणः श्रीमान् योगी शतशिरोधरः।

सधनुर्व्वज्रहस्तश्च शतादित्यसमप्रभः। देवगन्धर्व्वयक्षैश्चैवानुयातः सहस्रशः।

सामगैः सजपैश्चापि स्तूयमानो महर्षिभिः। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।

प्रगृह्य विततं वज्रं दीप्तं रौद्रात्त्रहाविनं। दैत्यानयोधयत् सर्व्वान्महेन्द्रः पाकशासनः।

अधृष्यः सर्व्वभूतानामदित्या दयितः सुतः। ततः प्रवृत्तः संग्रामो बलेर्देवेश्वरस्य च।

उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं। १२०००

प्रह्लादेन स्तुतिशतैः कर्म्मभिर्व्वयवर्त्तितैः। संबोधितो दैत्यपतिरग्निरिद्ध इवाबभौ।

सुरासुरेन्द्रयोर्दृष्ट्वा संग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।

ततोऽविध्यन्महेन्द्रस्तं बलिमस्त्रैर्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलिः।

ततः क्रुद्धः पुनश्चाथ घोरास्त्रं दुर्वारणं महत्। आग्नेयमथ शत्रुघ्नं चिक्षेपेन्द्रो महाबलः।

तद्दृष्ट्वा खे समागच्छत् प्रलयानलसन्निभं । प्रशमयामास दैत्येन्द्रो वारुणास्त्रेण बुद्धिमान् । १४००५
संक्रुद्धो मघवान् वज्रमग्रहीत् पर्व्वतोपमं । हन्तुकामो रणश्लाघी बलिं दैत्याधिपं रणे ।
ततः शुश्राव देवेन्द्रः कौशिको हरिवाहनः । अशरीरां तदा वाणीं तस्मिन्नन्तरिते वेश्मनि ।
निवर्त्तस्व महाबाहो सुराणां नन्दिवर्द्धन । पुरन्दर सुरश्रेष्ठ न जेष्यसि बलिं रणे ।
तपसा ह्यसमो दैत्यो वरदानेन चाधिकः । स्वयम्भूपरितोषाच्च बलात् शूर्व्वोऽक्षवासव ।
नैष शक्यस्त्वया जेतुं चिरश्चैवं सुरेश्वर । यो ह्यस्य भगवान् जेता तं शृणुष्व सनातनं । १४०१०
ब्रह्मणो यो हि सर्व्वस्य देवानां वै परा गतिः । परं रहस्यं धर्म्मस्य परस्य च परा गतिः ।
परात्परतरः श्रीमान् परावरगतिः प्रभुः । अनाद्यन्तो महाभूतो भूतभव्यभवत्प्रभुः ।
सहस्रशीर्षः पुरुषः सहस्राक्षः सहस्रपात् । शङ्खचक्रगदापाणिः पीतवासाः सुरारिहा ।
जेताऽजय्यो जयः श्रीमान् सोऽस्य जेता भविष्यति । श्रुत्वा दिव्यान्तु परमां वाणीं तामशरीरिणीं ।
अपयातो रणाच्छक्रः सह सर्व्वैर्मरुद्गणैः । अपयाते तु देवेन्द्रे कौशिके हरिवाहने । १४०१५
सिंहनादो महानासीद्दानवानां महात्मनां । ततः किलकिलाशब्दः क्ष्वेडितास्फोटनिस्वनः ।
शङ्खानां निनदश्चाथ योधानां वल्गितस्वनः । वादित्राणाञ्च निर्घोषस्तुमुलश्चाभवत्तदा ।
जयशब्दरवैश्चैव देवानान्तु पराजये । ससैन्यो दैत्यराजस्तु प्रयातः समुदङ्गणैः ।
बलीन्द्रो विबभौ दैत्यो हिरण्यकशिपुर्यथा ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे शक्रापयाने पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः॥२५५॥

॥ वैशम्पायन उवाच ॥ निष्प्रयत्नेषु देवेषु त्रैलोक्ये दैत्यपालिते । जये बलेर्व्वलवतो मयशम्बरघोषिते । १४०२०
शुद्धासु दिक्षु सर्व्वासु प्रवृत्ते धर्म्मकर्म्मणि । अपावृते धर्म्मपथे ह्ययनस्थे दिवाकरे ।
प्रह्लादशम्बरमयैरनुह्रादेन चैव ह । दिक्षु सर्व्वासु गुप्तासु गगने दैत्यपालिते ।
दैत्येषु मखशोभार्थे स्वर्गार्थं दर्शयत्सु च । प्रकृतिस्थे तदा लोके वर्त्तमाने च सत्पथे ।
अभावे सर्व्वपापानां भावे चैव तदा स्थिरे । भावे तपसि सिद्धानामभावे पापकर्म्मणां ।
चतुष्पादे स्थिते धर्म्मे अधर्म्मे पादविग्रहे । प्रजापालनयुक्तेषु भ्राजमानेषु राजसु । १४०२५
स्वधर्म्मसंप्रयुक्तेषु सर्व्वाश्रमनिवासिषु । अभिषिक्तोऽसुरैः सर्व्वैर्द्दैवराज्ये बलिस्तदा ।
हृष्टेष्वसुरसंघेषु नदत्सु मुदितेषु च । अथाभ्युपगता लक्ष्मीर्बलिं पद्मासने स्थिता ।
पद्मोद्यतकरा देवी वरदा शुभ्रवेशिनी ।

॥ श्रीरुवाच ॥ बले बलवतां श्रेष्ठ दैत्यराज महाद्युते । प्रीताऽस्मि तव भद्रं ते दैवतानां पराजये ।
यत्त्वया युधि विक्रम्य देवराजः पराजितः । दृष्ट्वा ते परमं सत्त्वं ततोऽहं स्वयमागता । १४०३०
नाश्चर्यं दानवश्रेष्ठ हिरण्यकशिपोः कुले । प्रसूतस्यासुरेन्द्रस्य तव कर्म्मेदमीदृशं ।
विशेषितस्त्वया राजन्दैत्येन्द्रः स पितामहः । येन भुक्तं हि निखिलं त्रैलोक्यमिदमव्ययं ।
विशेषतश्च विभो सर्व्वो धर्म्मः स्थितः त्वयि । तेन त्रैलोक्यमव्ययं भोक्ष्यस्यमितविक्रम ।

ततः प्रयान्तं विहगेन्द्रसन्निभो महासुरेन्द्रं बलिमुत्तमश्रियं। तमन्वगा चक्रुरभिप्रहर्षिणं द्विजाश्च मुख्याः पथवश्च

मङ्गलाः।

महाजटाभारधरास्तपस्विनस्तदा तमाशुर्विधिमन्त्रसङ्कुलैः। अभिष्टुवन्तः कवयः स्वलङ्कृतं बलिं प्रयान्तं रणमूर्द्धनि ११९८०

स्थिताः।

प्रतप्तजाम्बूनदचित्रभूषणैर्दिव्यैश्च रत्नैर्विविधैरलङ्कृतः। विराजमानः परमेण वर्च्चसा रणे विभात्यग्निनिभोऽसुरेश्वरः।

स वै तदा प्रचलादितं बलं बलिर्ददर्शोत्तमवीर्य्यविक्रमः। जलागमे श्रीमदिवाभ्रमण्डलं विकीर्य्यमाणं नभसीव

वायुना।

ततो ददर्शाथ बलानि सर्व्वतो रणे सुगुप्तानि शतक्रतेन वै। समुच्छ्रितान्युग्रतराणि तत्र वै समुद्रवेगानिव पर्व्वसन्धिषु।

स शूलशक्त्यृष्टिगदासिसायकान् क्षिपन्निपूर्णां समरे महात्मनां। ननाद सिंहर्षभमत्तनागवज्जलागमे तोयदवच्च वीर्य्यवान्।

दिव्यास्त्रधूमो भुजवेगवायुर्महाबलः पौरुषविक्रमेन्धनः। युगान्तदिप्तश्च इव कालवह्निः सुघोररूपो विबभौ रणे बलिः। ११९८५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने देवासुरयुद्धे चतुःपञ्चाशदधिकद्विशततोऽध्यायः॥ २५४ ॥

॥ वैशम्पायन उवाच ॥ बलिना तु सुराः सर्व्वे वर्ज्जयित्वा सुराधिपं। रणे शरशतैर्भिन्नाः ससैन्या वै पराजिताः।

विमुखा सा तु दैत्येन्द्रैर्बध्यमाना महाचमूः। जितास्तु बलिना देवाः शक्रमाहुर्महाबलं।

॥ देवा ऊचुः ॥ भवानिन्द्रश्च धाता च लोकानां प्रभुरव्ययः। त्वमप्रतिमकर्म्मा च तथैवानुपमद्युतिः।

विद्रुतानीह सैन्यानि सहास्माभिः सुरेश्वर। रथचक्रध्वजाग्र्याणि विभिन्नानि महासुरैः। ११९९०

रथहस्त्यश्वयोधाश्च पादाताश्च सहस्रशः। भिन्नाश्छिन्नाश्च शतशो गदामुषलपट्टिशैः।

महाभैरवरूपं हि दैत्येन्द्रेण हतं रणे। किमुपेक्षसि दैत्येन्द्रैर्हन्यमानां महाचमूं।

त्रायस्व विदशश्रेष्ठ शरण्य शरणागतान्। श्रुत्वा तु वचनं तेषां देवानाममराधिपः।

सम्वर्त्तकाग्निवत् क्रुद्धः सर्व्वानहसतासुरान्। दिवाकरकराकारं किरीटं धारयन् प्रभुः।

वैदूर्य्योत्करसंकाशो नानारत्नचिताङ्गदः। मयूररामा धूम्राक्षः शतबाहुः सहस्रदृक्। ११९९५

हरिरेको हरिश्मश्रुर्नागकेतुर्महाबलः। वज्रप्रहरणः श्रीमान् योगी शतशिरोधरः।

सधनुर्व्विपुलस्राक्षः शतादित्यसमप्रभः। देवगन्धर्व्वसङ्घैश्चैरनुयातः सहस्रशः।

सामगैः संजपैश्चापि स्तूयमानो महर्षिभिः। शतपर्व्व महारौद्रं स्फोटनं सर्व्वतोमुखं।

प्रगृह्य विततं वज्रं दीप्तं रौद्रास्त्रसाधिनं। दैत्यानयोधयत् सर्व्वान्महेन्द्रः पाकशासनः।

अधृष्यः सर्व्वभूतानामदित्या दयितः सुतः। ततः प्रवृत्तः संग्रामो बलेर्देवेश्वरस्य च। १२०००

उभाभ्यामतिवीर्य्याभ्यां तुमुलो लोमहर्षणः। अतिवीर्य्यबलोदग्रं तुमुलं लोमहर्षणं।

प्रह्लादेन स्तुतिशतैः कर्म्मभिर्व्वयसञ्चितैः। संबोधितो दैत्यपतिरग्निरिद्ध इवाबभौ।

सुरासुरेन्द्रयोर्दृष्ट्वा संग्रामं लोमहर्षणं। देवानां दानवानाञ्च भूयो युद्धमभूत्तदा।

ततोऽविध्यन्महेन्द्रस्तं बलिमस्त्रैर्महासुरं। तान्यस्त्राणि महाबाहुश्चिच्छेद शतधा बलिः।

ततः क्रुद्धः पुनश्चाथ सोऽस्त्रं दुर्वारणं महत्। आग्नेयमथ सन्दध्रे चिक्षेपेन्द्रो महाबलः।

हृष्टपुष्टस्वरैस्तत्र द्विजेन्द्रैर्ब्बलुभाषितैः । नादितं ब्रह्मसदनं प्रवरं देवसद्मवत् ।
ते तत्र समनुप्राप्ताः प्रहृष्यन्तो वै ध्वनिं सुराः । पूताश्चात्मशरीराणि मेनिरे तु न संशयः ।
तूष्णीम्भूता एकचित्ता ब्रह्मणि गतमानसाः । विस्मयोत्फुल्लनयना निरैक्षन्त परस्परं । १४०६५
नमस्कुर्व्वन्ति च पुनर्ब्रह्माणं परमं प्रभुं । मनसैव सुरश्रेष्ठाः पुरस्कृत्य तु कश्यपं ।
पुनः संघुष्टपरमं वेदोद्धरणनिस्वनं । गम्भीरोदारमधुरं सुस्वरं स्वनगद्गदं ।
ऐक्यनानात्वसंयोगसमवायविशारदैः । लोकायतिकमुख्यैश्च शुश्रुवुः स्वनमीरितं ।
तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान् । जपहोमपरान् मुख्यान् ददृशुः कश्यपात्मजाः ।
तस्यां सभायामास्ते वै ब्रह्मा लोकपितामहः । सुरासुरगुरुः श्रीमान् विद्धि दैवमायया । १४०७०
उपासते च तत्रैनं प्रजानां पतयः प्रभुं । दक्षः प्रचेताः पुलहो मरीचिश्च द्विजोत्तमः ।
भृगुरत्रिर्वशिष्ठश्च गौतमो नारदस्तथा । विद्या मनोऽन्तरीक्षञ्च वायुस्तेजो जलं मही ।
शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च । प्रकृतिश्च विकारश्च यच्चान्यत् कारणं भुवः ।
साङ्गोपाङ्गाश्चतुर्व्वेदाः सरहस्यपदक्रमाः । क्रियाश्च क्रतवश्चैव संकल्पः प्राण एव च ।
एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः । अर्थो धर्म्मश्च कामश्च द्वेषो हर्षश्च सर्व्वदा । १४०७५
शुक्रो बृहस्पतिश्चैव संवर्त्तो बुध एव च । शनैश्चरश्च राहुश्च ग्रहाः सर्व्वे तथैव च ।
मरुतो विश्वकर्म्मा च नक्षत्राणि च भारत । दिवाकरश्च सोमश्च ब्रह्माणं समुपासते ।
सावित्री दुर्गतरणी वाणी सप्तविधा तथा । सर्व्वाणि स्मृतिशास्त्राणि गाथाश्च निगमास्तथा ।
भाष्याणि सर्व्वशास्त्राणि देहवन्ति विशाम्पते । क्षणा लवा मुहूर्त्ताश्च दिवा रात्रिश्च भारत ।
अर्द्धमासाश्च मासाश्च ऋतवः षट् तथैव च । संवत्सराश्चतुर्युगं सन्ध्या रात्रिश्चतुर्विधा । १४०८०
कालचक्रञ्च यद्दिव्यं नित्यगं ध्रुवमव्ययं । एते चान्ये च बहवः स्वयम्भुवमुपस्थिताः ।
तां प्रविष्टः सभां दिव्यां ब्रह्मणः सर्व्वकामदां । कश्यपस्त्रिदशैः सार्द्धं पुत्रैर्द्धर्म्मविदाम्वरः ।
सर्व्वतेजोमयं दिव्यं ब्रह्मर्षिगणसेवितं । ब्राह्म्या श्रिया दीप्यमानमचिन्त्यं विगतक्लमं ।
ब्रह्माणं वीक्ष्य ते सर्व्वे परमासनमास्थितं । शिरोभिः प्रणता दूरं परमेष्ठिनमव्ययं ।
शिरोभिः स्पृश्य चरणौ नियताः परमात्मनः । विमुक्ताः सर्व्वपापेभ्यः शान्ता विगतकल्मषाः । १४०८५
दृष्ट्वा तु तान् सुरान् सर्व्वान् कश्यपेन सहागतान् । आह ब्रह्मा महातेजा देवानां प्रभुरीश्वरः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मलोकागमने सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
॥ ब्रह्मोवाच ॥ यदर्थमिह संप्राप्ता भवन्तः सर्व्व एव हि । चिन्तितान्यहमप्यग्रमेनमर्थं महाबलाः ।
भविष्यति च वः सोऽयं काङ्क्षितो यः सुरोत्तमाः । बलेर्द्दानवमुख्यस्य यो विजेता भविष्यति ।
न केवलं सुरारीणामेको जेता स विश्वकृत् । त्रैलोक्यस्यापि जेताऽसौ देवानामपि च प्रभुः ।
यो धाता सर्व्वभूतानां विश्वं यस्य सनातनः । पूर्व्वजं यं वदा प्राज्ञर्षेमसर्भनिदर्शनं । १४०९०
आत्मा वै येन विभुना कृतोऽजेयो महात्मना । बलेरतुलवीर्य्यस्य विश्वस्य जगतस्तथा ।

प्रभवः स हि सर्व्वेषामस्माकमपि पूर्व्वजः । अविज्ञेयः स हि विश्वात्मा योगयुक्तः परन्तपः ।
तं देवापि महात्मानं न विदुः कोऽप्ययमिति । देवानस्मांश्च विश्वञ्च स वेत्ति पुरुषोत्तमः ।
तस्यैव तु प्रसादेन प्रवक्ष्ये परमां गतिं । यत्र योगं समास्थाय तपश्चरति दुश्चरं ।
क्षीरोदस्योत्तरे कूले उदीच्यां दिशि देवताः । अमृतं नाम परमं स्थानमाहुर्म्मनीषिणः । १४९९५
भवन्तस्तत्र वै गत्वा तपसा संशितव्रताः । अमृतं स्थानमासाद्य तपश्चरत दुश्चरं ।
ततः श्रोष्यथ विस्पष्टां स्निग्धगम्भीरनिस्वनां । उष्णान्ते तोयपूर्णस्य तोयदस्य समस्वनां ।
दिव्यां सुष्टाक्षरपदां रम्याम्भयदां शिवां । वाणीं परमसंस्कारां वरदां ब्रह्मवादिनीं ।
दिव्यां सरस्वतीं सत्यां सर्व्वकल्मषनाशिनीं । सर्व्वदेवातिदेवस्य भाषितां भावितात्मनः ।
तस्य व्रतसमाप्तौ तु यावद्व्रतविसर्ज्जनं । अमोघस्य तु देवस्य विश्वरूपां महात्मनः । १४५००
स्वागतं वः सुरश्रेष्ठा मत्सकाशमिहागताः । कस्य वा कं वरं देवा ददानि वरदः स्थितः ।
तं दितिः काश्यपश्चैव याचीयातां वरं ततः । प्रणम्य शिरसा पादौ तस्मै योगात्मने तदा ।
भगवानेव नः पुत्रो भवत्विति न संशयः । उक्तश्च परया भक्त्या तथाऽस्त्विति स वक्ष्यति ।
देवा ब्रुवन्तु ते सर्व्वे भ्राता नस्त्वं भवेति च । तथाऽस्त्विति च स श्रीमान् वक्ष्यते सर्व्वलोककृत् ।
तस्माद्देवं गृहीत्वा तु वरं चिदशसत्तमाः । कृतकृत्याः पुनः सर्व्वे गच्छध्वं स्वं स्वमालयं । १४५०५
तथाऽस्त्विति सुराः सर्व्वे काश्यपोऽदितिरेव च । ब्रह्माणं वन्द्य चरणौ गताः सौम्यां दिशं प्रति ।
तेऽचिरेणैव संप्राप्ताः क्षीरोदं सरितां पतिं । यथोद्दिष्टं भगवता ब्रह्मणा ब्रह्मवादिना ।
तेऽतीत्य सागरान् सर्व्वान् पर्व्वतांश्च सकाननान् । नदीश्च विविधा दिव्याः पृथिव्यां सुरसत्तमाः ।
अपश्यंस्ते सुघोराश्च सर्व्वसत्त्वविवर्ज्जितां । अभास्करामसर्य्यादां तमसा संवृतां दिशं ।
अमृतं स्थानमासाद्य काश्यपेन सुराः सह । दीक्षिताः कामदं दिव्यं व्रतं वर्षसहस्रिकं । १४५१०
प्रसादार्थं सुरेशाय तस्मै योगाय धीमते । नारायणाय देवाय सहस्राक्षाय भूतये ।
ब्रह्मचर्य्येण मौनेन स्थानवीरासनेन च । दमेन च सुराः सर्व्वे तपो दुश्चरमाश्रिताः ।
काश्यपस्तत्र भगवान् प्रसादार्थं महात्मनः । उदैरयत वेदोक्तं यमाहुः परमं स्तवं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

॥ काश्यप उवाच ॥ नमोऽस्तु ते देवदेवेश एकशृङ्ग वराह वृषार्च्चिः सिन्धुवृष वृषाकपे सुरवृष सुरनिर्म्मित अनिर्म्मित भद्र कपिल विष्वक्सेन ध्रुव धर्म्म धर्म्मराज वैकुण्ठ वृषावर्त्त अनादिमध्यनिधन धनञ्जय शुचिश्रवः पृश्निज पृश्णिज अज अजय अमृतेशय सनातन विधातस्त्रिधाम त्रिधाम त्रिककुत्ककुद्मिन् दुन्दुभे महानाभ लोकनाभ पद्मनाभ लोकनाथ विरिञ्चे वरिष्ठ बहुरूप बय अक्षय विरूप विश्वरूप सत्याक्षर यज्ञाक्षर हव्यभुक् खण्डपरशो शुक्र मुञ्जकेश हंस महाहंस महद्वर हृषीकेश सूक्ष्म परमसूक्ष्म तुराषाट् विश्वमूर्त्ते सुराग्रज नील नित्यमौ विरजस्तमो रजः सत्त्व सत्त्वधाम सर्व्वलोक सर्व्वलोकप्रतिष्ठ शिपिविष्ट सुतपस्तपोग्र अप अग्रज धर्म्मनाभ गभस्तिनाभ धर्म्मनेमे सत्त्वधाम सत्याक्षर गभस्तिनेमे

अदित्याः पुत्रतां याते त्वयि देवाः सवासवाः । देवशब्दं वदिष्यन्ति काश्यपस्यात्मजो भव ।
॥ वैशम्पायन उवाच ॥ ततस्तानब्रवीद्विष्णुर्देवान् कश्यपमेव च । एवं भवतु भद्रं वो यथेष्टं काममःश्रुत ।
सर्व्वेषामेव युष्माकं ये भविष्यन्ति शत्रवः । मुहूर्त्तमपि ते सर्व्वे न स्थास्यन्ति ममाग्रतः ।
हत्वाऽसुरगणान् सर्व्वान् ये चान्ये देवशत्रवः । करिष्ये देवताः सर्व्वा यज्ञभागाग्रभोजनाः । १४१३५
हव्यादांश्च सुरान् सर्व्वान् कव्यादांश्च पितॄनपि । करिष्ये विबुधश्रेष्ठाः पारमेष्ठ्येन कर्म्मणा ।
यथागतेन मार्गेण निवर्त्तध्वं सुरोत्तमाः । देवमातुस्तथाऽदित्याः कश्यपस्यामितात्मनः ।
यथामनीषितं कर्त्ता गच्छध्वं स्वं स्वमालयं ।
॥ वैशम्पायन उवाच ॥ एवमुक्ते तु वचने विष्णुना प्रभविष्णुना । देवाः प्रहृष्टमनसः पूजयन्ति स्म सर्व्वशः ।
विश्वेदेवा महात्मानः कश्यपोऽदितिरेव च । साध्या मरुद्गणाश्चैव शक्रश्चैव महाबलः । १४१४०
नमस्कृत्य सुरेशाय तस्मै देवाय रंहसे । प्रयाताः प्राग्दिशं पुण्यां विपुलं कश्यपाश्रमं ।
ते कश्यपाश्रमं गत्वा महर्षिगणसेवितं । वेदः स्वाध्यायनिरता अदित्या गर्भमोषयः ।
अदितिर्देवमाता च गर्भं दध्रेऽतिनिर्व्वृतं । भूतात्मानं महात्मानं दिव्यं वर्षसहस्रिकं ।
पूर्णे वर्षसहस्रे तु प्रसूता गर्भमुत्तमं । सुराणां शरणं देवमसुराणां विनाशनं ।
गर्भस्थेन तु तेनैव परित्रातास्तदा सुराः । स्वादृतेन तेजांसि त्रैलोक्यस्य महात्मना । १४१४५
तस्मिन् जाते तु देवेशे त्रैलोक्यस्य सुखावहे । भयदे दैत्यसंघानां सुराणां नन्दिवर्द्धने ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने वामनप्रसूतौ षष्ट्यधिकद्विशततोऽध्यायः ॥ २६० ॥
॥ वैशम्पायन उवाच ॥ प्रजानां पतयः सप्त सप्त चैव महर्षयः । तस्य देवस्य आगत्य नमस्कारं प्रचक्रिरे ।
भरद्वाजः कश्यपो गौतमश्च विश्वामित्रो जमदग्निर्वसिष्ठः । यश्चोदिते भास्करेऽभूत् प्रनष्टे सोऽप्यत्रिश्चाचिर्भगवानाजगाम ।
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः । दक्षः प्रजापतिश्चैव नमस्कारं प्रचक्रिरे ।
और्व्वो वसिष्ठपुत्रश्च स्तम्बः कश्यप एव च । कपीवानकपीवांश्च दत्तोनिश्च्यवनस्तथा । १४१५०
वसिष्ठपुत्राः सप्तासन् वासिष्ठा इति विश्रुताः । हिरण्यगर्भस्य सुता ऊर्ज्जजाताः सुतेजसः ।
गार्ग्यः पृथुस्तथैवाग्र्यो जन्यो वामन एव च । देवबाहूर्द्ध्वबाहुश्च पर्ज्जन्यश्चैव सोमजः ।
हिरण्यरोमा वेदशिराः सत्यनेत्रस्तथैव च । विश्वेऽतिनिमिषश्च्यवनः सुधामा विरजास्तथा ।
अतिनामा सहिष्णुश्च नमस्कारमकुर्व्वत । विद्योतमानवपुषः सर्व्वाभरणभूषिताः ।
उपानृत्यन्त देवेशं विष्णुमप्सरसां गणाः । ततो गन्धर्व्वतूर्य्येषु प्रणदत्सु विहायसि । १४१५५
बहुभिः सह गन्धर्व्वैः प्रागायत च तुम्बुरुः । महाश्रुतिश्चित्रशिरा ऊर्णायुरनघस्तथा ।
गोमायुः सूर्य्यवर्चाश्च सोमवर्चाश्च सप्तमः । युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा ।
त्रयोदशः शालिशिराः पर्ज्जन्यश्च चतुर्दशः । कलिः पञ्चदशश्चात्र नारदश्चैव षोडशः ।
हाहाहूहूश्च गन्धर्व्वौ हंसश्चैव महाद्युतिः । इत्येते देवगन्धर्व्वा उपागायन्त केशवं ।
तथैवाप्सरसो हृष्टाः सर्व्वालङ्कारभूषिताः । उपानृत्यन्त देवेशं सर्व्वाश्चायतलोचनाः । १४१६०

ननृतुश्च महाभागा जगुश्चायतलोचनाः । सुमध्या चारुमध्या च प्रियमुख्या वराङ्गना ।
अनूका च तथा श्यामी मिश्रकेशी त्वलम्बुषा । मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा ।
अद्रिका लक्ष्मणा चैव रम्भा तद्वन्मनोरमा । असिता च सुबाहुश्च अविष्ठा सुभगा तथा ।
उर्व्वशी चित्रलेखा च सुग्रीवी च सुलोचना । पुण्डरीकसुगन्धा च सुरथा च प्रमाथिनी ।
काम्या शारद्वती चैव तथाऽन्यास्तत्र संघशः । मेनका सहजन्या च पर्णिका पुञ्जिकस्थला । १४०९५
एताश्चाप्सरसोऽन्याश्च प्रनृत्यन्ति सहस्रशः । धाताऽर्य्यमा च मित्रश्च वरुणोऽंशो भगस्तथा ।
इन्द्रः पूषा विवस्वांश्च त्वष्टा च सविता तथा । कथितो विष्णुरित्येष काश्यपेयो गणस्तथा ।
आदित्या द्वादशैते तु ज्वलन्तो वह्निवर्चसः । चक्रुस्तस्य सुरेशस्य नमस्कारं महात्मनः ।
मृगव्याधश्च सर्पश्च निरृतिश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
दहनोऽथेश्वरश्चैव कपाली च विशाम्पते । स्थाणुर्भवश्च भगवान्रुद्रास्तत्राऽवतस्थिरे । १४१००
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः । विश्वेदेवाश्च साध्याश्च तस्य प्राञ्जलयः स्थिताः ।
शेषानुजा महाभागा वासुकिप्रमुखास्तथा । कच्छपश्चापकुण्डश्च धृतराष्ट्रबलाहकौ ।
अष्टव्यालास्तेजसा दीप्ता महाक्रोधा महाबलाः । एते नागा महात्मानः सर्व्वे प्राञ्जलयः स्थिताः ।
एते चान्ये च बहवो नागास्तस्य महात्मनः । तस्थुः प्राञ्जलयः सर्व्वे नमस्कारं प्रचक्रिरे ।
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्च महाबलः । अरुणश्चारुणिश्चैव तस्य प्राञ्जलयः स्थिताः । १४१०५
पितामहश्च भगवान् स्वयमागम्य लोककृत् । प्राह देवगुरुः श्रीमान् सह सर्व्वैर्महात्मभिः ।
॥ ब्रह्मोवाच ॥ यस्मात् प्रसूयते लोकः प्रभविष्णुः सनातनः । तस्माल्लोकेश्वरः श्रीमान् विष्णुरेव भवत्वयं ।
एवमुक्त्वा तु भगवान् सार्द्धं देवर्षिभिः प्रभुः । नमस्कृत्य सुरेशाय जगाम त्रिदिवं पुनः ।
स तु जातः सुरेशानः कश्यपस्यात्मजः प्रभुः । नवदुर्दिनमेघाभो रक्ताक्षो वामनाकृतिः ।
श्रीवत्सेनोरसि श्रीमान् रोमजातेन राजता । उत्फुल्लनयनाः सर्व्वाः पश्यन्त्यप्सरसस्तदा । १४११०
दिवि सूर्य्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ।
सुरर्षिप्रतिमः श्रीमान् भूर्भुवोभूतभावनः । शुचिरोमा सहोरस्कः सर्व्वतेजोमयः प्रभुः ।
या गतिः पुण्यशीलानामगतिः पापकर्म्मणां । योगयुक्ता महात्मानो यं विदुर्योगवित्तमं ।
दशाष्टगुणमैश्वर्य्यं यमाहुर्देवसत्तमं । यं प्राप्य शाश्वतं विप्रा नियता मोक्षकाङ्क्षिणः ।
जन्मतो मरणाच्चैव मुच्यन्ते योगभाविताः । यदेतत्तप इत्याहुः सर्व्वाश्रमनिवासिनः । १४११५
सेवन्ते यं यताहारा दुश्चरं व्रतमास्थिताः । योऽनन्त इति नागेषु सेव्यते सर्व्वभोगिभिः ।
सहस्रमूर्द्धा रक्ताक्षः शेषादिभिरनुत्तमैः । यो यज्ञ इति विप्रेन्द्रैरिज्यते स्वर्गलिप्सुभिः ।
सामानामगतः श्रीमानेकः कविरनुत्तमः । यं वेदा गान्ति वेत्तारं यज्ञभागप्रदायिनं ।
तृषार्चिश्चन्द्रसूर्य्याभं देवमाकाशविग्रहं । स उवाच सुरान् सर्व्वान् वाचा वै वरया विभुः ।
जातश्चापि महातेजा गतो योगेन बालतां । किं करोमि सुरश्रेष्ठा वरं कस्य ददामि वः । १४१२०

यत् काङ्क्षितं वः सर्व्वेषां तद्दै भूत मुदा युताः । तस्य तद्वचनं श्रुत्वा वामनस्य महात्मनः ।
सर्व्वे ते हृष्टमनसो देवाः कश्यपनन्दनं । ऊचुः प्राञ्जलयो विष्णुं सुराः शक्रपुरोगमाः ।
ब्रह्मणो वरदानेन हृतं नो निखिलं जगत् । तपसा महता चैव विक्रमेण बलेन च ।
बलिना दैत्यमुख्येन सर्व्वशेन महात्मना । अवध्यः किल सोऽस्माकं सर्व्वेषां देवसत्तम ।
भवान् प्रभवते तस्य नान्यः कश्चन सुव्रत । तत् प्रपद्यामहे सर्व्वे भवन्तं शरणार्थिनः । १४२७५
शरण्यं वरदं देवं सर्व्वभूतभयापहं । त्रयीणाञ्च हितार्थाय लोकानाञ्च सुरेश्वर ।
प्रियार्थञ्च तथाऽदित्याः कश्यपस्य तथैव च । कव्यं पितॄणामुचितं सुराणां हव्यमुत्तमं ।
प्रवर्त्ततां महाबाहो यथा पूर्व्वं सुरोत्तम । आनृण्यार्थं सुरेशस्य वासवस्य महात्मनः ।
प्रत्यानय सुरेन्द्रस्य त्रैलोक्यमिदमव्ययं । क्रतुना वाजिमेधेन यजते स हि दानवः ।
यत्प्रत्यानयने युक्तं लोकानां तद्विचिन्तय । १४२८०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने ब्रह्मवाक्ये एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥
॥ वैशम्पायन उवाच ॥ एवमुक्ते तदा देवैर्विष्णुर्वामनरूपधृक् । प्रहर्षयन्नुवाचाथ सर्व्वान्देवानिदं वचः ।
॥ वामन उवाच ॥ तस्य यज्ञसकाशं मां सर्व्वविद्वेदपारगः । बृहस्पतिर्द्दहतेजा नयत्वङ्गिरसः सुतः ।
तस्याहं समनुप्राप्तो यज्ञवाटं सुरोत्तमाः । विधास्ये यथायुक्तं त्रैलोक्यहरणाय वै ।
॥ वैशम्पायन उवाच ॥ ततो बृहस्पतिः श्रीमाननयद्वामनं प्रभुं । यज्ञवाटं महातेजा दानवेन्द्रस्य धीमतः ।
मौञ्जी यज्ञोपवीती च छत्री दण्डाजिनी तथा । वामनो धूम्रकेशो भगवान् बालरूपधृक् । १४२८५
लोकेश्वरेश्वरः श्रीमान् सुरैर्ब्रह्मपुरोगमैः । स्तूयमानो भगवानदृष्टोऽप्यथ बृहद्वन् ।
दानवाधिपतेस्तस्य बलेर्वैरोचनस्य ह । यज्ञवाटमचिन्त्यात्मा जगाम सुरसत्तमः ।
पालितेऽपि हि दैतेयैः सांग्रामिकपरिच्छदैः । द्वारे दानवसम्बाधे सहसैव विवेश ह ।
ऋत्विग्भिश्चैव सम्बाधैः सर्व्वतः परिवारितं । दैत्यदानवराजेन्द्रमुपतस्थे वरं बली ।
तं गत्वा यज्ञवाटन्तु महर्षिगणसंकुलं । आत्मानमेव भगवान् वर्णयामास तं क्रतुं । १४२९०
वर्णयित्वा यथान्यायं यज्ञं यज्ञः सनातनः । विस्तरेणामरश्रेष्ठः प्रयोगैर्विविधैस्तथा ।
शुक्रादीन्नृत्विजश्चापि यज्ञकर्म्मविचक्षणः । सर्व्वानेव निजग्राह चकार च निरुत्तरान् ।
आराद्य बलेस्तस्य ऋत्विजामभितस्तथा । यज्ञमात्मानमेवासौ हेतुभिः कारणं विभुः ।
वैदिकैरप्रकाशैश्च पुनरप्यथ भारत । प्रत्यक्षमृषिसंघानां दर्शयामास विश्वगुः ।
ततो निरुत्तरान् दृष्ट्वा सोपाध्यायानृषीन् कृतान् । अहृष्टेनापि हृष्टांस्तान् वामनेन महौजसा । १४२९५
अद्भुतश्चापि मेने स विरोचनसुतो बलिः । मूर्द्धा कृताञ्जलिरिदमब्रवीद्विस्मितो वचः ।
कुतस्त्वं कोऽसि कस्यासि किञ्चेहास्ति प्रयोजनं । नैवंविधपरिज्ञानो दृष्टपूर्व्वो मया द्विजः ।
बालो मतिमतां श्रेष्ठो ज्ञानविज्ञानकोविदः । शिष्टवागुपसम्पन्नो मनोज्ञः प्रियदर्शनः ।
नेदृशाः सन्ति देवानामृषीणाञ्चापि सूनवः । न नागानां न यक्षाणां नासुराणां न रक्षसां ।

न पितॄणां न सिद्धानां गन्धर्व्वाणां तथैव च । योऽसि सोऽसि नमस्तेऽस्तु ब्रूहि किं करवाणि ते । १४२२०
॥ वैशम्पायन उवाच ॥ उक्त एवमचिन्त्यात्मा बलिना वामनस्तदा । प्रोवाचोपायतत्त्वज्ञः स्मितपूर्व्वमिदं वचः ।
॥ विष्णुरुवाच ॥ अहो यज्ञोऽसुरेन्द्रस्य बहुभक्ष्यः सुसंस्कृतः । पितामहस्येव पुरा यजतः परमेष्ठिनः ।
सुरेश्वरस्य शक्रस्य यमस्य वरुणस्य च । विशेषिताश्च यथा यज्ञा दानवेन्द्र महाबल ।
यजता वाजिमेधेन क्रतूनां प्रवरेण तु । सर्व्वपापविनाशाय स्वर्गमार्गप्रदर्शिना ।
सर्व्वकाममयो ह्येष सम्मतो ब्रह्मवादिनां । क्रतूनां प्रवरः श्रीमानश्वमेध इति स्मृतः । १४२२५
सुवर्णशृङ्गो हि महानुभावो लोहखुरो वायुजवो महात्मा । सत्येश्वरः काञ्चनगर्भगौरः स विश्वयोनिः परमो हि मेध्यः ।
आस्थाय वै वाजिनमश्वमेधमिष्ट्वा नरा दुष्कृतमुत्तरन्ति । आहुश्च यं वेदविदो द्विजेन्द्रा वैश्वानरं वाजिनमश्वमेधं ।
यथाश्रमाणां प्रवरो गृहाश्रमो यथा नराणां प्रवरा द्विजातयः । यथाऽसुराणां प्रवरो भवानिह तथा क्रतूनां प्रवरोऽश्वमेधः ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु दैत्येन्द्रो वामनेन समीरितं । मुदा परमया युक्तः प्राह दैत्यपतिर्ब्बलिः ।
॥ बलिरुवाच ॥ कस्यासि ब्राह्मणश्रेष्ठ किमिच्छसि ददामि ते । वरं वरय भद्रं ते यथेष्टं काममाप्नुहि । १४२३०
॥ वामन उवाच ॥ न राज्यं न च यानानि न रत्नानि न च स्त्रियः । कामये यदि तुष्टोऽसि धर्मे च यदि ते मतिः ।
गुर्व्वर्थं मे प्रयच्छस्व पदानि त्रीणि दानव । तदग्निशरणार्थाय एष मे परमो वरः ।
॥ बलिरुवाच ॥ त्रिभिः किं तव विप्रेन्द्र पदैः प्रवदतांवर । शतं शतसहस्राणां पदानां मार्गतो भवान् ।
॥ शुक्र उवाच ॥ मा ददस्व महाबाहो न त्वं वेत्सि महासुर । एष मायाप्रतिच्छन्नो भगवान् प्रवरो हरिः ।
वामनं रूपमास्थाय शक्रप्रियचिकीर्षया । त्वां वञ्चयितुमायातो वटुरूपधरो हरिः । १४२३५
एवमुक्तः स शुक्रेण चिरं सञ्चिन्त्य वै बलिः । प्रबोधय समायुक्तः किमतः पापमिष्यते ।
गृह्य हस्तेन संभ्रान्तो भृङ्गारं कनकोद्भवं ।
॥ बलिरुवाच ॥ विप्रेन्द्र प्राङ्मुखस्तिष्ठ स्थितोऽस्मि कमलेक्षण । प्रतीच्छ देहि किं भूमिं का माया भोः पदत्रयं ।
हस्ते वः पातय जलं नैव मिथ्या भवेद्गुरुः ।
॥ शुक्र उवाच ॥ भो न देयं कुतो दैत्य विज्ञातोऽयं मया ध्रुवं । कोऽयं विष्णुरहो प्रोतिर्वञ्चितस्त्वं न वञ्चितः । १४२४०
कथं स नाथो यद्विष्णुर्यज्ञे यज्ञभुगास्थितः । दास्यामि देवदेवाय यदादिच्छत्ययं प्रभुः ।
को वाऽन्यः पात्रभूतोऽस्मात् विष्णोः परतरं भवेत् । एवमुक्त्वा बलिः शीघ्रं पातयामास वै जलं ।
॥ वामन उवाच ॥ पदानि त्रीणि दैत्येन्द्र पर्य्याप्तानि ममानघ । अन्यथा पूर्व्वमुक्तं हि तत्तथा न तदन्यथा ।
॥ वैशम्पायन उवाच ॥ इत्येतद्वचनं श्रुत्वा वामनस्य महौजसः । कृष्णाजिनोत्तरीयं स कृत्वा वैरोचनिस्तदा ।
एवमस्त्विति दैत्येशो वाक्यमुक्त्वाऽरिसूदनः । ततो वारिसमापूर्णं भृङ्गारं स परामृशत् । १४२४५
वामनो ह्यसुरेन्द्रस्य चिकीर्षुः कदनं महत् । क्षिप्रं प्रसारयामास दैत्यवधकरं करं ।
प्राङ्मुखश्चापि दैत्येन्द्रस्तस्मै सुमनसा जलं । दातुकामः करे वामनस्य प्रत्यवेक्षयत् ।
तस्य तद्रूपमालोक्य अचिन्त्यस्यामितौजसः । अभूतपूर्व्वं देवारेर्विशीर्णाः स्थिरमाहरीं ।
इङ्गितज्ञो महाप्राज्ञः प्रह्लादश्चाब्रवीद्वचः ।

॥ प्रह्लाद उवाच ॥ मा ददस्व जलं हस्ते वटोर्वामनरूपिणः । स ह्यसौ येन ते पूर्व्वं निहतः प्रपितामहः । १४२५०
विष्णुरेव महाप्राज्ञस्त्वां वञ्चयितुमागतः ।
॥ बलिरुवाच ॥ हन्त तस्मै प्रदास्यामि देवायेमं प्रतिग्रहं । अनुग्रहकरं देवमीदृशन्तु कुतः प्रभुं ।
ब्रह्मणोऽपि गरीयांसं पात्रं लप्स्यामहे वयं । अवश्यञ्चासुरश्रेष्ठ दातव्यं दीक्षितेन वै ।
इत्युक्त्वाऽसुरसंघानां मध्ये वैरोचनिस्तदा । देवाय प्रददौ तस्मै पदानि त्रीणि विष्णवे ।
॥ प्रह्लाद उवाच ॥ दानवेश्वर मादास्त्वं विप्रायास्मै प्रतिग्रहं । नैनं विप्रशिशुं मन्ये नेदृशो भवति द्विजः । १४२५५
रूपेणानेन दैत्येन्द्र सत्यमेतद्ब्रवीमि ते । नरसिंहमहं मन्ये तमेव पुनरागतं ।
एवमुक्तस्तदा तेन प्रह्लादेनामितौजसा । प्रह्लादमब्रवीद्वाक्यमिदं निर्भर्त्सयन्निव ।
॥ बलिरुवाच ॥ देहीति याचते यो हि प्रत्याख्याति च योऽसुर । उभयोरप्यलक्ष्म्या वै भागस्तं विशते नरं ।
प्रतिज्ञाय तु यो विप्रे न ददाति प्रतिग्रहं । स याति नरकं पापी मित्रगोत्रसमन्वितः ।
अलक्ष्मीभयभीतोऽहं ददाम्यस्मै वसुन्धरां । प्रतिग्रहीता चाऽप्यन्यः कश्चित्तस्माद्द्विजोऽद्य वै । १४२६०
नाधिको विद्यते यस्मात्तद्ददामि वसुन्धरां । हृदयस्य च मे तुष्टिः परा भवति दानव ।
दृष्ट्वा वामनरूपेण याचन्तं द्विजपुङ्गवं । एष तस्मात् प्रदास्यामि न स्थास्यामि निवारितः ।
भूयश्च प्राब्रवीदेनं वामनं वटुरूपिणं । स्वल्पैः स्वल्पमते किन्ते पादैस्त्रिभिरनुत्तम ।
कृत्स्नां ददामि ते विप्र पृथिवीं सागरैर्वृतां ।
॥ वामन उवाच ॥ न पृथ्वीं कामये कृत्स्नां सन्तुष्टोऽस्मि पदैस्त्रिभिः । एष एव हृदिष्टो मे वरो दानवसत्तम । १४२६५
॥ वैशम्पायन उवाच ॥ तथाऽस्त्विति बलिः प्रोक्त्वा स्पर्शयामास दानवः । पदानि त्रीणि देवाय विष्णवेऽमिततेजसे ।
तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्व्वदेवमयं रूपं दर्शयामास वै प्रभुः ।
भूः पादौ द्यौः शिरश्चास्य चन्द्रादित्यौ च चक्षुषी । पादाङ्गुल्यः पिशाचास्तु हस्ताङ्गुल्यश्च गुह्यकाः ।
विश्वेदेवाश्च जानुस्था जंघे साध्याः सुरोत्तमाः । यक्षा नखेषु संभूता लेखाश्चाप्सरसस्तथा ।
विद्युतो विपुला दृष्टिः केशाः सूर्य्यांशवस्तथा । तारका रोमकूपाणि रोमाणि च महर्षयः । १४२७०
बाहवो विदिशस्तस्य दिशः श्रोत्रे तथैव च । अश्विनौ श्रवणे चास्य नासा वायुर्महाबलः ।
प्रसादश्चन्द्रमाश्चैव मनो धर्म्मस्तथैव च । सत्यमस्याभवद्वाणी जिह्वा देवी सरस्वती ।
ग्रीवाऽदितिर्म्महादेवी तालुः सूर्य्यश्च दीप्तिमान् । द्वारं स्वर्गस्य नाभिर्वै मित्रस्त्वष्टा च वै भ्रुवौ ।
मुखं वैश्वानरश्चास्य वृषणौ तु प्रजापतिः । हृदयं भगवान् ब्रह्मा पुंस्त्वं वै कश्यपो मुनिः ।
पृष्ठेऽस्य वसवो देवा मरुतः सर्व्वसन्धिषु । सर्व्वच्छन्दांसि दशना ज्योतींषि विपुलाः प्रभाः । १४२७५
उरो रुद्रो महादेवो धैर्य्यञ्चास्य महार्णवः । उदरश्चास्य गन्धर्व्वा भुजगाश्च महाबलाः ।
लक्ष्मीर्म्मेधा धृतिः कान्तिः सर्व्वविद्याश्च वै कटिः । ललाटमस्य परमं यत् स्थानं परमात्मनः ।
सर्व्वज्योतींषि यानीह तपः शक्रश्च देवराट् । तस्य देवातिदेवस्य तेजो ह्याद्यमहात्मनः ।
स्तनौ कक्षौ च वेदाश्च ओष्ठौ चास्य मखास्तथा । इष्टयः पशुबन्धाश्च द्विजानां चेष्टितानि च ।

तस्य देवमयं रूपं दृष्ट्वा विष्णोर्महासुराः । उपासर्पन्त संक्रुद्धाः पतङ्गा इव पावकं । १४२८०

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने विश्वरूपप्रकाशे द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

॥ वैशम्पायन उवाच ॥ शृणु नामानि सर्व्वेषां रूपाण्याभरणानि च । आयुधानि च मुख्यानि दानवानां महात्मनां ।

विप्रचित्तिः शिविः शङ्कुरयःशङ्कुस्तथैव च । अयःशिरा अश्वशिरा हयग्रीवश्च वीर्य्यवान् ।

वेगवान् केतुमानुग्रः सोग्रव्यग्रो महासुरः । पुष्करः पुष्कलश्चैव साश्वोऽश्वपतिरेव च ।

प्रह्लादो ऽश्वशिराः कुम्भः संह्लादो गगनप्रियः । अनुह्लादो हरिहरौ वराहः संहरोऽरुजः ।

वृषपर्व्वा विरूपाक्षो सुनीन्द्रश्चन्द्रलोचनः । निष्प्रभः सुप्रभः श्रीमांस्तथैव च निरूदरः । १४२८५

एकवक्त्रो महावक्त्रो द्विवक्त्रः कालसन्निभः । शरत्कोर्निर्भयानिकः शङ्कुकर्णो महाध्वनिः ।

शरभः शलभश्चैव कुपथः कापथः क्रथः । दीर्घजिह्वोऽर्कनयनो मृदुचापो मृदुप्रियः ।

वायुर्गविष्ठो नमुचिः शम्बरो विचरो महान् । चन्द्रहन्ता क्रोधहन्ता क्रोधवर्द्धन एव च ।

कालकः कालकाक्षश्च वृत्रः क्रोधो विमोचनः । गरिष्ठश्च वरिष्ठश्च प्रलम्बो नरकः पृथुः ।

इन्द्रतापनवातापी केतुमान् बलदर्पितः । असिलोमा पुलोमा च वाष्कलः प्रमदो मदः । १४२९०

खसृमः कालवदनः करालः केशिरेव च । एकाक्षश्चैव राहुश्च तुण्डश्च सृमरः सृपः ।

एते चान्ये च बहवः क्रममाणं त्रिविक्रमं । उपतस्थुर्महात्मानं विष्णुं दैत्यगणास्तदा ।

पाशोद्यतकराः केचिच्छ्रादितास्याः खरस्वनाः । शतघ्नीचक्रहस्ताश्च परश्वधधरास्तथा ।

प्रासमुद्गरहस्ताश्च तथा परिघपाणयः । महाशिलोद्यतकराः शूलहस्ता महाबलाः ।

महावृक्षोद्यतकरास्तथैव च धनुर्द्धराः । महापट्टिशहस्ताश्च तथा मुषलपाणयः । १४२९५

गदाभुशुण्डीहस्ताश्च वज्रहस्तास्तथाऽपरे । अश्विकम्पनहस्ताश्च दानवा युद्धदुर्म्मदाः ।

नानाप्रहरणा घोरा नानावेषा महाबलाः । कूर्म्मकुक्कुटवक्त्राश्च शशवक्त्रास्तथाऽपरे ।

खरोष्ट्रवदनाश्चैव वराहवदनास्तथा । भीमा मकरवक्त्राश्च शिशुमारमुखास्तथा ।

मार्ज्जारशुकवक्त्राश्च अश्ववक्त्राश्च दानवाः । गोवक्त्रा बभ्रुवक्त्राश्च घोरा भुजगमुखास्तथा ।

उलूकध्वाङ्क्षवक्त्राश्च गजवक्त्राश्च दानवाः । नकुलश्येनवक्त्राश्च पारावतमुखास्तथा । १४३००

शाखामृगाननाः शूराश्छागाऽविमहिषाननाः । सारमेयमुखा रौद्राः क्रौञ्चवक्त्राश्च दानवाः ।

चक्रवाकमुखाश्चैव गोधावक्त्रास्तथाऽपरे । नक्रघोराननाः क्रूरा वृकशार्दूलवक्त्रकाः ।

खड्गिसिंहमुखाश्चैव मयूरवदनास्तथा । गजेन्द्रचर्म्मवसनास्तथा कृष्णाजिनाम्बराः ।

चीरसंवृतगात्राश्च तथा फलकवाससः । उष्णीषिणो मुकुटिनस्तथा कुण्डलिनोऽपरे ।

किरीटिनो लम्बशिखाः कम्बुग्रीवाः सुवर्च्चसः । नानावेषधरा दैत्या नानामाल्यानुलेपनाः । १४३०५

स्वान्यायुधानि दीप्तानि प्रगृह्याहुरचक्षुषाः । क्रममाणं हृषीकेशमुपातिष्ठन्त दानवाः ।

प्रमथ्य सर्व्वान् दैतेयान् पादहस्ततलैः प्रभुः । जहार त्रिदिवं देवस्त्रिभिर्विक्रमणैर्हरिः ।

रूपं कृत्वा महाकायं जहाराशु च मेदिनीं । चैत्रोपमं क्रममाणस्य द्युतिरादित्यसन्निभा ।

तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य सक्थिदेशे महात्मनः ।
परं विक्रममाणस्य पादमूले व्यवस्थितौ । विष्णोरमितवीर्य्यस्य वदन्त्येवं द्विजातयः । १४११०
जित्वा लोकांस्ततः सर्व्वान् हत्वा चासुरपुङ्गवान् । ददौ शक्राय वसुधां हरिर्लोकनमस्कृतः ।
सुतलं नाम पातालमधस्ताद्वसुधातले । बलेर्द्दत्तं निवासाय विष्णुना प्रभविष्णुना ।
तदवाप्यासुरश्रेष्ठश्चकार मतिमुत्तमां । रसातलतले वासमकरोदसुराधिपः ।
तत्रस्थस्य महातेजा ध्यानं परममास्थितः । उवाच वचनं धीमान् विष्णुं लोकनमस्कृतं ।
किं मया देव कर्त्तव्यं ब्रूहि सर्व्वमशेषतः । ततो दैत्याधिपं प्राह देवो विष्णुः सुरोत्तमः । १४११५
॥ विष्णुरुवाच ॥ ददामि ते महाभाग वरं वरय सुव्रत । परितुष्टोऽस्मि भद्रं ते यथेष्टं काममाप्नुहि ।
मा च शक्रस्य वचनं पर्य्यहार्षीः कथञ्चन । अहमाज्ञापयामि त्वां श्रेयश्चैवमवाप्स्यसि ।
एवमुक्त्वा ततो विष्णुरथ भूयोऽसुराधिपं । वाचा परमया प्राह सान्त्वयन् सर्व्वलोककृत् ।
यत्त्वया सलिलं दत्तं गृहीतं पाणिना मया । तस्मात्ते दैत्य देवेभ्यो नास्ति जीवितसंक्षयः ।
सुतलं नाम पातालं तत्र त्वं चासुरो वस । सर्व्वदैत्यगणैः सार्द्धं मत्प्रसादान्महासुर । १४१२०
न च ते देवदेवस्य शक्रस्यामिततेजसः । शासनं प्रतिहन्तव्यं स्मरता मम शासनं ।
देवताश्चापि ते सर्व्वाः पूज्या एव महासुर । प्राप्स्यसे चैव महाभाग दिव्यान् कामान् यथेप्सितान् ।
इह चामुत्र च सुखं विविधांश्च परिच्छदान् । दैत्याधिपत्यञ्च पुनर्मत्प्रसादादवाप्स्यसि ।
भोगांश्च विविधान् सम्यक् यज्ञांश्चैव सदक्षिणान् । यदा चैतां मया प्रोक्तां मर्य्यादां लङ्घयिष्यसि ।
बन्धिष्यन्ति तदा हि त्वां नागा भीमैर्म्महौजसः । नमस्कार्य्यश्च ते नित्यं महेन्द्रस्त्रिदशाधिपः । १४१२५
मम श्रेष्ठः सुरश्रेष्ठः शासनं प्रतिगृह्यतां ।
॥ बलिरुवाच ॥ देवदेव महाभाग शङ्खचक्रगदाधर । सुरासुरगुरुश्रेष्ठ सर्व्वलोकमहेश्वर ।
तत्रासतो मे पाताले भागं ब्रूहि सुरोत्तम । कथं तत्र मया स्थेयं विबुधानां महेश्वर ।
मम किं चिदशश्रेष्ठ प्राशनार्थं भविष्यति । तद्वदस्व सुरश्रेष्ठ त्वप्रियेण ममाज्ञया ।
॥ त्रिविक्रम उवाच ॥ अश्रोत्रियं श्राद्धमधीतमव्रतमदक्षिणं यज्ञमनृत्विजाकृतं । अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षडेते
तव दैत्यसत्तम । १४१३०
पुण्यं मद्द्वेषिणां यच्च मद्भक्तद्वेषिणां तथा । क्रयविक्रयपक्षाणां पुण्यं यच्चाग्निद्वेषिणां ।
अश्रद्धया यच्च दानं ददतां यजतां तथा । तत्सर्व्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति ।
॥ वैशम्पायन उवाच ॥ एतच्छ्रुत्वा तु वचनं बलिर्विष्णोर्म्महात्मनः । एवमस्त्विति तं प्रोक्त्वा पातालमसुरोत्तमः ।
प्रविवेश महाभागो देवाज्ञां प्रतिपालयन् । एतस्मिन्नन्तरे चापि विष्णुस्त्रिदशपूजितः ।
भगवानपि राज्यानां प्रविभागं चकार ह । ददौ चैन्द्रीं दिशं पूर्व्वां शक्रायामिततेजसे । १४१३५
याम्यां यमाय देवाय पितृराज्ञे महात्मने । पश्चिमाञ्च दिशं देवो वरुणाय ददौ प्रभुः ।
उत्तरान्तु कुबेराय यक्षाधिपतये दिशं । अधस्तान्नागराजाय सोमायोर्द्ध्वं दिशं ददौ ।

एवं विभज्य त्रैलोक्यं विष्णुर्बलवतां वरः । शोकापनयनं चक्रे देवानामजितः प्रभुः ।
वामनः सर्व्वभूतेषु प्रतिष्ठाप्य स वासवं । जगाम त्रिदिवं देवः पूज्यमानो महर्षिभिः ।
तस्मिन् प्रयाते दुर्द्धर्षे वामनेऽमिततेजसि । सर्व्वे मुमुदिरे देवाः पुरस्कृत्य शतक्रतुं । १४२४०
॥ वैशम्पायन उवाच ॥ गते तु त्रिदिवं कृष्णे बद्धा वैरोचनिं बलिं । नागैः सप्तशिरोभिश्च कम्बलाश्वतरादिभिः ।
नागबन्धनदुःखार्त्तं बलिं वैरोचनिं ततः । यदृच्छयाऽसौ देवर्षिर्नारदः प्रत्यदृश्यत ।
स तं कृच्छ्रगतं दृष्ट्वा कृपयाऽभिपरिप्लुतः । उवाच दानवश्रेष्ठ मोक्षोपायं ददामि ते ।
स्तवं देवातिदेवस्य वासुदेवस्य धीमतः । अनादिनिधनस्यास्य अव्ययस्याव्ययस्य च ।
समधीष्वाद्य दैत्येन्द्र विशुद्धेनान्तरात्मना । तद्गतस्त्वमना भूत्वा द्रुतं मोक्षमवाप्स्यसि । १४२४५
ततो विरोचनसुतः प्रयतः प्राञ्जलिः शुचिः । स्तोत्रविंशकमव्यग्रो नारदात् समधीतवान् ।
समधीत्य स्तवं दिव्यं नारदेन समीरितं । पृथिवी चोद्धृता येन तं जजाप महासुरः ।
नमोऽस्त्वनन्तपतये अव्ययाय महात्मने । अशेषयाय देवाय पद्मनाभाय विष्णवे ।
सप्त सूर्य्यं वपुः कृत्वा त्रीन् लोकान् क्रान्तवानसि । भगवान् कालकालस्त्वं तेन सत्येन मोचय ।
नष्टचन्द्रार्कगगने शोणयन्नतपःक्षिये । पुनस्त्रिलोकयसे लोकांस्तेन सत्येन मोचय । १४२५०
ब्रह्मरुद्रेन्द्रवाय्वग्निसरित्सागरपर्व्वताः । त्वत्स्था दृष्टा द्विजेन्द्रेण तेन सत्येन मोचय ।
मार्कण्डेन पुरा कल्पे प्रविश्य जठरं तव । चराचरगतं दृष्टं तेन सत्येन मोचय ।
एको विश्वमहायस्त्वं योगी योगमुपागतः । पुनर्लोकान् समुत्सृज्य तेन सत्येन मोचय ।
जलशय्यामुपासीनो योगनिद्रामुपागतः । लोकांश्चिन्तयसे भूयस्तेन सत्येन मोचय ।
वाराहं रूपमास्थाय वेदयज्ञपुरस्कृतं । धरा जलोद्धृता येन तेन सत्येन मोचय । १४२५५
उद्धृत्य दंष्ट्रया यज्ञं त्रीन् पिण्डान् कृतवानसि । त्वं पितॄणामपि हरे तेन सत्येन मोचय ।
प्रदुद्रुवुः सुराः सर्व्वे हिरण्याक्षभयार्द्दिताः । परित्रातास्त्वया देव तेन सत्येन मोचय ।
दीर्घवक्त्रेण रूपेण हिरण्याक्षस्य संयुगे । शिरो जहार चक्रेण तेन सत्येन मोचय ।
भग्नमूर्द्धाऽस्त्रिर्मसिक्तो हिरण्यकशिपुः पुरा । हुङ्कारेण हतो दैत्यस्तेन सत्येन मोचय ।
दानवाभ्यां हता वेदा ब्रह्मणः पश्यतः पुरा । परित्रातास्त्वया देव तेन सत्येन मोचय । १४२६०
कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभौ । ब्रह्मणे तेऽर्पिता वेदास्तेन सत्येन मोचय ।
देवदानवगन्धर्व्वा यक्षसिद्धमहोरगाः । अन्तं तव न पश्यन्ति तेन सत्येन मोचय ।
अपान्तरतमा नाम जातो देवस्य वै सुतः । कृताश्च तेन वेदार्थास्तेन सत्येन मोचय ।
वेदयज्ञाग्निहोत्राणि पितृयज्ञहवींषि च । रहस्यं तव देवेश तेन सत्येन मोचय ।
ऋषिर्दीर्घतपा नाम आत्रेयो गुरुशापतः । त्वत्प्रसादाच्च चक्षुष्मांस्तेन सत्येन मोचय । १४२६५
ग्राहग्रस्तं गजेन्द्रञ्च दीनं मृत्युवशे स्थितं । भक्तं मोचितवानसि हि तेन सत्येन मोचय ।
अव्ययश्चाव्ययश्च त्वं ब्रह्मण्यो भक्तवत्सलः । उपस्थितानां नित्याऽसि तेन सत्येन मोचय ।

शंखचक्रगदाहस्तं शार्ङ्गं गरुडमेव च। प्रसादयामि शिरसा ते बन्धान्मोचयन्तु मां।
ततः प्रसन्नो भगवानादिदेश खगोत्तमं। गरुडं नागबन्धारं बलिं मोचय बन्धनात्।
ततो निश्चिप्य गरुडः पक्षावतुलविक्रमः। जगाम वसुधामूलं यत्रास्ते संयतो बलिः। १४४७०
आगमं तस्य विज्ञाय नागा मुक्ता महासुरं। ययुः पुरीं भोगवतीं वैनतेयभयार्द्दिताः।
मुक्तं विष्णुप्रसादेन चिन्तयानमधोमुखं। भ्रष्टश्रियमुवाचेदं गरुत्मानपपन्नगं।
॥ गरुड उवाच ॥ दानवेन्द्र महाबाहो विष्णुस्त्वामब्रवीत् प्रभुः। मुक्तो निवस पाताले सपुत्रजनबान्धवः।
इतस्त्वया न गन्तव्यं गव्यूतिमपि दानव। समयं यदि भिन्द्यास्त्वं मूर्द्धा ते शतधा भवेत्।
पक्षीन्द्रवचनं श्रुत्वा दानवेन्द्रोऽब्रवीदिदं। स्थितोऽस्मि समये तस्य अनन्तस्य महात्मनः। १४४७५
जीव्योपायन्तु भगवान्मम किञ्चित् करोतु सः। इहस्थोऽहं सुखासीनो येनाप्याये खगेश्वर।
बलेस्तु वचनं श्रुत्वा गरुत्मानिदमब्रवीत्। पूर्व्वमेव कृतस्तेन जीव्योपायो महात्मना।
वर्त्तयिष्यन्ति ये यज्ञं विधिहीना द्विजातयः। प्रायश्चित्तमजानन्तो यज्ञभागं ततस्तव।
नैतेषां यज्ञभागं वै प्रतिगृह्णन्ति देवताः। अनेनाप्यायितं बले सुखमत्र निवत्स्यसि।
॥ वैशम्पायन उवाच ॥ सन्देशमेतं भगवान्दत्तवान् काश्यपात्मजः। दानवेन्द्रे महाबाहो विष्णुर्लोकप्रभावनः। १४४८०
इमं स्तवमनन्तस्य सर्व्वपापप्रमोचनं। यः पठेत नरो भक्त्या तस्य नश्यति किल्बिषं।
गोहत्यायाः प्रमुच्येत ब्रह्मघ्नो ब्रह्महत्यया। अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिं।
लग्नगर्भा प्रमुच्येत गुर्व्विणी जनयेत् सुतं। ये च मोक्षैषिणो लोके योगिनः सांख्यकापिलाः।
स्तवेनानेन गच्छन्ति श्वेतद्वीपमकल्मषाः। सर्व्वकामप्रदो ह्येष स्तवोऽनन्तस्य कीर्त्यते।
यः पठेत् प्रातरुत्थाय शुचिः प्रयतमानसः। सर्व्वकामवाप्नोति मानवो नात्र संशयः। १४४८५
एष वै वामनो नाम प्रादुर्भावो महात्मनः। वेदविद्भिर्द्विजैरेतत् पठ्यते वैष्णवं यशः।
यश्चेमं वामनं दिव्यं प्रादुर्भावं महात्मनः। शृणुयान्नियतो भक्त्या नरः पर्व्वसु पर्व्वसु।
परान् विजयते राजा यथा विष्णुर्महाबलः। यशश्च महदाप्नोति प्रेत्य सद्गतिमाप्नुयात्।
प्रियो भवति भूतानां सर्व्वेषां नात्र संशयः। पुत्रांश्च लभते धन्यान् मेधागुणसमन्वितान्।
प्रीयते पठतश्चास्य देवदेवो जनार्द्दनः। सर्व्वकामयुतश्चैव कृष्णद्वैपायनोऽब्रवीत्। १४४९०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि वामने प्रादुर्भावे त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥
॥ जनमेजय उवाच ॥ किमर्थं भगवान् विष्णुर्देवदेवो जनार्द्दनः। गतः कैलासशिखरमालयं शङ्करस्य च।
नारदाद्यैस्तपोवृद्धैर्मुनिभिस्तत्त्वदर्शिभिः। तत्र दृष्टो महादेवः शङ्करो नीललोहितः।
केशवेन पुरा विप्र कुर्व्वता तप उत्तमं। अर्च्चितो देवदेवेन शङ्करश्चेति नः श्रुतं।
देवौ तत्र जगन्नाथौ दृष्टवन्तौ पुरातनौ। अर्च्चयाञ्चक्रिरे देवा इन्द्राद्याः शङ्करं हरिं।
तौ हि देवौ महादेवावेकीभूतौ द्विधाकृतौ। एकात्मानौ जगद्योनी सृष्टिसंहारकारकौ। १४४९५
परस्परसमावेशाज्जगतः पालने स्थितौ। तयोस्तत्र यथा वृत्तं कैलासे पर्व्वतोत्तमे।

ऋषयः किमपेक्षन्त दृष्ट्वा तौ पुरुषोत्तमौ । एतत् सर्व्वमशेषेण वक्तुमर्हसि सत्तम ।
यथा गतो हरिर्विष्णुः कृष्णो जिष्णुः पुरातनः । यथा च शङ्करः साक्षात्तत्राजगाम भूधरः ।
एतत् सर्व्वं विप्रवर्य्य ब्रूहि तत्त्वेन पृच्छतः ।
॥ वैशम्पायन उवाच ॥ शृणुष्वावहितो राजन् यथा कृष्णो गतो नगं । यथा च दृष्टो देवेशः शङ्करो वृषवाहनः । १४४००
यथा चचार च तपो यथा ते मुनयो गताः । एवं तयोर्यथा वृत्तं तथा शृणु नरोत्तम ।
द्वैपायनोऽस्य भगवान् यथा प्रोवाच मां तथा । नमस्कृत्वा प्रवक्ष्यामि केशवं वृषवाहनं ।
यथाशक्ति यथायुक्तं शृणु यत्नेन सुव्रत । न चाशुश्रूषवे वाच्यं नृशंसायातपस्विने ।
नानधीताय वक्तव्यं पुण्यं पुण्यवतां सदा । स्वर्ग्यं यशस्यं धन्यञ्च बुद्धिशुद्धिकरं सदा ।
ध्येयं पुण्यात्मनां नित्यमिदं वेदार्थनिश्चितं । अनेकाश्चर्यसंयुक्तं सेवन्ते नित्यमीदृशं । १४४०५
मुनयो वेदनिरता नारदाद्यास्तपोधनाः । अत्यद्भुतं महापुण्यं वृत्तं कैलासपर्व्वते ।
शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य च । हतेष्वसुरसंघेषु नरकादिषु भूमिप ।
हतेष्वथ नृपेष्वेवं किञ्चिच्छिष्टेषु पाण्डुषु । शासति स्म सदा विष्णुः पृथिवीं पुरुषोत्तमः ।
द्वारवत्यां जगन्नाथो वसन् वृष्णिभिरीश्वरः । रुक्मिण्या सहितो देवो वसंस्तत्र पुरे हरिः ।
कदाचिच्च तया सार्द्धं शेते रात्रौ जगत्पतिः । विहरंश्च यथायोगं प्रीतः प्रीतियुजा तया । १४४१०
अथोवाच तदा देवी रुक्मिणी रुक्मभूषणा । पुत्रमिच्छामि देवेश त्वत्तो माधव नन्दनं ।
बलिनं रूपसम्पन्नं त्वयैव सदृशं प्रभो । वृष्णीनामपि नेतारं वीर्य्यवन्तं तपोनिधिं ।
सर्व्वशास्त्रार्थकुशलं राजविद्यापुरस्कृतं । एवमादिगुणैर्युक्तं दातुमर्हसि सत्तम ।
त्वयि सर्व्वस्य दातृत्वं नित्यमेव प्रतिष्ठितं । त्वं हि सर्व्वस्य कर्त्ता च दाता भोक्ता जगत्पतिः ।
विशेषतस्तु भृत्यानां शुश्रूषानियतात्मनां । वक्तव्यं किमु देवेश यदि भक्तोऽस्मि केशव । १४४१५
अनुग्रहो यदि स्यान्मे देवदेव जगत्पते । दातुमर्हसि पुत्रं त्वं वीर्य्यवन्तं जनार्द्दन ।
॥ वैशम्पायन उवाच ॥ इत्युक्तो देवदेवेशः प्रियया प्रीयमाणया । तदा महिष्या रुक्मिण्या रुक्मिशत्रुर्यदूद्वहः ।
प्रोवाच वचनं काले रुक्मिणीं यादवेश्वरः । दाताऽस्मि तादृशं पुत्रं यं त्वमिच्छसि मानिनि ।
नित्यभक्ताऽसि मे देवि नात्र कार्य्या विचारणा । अवश्यं तव दास्यामि पुत्रं शत्रुनिवर्हणं ।
पुत्रेण लोकान् जयति सतां कामदुघा हि ये । नरकं पुदिति ख्यातं दुःखञ्च नरकं विदुः । १४४२०
पुतस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च । अनन्ताः पुत्रिणो लोकाः सुखदाश्च प्रिये शुभाः ।
पतिर्भार्य्यां प्रविशति गर्भो भूत्वा स मातरं । तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ।
पुत्रवन्तं विभेतीन्द्रः किंनु तेनाजितं भवेत् । नापुत्रो विन्दते लोकान् कुपुत्रादन्यता वरा ।
कुपुत्रो नरके यस्मात् सुपुत्रात् स्वर्ग एव हि । तस्माद्विनीतं सत्पुत्रं श्रुतवन्तं दयापरं ।
विद्यया विनयो यस्माद्विद्यायुक्तं सुधार्म्मिकं । इच्छेत् पुत्रं पुत्रकामः पुरुषो यत्नवान् बुधः । १४४२५
तस्माद्दास्यामि ते पुत्रं विद्यावन्तं सुधार्म्मिकं । एष गच्छामि पुत्रार्थं कैलासं पर्व्वतोत्तमं ।

तत्रोपास्य महादेवं शङ्करं नीललोहितं । ततोऽस्माऽस्मि पुनस्ते भवाद्भुतचिते रताम् ।
तपसा ब्रह्मचर्य्येण भवं शङ्करमव्ययं । तोषयित्वा विरूपाक्षमादिदेवमजं विभुं ।
गमिष्याम्यहमद्यैव द्रष्टुं शङ्करमव्ययं । स च मे दास्यते पुत्रं तोषितस्तपसा मया ।
तत्र गत्वा महादेवं नमस्कृत्य सहोमया । प्रविश्य बदरीं पुण्यां मुनिजुष्टां तपोमयीं । १४४३०
अग्निहोत्राकुलां दिव्यां गङ्गानुप्लाविता सदा । मृगपक्षिसमायुक्तां विविधद्रुमलताकुलां ।
बदरीफलसंपूर्णां वानरैः शोभितद्रुमां । श्वेताब्जमहारम्यां कदलीखण्डमण्डितां ।
मुनिभिर्वेदतत्त्वार्थविचारनिपुणैः सदा । वेदनिश्चिततत्त्वार्थैः प्रमाणकुशलैर्युतां ।
इदमेकमिदं तत्त्वमिति निश्चितमानसैः । उपास्यमानामन्यत्र सिद्धैः सिद्धार्थतत्परैः ।
इतिहासपुराणज्ञैः सेव्यमानां महर्षिभिः । गच्छद्भिः स्वर्गनिलयं परित्यज्य कलेवरं । १४४३५
प्रसिद्धां महतीं देवीं यास्यामि सुकृतालयां । इत्युक्त्वा विररामैव देवदेवो जनार्द्दनः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥
॥ वैशम्पायन उवाच ॥ प्रभातायान्तु शर्व्वर्य्यां गन्तुमैच्छज्जनार्द्दनः । कृताग्निः कृतकल्याणः समाप्तवरदक्षिणः ।
गाश्च दत्त्वाऽथ विप्रेभ्यो नमस्कृत्य द्विजोत्तमान् । आस्थानमण्डपं कृष्णः प्रविवेश जगत्पतिः ।
आसनं महदास्थाय कृष्णोनाहूय सर्व्वशः । बलभद्रं शिनेः पुत्रं हार्द्दिक्यं शठसारणौ ।
उग्रसेनं महाबुद्धिमुद्धवं नीतिमत्तरं । यस्य बुद्धिं समाश्रित्य जीवन्ते यादवाः सुखं । १४४४०
नेता च यदुवृष्णीनां स तु धर्म्मपरः सदा । यस्य बिभ्यति देवाश्च नीतेस्तस्य महात्मनः ।
यस्य बुद्धिवशाद्विष्णुः शशास पृथिवीं तदा । तस्य शिष्यवरं वीरमुद्धवं देवसन्निभं ।
अन्यानपि यदून् सर्व्वानुवाच भगवान् हरिः । शृण्वन्तु मम वाक्यानि यादवाः सर्व्व एव हि ।
शृणु चापि वचो मह्यं पितुस्तद्भव मे सखे । बाल्यात् प्रभृति यो यत्नो मम दुष्टनिवर्हणे ।
प्रत्यक्षं भवता दृष्टं पूतनानिधनं नृप । केशी च निहतो बाल्ये मया बालेन यादवाः । १४४४५
गोवर्द्धनो धृतः शैलो गावश्च परिपालिताः । अभिषिक्तोऽस्मि शक्रेण देवानामग्रतः स्थितः ।
कंसोऽपि निधनं नीतो मया चाणूरमुष्टिकौ । उग्रसेनोऽभिषिक्तश्च कृता द्वारवती मया ।
अन्ये चापि नृपा राजन् बलिनो निहता मया । योऽपि वीरो जरासन्धो निग्रहीतो बलान्मया ।
भीमेन बलिना राजन्नयेन मम यादवाः । शृगालो निहतः संख्ये गोमन्ताद्गच्छता मया ।
योऽपि वीरो दुरात्माऽसौ दानवो नरको हतः । निष्कण्टकमिमं लोकं कृतवान् राजसत्तमाः । १४४५०
किन्तु वीरो नृपो कश्चित् सखा भीमस्य यादवाः । पौण्ड्रो वीर्य्यवतां नेता द्वेष्टा चाथो सदा मम ।
शिष्यो द्रोणस्य राजेन्द्रो बली शस्त्रास्त्रवित् कृती । प्राज्ञश्च नीतिमान् मायावी नेता सर्व्वस्य बलवान् ।
योद्धा युद्धप्रियो राजा नामदन्य इवापरः । एकान्तमपुरस्माकं छिद्रान्वेषी सदा मम ।
बाधिष्यते पुरीं योद्धा छिद्रं यदि लभेत सः । न त्वसमाश्रो बलवान् पुण्ड्रसेना नृपोत्तमाः ।
यत्ता भवन्तस्तिष्ठन्तु प्रगृहीतशरासनाः । यथा न बाधते राजा पुरीं यदुकुलाश्रयां । १४४५५

अहन्तु यास्ये कैलासं कुतश्चित् कारणान्नृपाः । शङ्करं द्रष्टुकामोऽस्मि भूतभावनभावनं ।
यावदागमनं मह्यं तावद्यत्ता भवन्त्विह । मया विरहितां चेमां यदि जानाति पुष्कर: ।
आगमिष्यति राजेन्द्रा योत्स्यते च पुरीमिमां । इमां निर्यादवां कर्त्तुं शक्नोतीति च मे मतिः ।
यत्ता भवत राजेन्द्राः खड्गैः प्रासैः परश्वधैः । पाषाणैः कर्णपीतैश्च सन्नद्धा भवत स्वकैः ।
पिधाय च कपाटानि महाद्वाराणि यत्नतः । एक एव महाद्वारो गमनागमने सदा । १४४६०
मुद्रया सह गच्छन्तु राज्ञो ये गन्तुमीश्वराः । न चामुद्रः प्रवेष्टव्यो द्वारपालस्य पश्यतः ।
यावदागमनं मह्यं तावदेवं भविष्यति । मृगया नात्र कर्त्तव्या न च क्रीडा बहिः पुरात् ।
ज्ञातव्याश्च परे स्वे च गमनागमने सदा । एवमादिक्रिया कार्य्या यावदागमनं मम ।
इत्युक्त्वा यादवान् सर्व्वान् सात्यकिं पुनराह च ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां पञ्चषष्ट्यधिकद्विशततोऽध्यायः ॥ २६५ ॥
॥ भगवानुवाच ॥ सात्यके शृणु मद्वाक्यं यत्तो भव युधाम्वर । त्वन्तु खड्गी गदी भूत्वा चापी वाणी तनुत्रवान् । १४४६५
तिष्ठ यत्नेन रक्षस्व पुरीं बहुनृपाश्रयां । न च निद्रा त्वया कार्य्या रात्रौ यदुवृष प्रभो ।
न च व्याख्या त्वया कार्य्या शास्त्राणां शास्त्रतत्पर । न च वादस्त्वया कार्य्यो वादिभिः सह वृष्णिप ।
त्वं हि योद्धा बली चैव धनुर्वेदस्य वेदवित् । तथा कुरु यथा वीर नोपहास्यो भवेर्महि ।
॥ सात्यकिरुवाच ॥ करिष्यामि वचस्तुभ्यं यथाशक्ति जनार्द्दन । आज्ञा तव जगन्नाथ धार्य्या यत्नेन मे सदा ।
भृत्यवत् प्रचरिष्यामि कामपालस्य माधव । यावदागमनं तुभ्यं तावत् स्थास्यामि यत्नतः । १४४७०
प्रसादस्तव गोविन्द यदि स्यान्मयि माधव । किं नाम मम दुःसाध्यं शत्रूणां निग्रहे रणे ।
यदि शक्रं यमं वाऽपि कुवेरमपि पाशिनं । सर्व्वानेतान् विजेष्यामि किमुपेन्द्र नृपोत्तमं ।
गच्छ कार्य्यं कुरुष्वेदं यत्तोऽहं सततं हरे । उद्धवं पुनराहेदं कृष्णः पद्मनिभेक्षणः ।
शृणूद्धव त्वं वाक्यं मे कुर्य्याश्चैतत् प्रयत्नवान् । रक्ष्या नयेन राजेन्द्र पुरी द्वारवती त्वया ।
यत्तो भव सदा तात कुरु साहाय्यमत्र नः । लज्जा मम समुत्पन्ना वदतस्तव साम्प्रतं । १४४७५
त्वं हि नेता समस्तस्य विद्यापारस्य सर्व्वतः । को नु शक्ष्यति मेधावी वक्तुं विद्यावतः पुरः ।
यत्कार्य्यं तद्भवान् वेत्ति ह्यकार्य्यञ्चापि सर्व्वतः । अतोऽहं विरमे तात वक्तुं सम्प्रति वृष्णिप ।
॥ उद्धव उवाच ॥ किमद्य तव गोविन्द वर्त्तते साम्प्रति प्रभो । अहो प्रसन्नता मह्यं किन्तु प्रीतिरियं तव ।
जानाम्यहं जगन्नाथ प्रसादस्यैष विस्तरः । यस्य प्रसन्नो भवसि तस्य किं नास्ति केशव ।
त्वं हि सर्व्वस्य जगतः कर्त्ता हर्त्ता प्रधानतः । प्रभवः सर्व्वकार्य्याणां वक्ता श्रोता प्रमाणवित् । १४४८०
ध्याता ध्यानमयो ध्येय इति ब्रह्मविदो विदुः । जेता देवरिपूणाञ्च गोप्ता नाकसदां भवान् ।
त्वन्नाथा वयमेवेति जीवामो निहतद्विषः । इयं नीतिरता मन्ये नेता नीतेर्यतो भवान् ।
को नु नाम नयं वेद त्वामृते साम्प्रतं वद । नीतिस्त्वं सर्व्वकार्य्याणामिति मे निश्चिता मतिः ।
दुर्गाढो नयमार्गोऽयमित्याहुस्तद्विदो जनाः । चतुर्द्धा प्रोच्यते नीतिः सामदाने जनार्द्दन ।

दण्डो भेदो मनुष्याणां नियताक्यरे सदा । दण्डोषु दण्डमिच्छन्ति सामान्यन्तु भवे हरे । १४४८५
बलवत्स्वथ दानन्तु यथाणामप्यगोचरे । प्रयोक्तव्यो महाभेद इति नीतिमतां मतं ।
तेषु तेष्वथ सर्व्वेषु प्रमाणं त्वां विदुर्ब्बुधाः । किमत्र बहुनोक्तेन सर्व्वं त्वयि समर्पितं ।
॥ वैशम्पायन उवाच ॥ इत्युक्त्वा विररामैव उद्धवो नीतिमत्तरः । ततः स भगवान् विष्णुरेवमेव नृपोत्तम ।
कामपालं महाबाहुमुवाच यदुसंसदि । उग्रसेनं नृपं राजंस्तथा हार्द्दिक्यमेव च ।
कामपालं पुनर्विष्णुरिदं प्रोवाच तत्त्ववित् । न प्रमादस्त्वया कार्य्यः सर्व्वदा यत्नवान् भव । १४४९०
स्थिते त्वयि महाबाहो का पीडा जगतो भवेत् । गदी भव सदा त्वार्य्य न क्रीडा सर्व्वदा भवेत् ।
रक्ष त्वं सर्व्वदा यत्नात् पुरीं द्वारवतीं प्रभो । गोपहार्य्या यथा स्याम तथा कुरु गदी भव ।
उत्साहः सर्व्वदा कार्य्यो निरुत्साहो न यत्नतः । बाढमित्यब्रवीद्रामः कृष्णं वृष्णिकुलोद्भवं ।
वृष्णयः सर्व्व एवैते स्वं स्वं सद्म समाययुः । गन्तुमैच्छज्जगन्नाथः कैलासं पर्व्वतोत्तमं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कैलासयात्रायां षट्षष्ट्यधिकद्विशततोऽध्यायः ॥ २६६ ॥
॥ वैशम्पायन उवाच ॥ ततः सञ्चिन्तयामास गरुडं पक्षिपुङ्गवं । आगच्छ त्वरितं तार्क्ष्य इति विष्णुर्ज्जगत्पतिः । १४४९५
ततः स भगवांस्तार्क्ष्यो वेदराशिरिति स्मृतः । बलवान् विक्रमी योगशास्त्रनेता कुरूद्वह ।
यज्ञमूर्त्तिः पुराणात्मा साममूर्द्धा च पावनः । ऋग्वेदपक्षवान् पक्षी पिङ्गलो जटिलाकृतिः ।
ताम्रतुण्डः सोमहरः प्रभुजेता महाशिराः । पन्नगारिः पद्मनेत्रः साक्षाद्विष्णुरिवापरः ।
वाहनं देवदेवस्य दानवीगर्भकृन्तनः । राक्षसासुरसंघानां जेता पक्षबलेन यः ।
प्रादुरासीन्महावीर्य्यः केशवस्याग्रतस्तदा । जानुभ्यामपतद्भूमौ नमो विष्णो जगत्पते । १४५००
नमस्ते देवदेवेश हरे स्वामिन्निति ब्रुवन् । पस्पर्श पाणिना कृष्णः स्वागतं तार्क्ष्य पुङ्गव ।
इत्युवाच तदा तार्क्ष्यं यास्ये कैलासपर्व्वतं । शूलिनं द्रष्टुमिच्छामि शङ्करं शाश्वतं शिवं ।
बाढमित्यब्रवीत्तार्क्ष्य आरुरोह जनार्द्दनः । तिष्ठध्वमिति होवाच यादवान् पार्श्ववर्त्तिनः ।
ततो ययौ जगन्नाथो दिशं प्रागुत्तरां हरिः । रवेण महता तार्क्ष्यस्त्रैलोक्यं समकम्पयत् ।
सागरं क्षोभयामास पक्षाभ्यां पक्षी शक्तस्तदा । पक्षेण पर्व्वतान् सर्व्वान् वहन् देवं जनार्द्दनं । १४५०५
ततो देवाः सगन्धर्व्वा आकाशेऽधिष्ठितास्तदा । तुष्टुवुः पुण्डरीकाक्षं वाग्भिरिष्टाभिरीश्वरं ।
जय देव जगन्नाथ जय विष्णो जगत्पते । जयाजय नमो देव भूतभावन भावन ।
नमः परमसिंहाय दैत्यदानवनाशन । जयाजेय हरे देव योगिध्येय परागते ।
नारायण नमो देव कृष्ण कृष्ण हरे हर । आदिकर्त्तः पुराणात्मन् ब्रह्मयोने सनातन ।
नमस्ते सकलेशाय निर्गुणाय गुणात्मने । भक्तिप्रियाय भक्ताय नमो दानवनाशन । १४५१०
अचिन्त्यमूर्त्तये तुभ्यं नमस्ते सकलेश्वर । इत्यादिभिस्तदा देवं वाग्भिरीशानमव्ययं ।
तुष्टुवुर्देवगन्धर्व्वा चारणः सिद्धचारणाः । शृण्वन्नेव जगन्नाथः स्तुतिवाक्यानि तानि च ।
ययौ सार्द्धं सुरगणैर्मुनिभिर्व्वेदपारगैः । यत्र पूर्व्वं स्वयं विष्णुस्तपस्तेपे सुदारुणं ।

भवान् सर्व्वत्र कुशलः सर्व्वकार्य्येषु पण्डितः । पूजितो देवसिद्धेषु गन्धर्व्वेषु महात्मसु ।
सर्व्वत्रगो निराबाधो गन्ता सर्व्वत्र सर्व्वदा । अगम्यं तव विप्रेन्द्र ब्रह्माण्डेऽत्र न किञ्चन । ११०५५
नारदेदं वद त्वं हि यत्र यत्र गतो भवान् । तत्र तत्र तपःसिद्धो लोकप्रथितवीर्य्यवान् ।
पौण्ड्र एव च विख्यातो वासुदेवेति शब्दितः । शङ्खी चक्री गदी शर्ङ्गी खड्गी तूणी तथा भवान् ।
विजेता सर्व्वभूपानां दाता सर्व्वस्य सर्व्वदा । भोक्ता राज्यस्य सर्व्वत्र शास्ता राजा बलाद्बली ।
अजेयः सर्व्वसैन्यानां रक्षिता स्वजनस्य च । योऽस्य गोपकनामाऽसौ वासुदेवेति शब्दितः ।
तस्य वीर्य्यबले न स्तो नाम्नो हि मम धारणे । स हि गोपो वृथा बाल्यात्स्वीकारयत्येव नाम मे । ११०६०
इदं निश्चिनु विप्रेन्द्र एक एव भवाम्यहं । वासुदेवो जगत्यस्मिन्निश्चित्य वक्तुमर्हसि ।
वृष्णीन् सर्व्वान् बलात् छित्त्वा निर्द्दहिष्ये च तां पुरीं । द्वारकां वृष्णिनिलयां योद्धा चाहं महामते ।
एते च बलिनः सर्व्वे नृपा मम समागताः । अश्वाश्च वेगिनः सन्ति रथा वायुजवा मम ।
उग्रा मत्ताः सहस्रश्च गजा नियुतमेव च । एतेनैव बलेनाजौ हनिष्ये केशवं रणे ।
तस्मादेवं सदा विप्र वद मह्यं पुरे मम । इन्द्रस्यापि सदा विप्र वद नारद सांप्रतं । ११०६५
प्रार्थनैषा मम विभो नमस्ये त्वां तपोधन ।
॥ नारद उवाच ॥ सर्व्वगः सदा चास्मि यावद्ब्रह्माण्डसंस्थितिः । भवार्थः सर्व्वकार्य्येषु गमने लोकविश्रुत ।
किन्तु वक्तुं तथा राजन्नोत्सहे नृपसत्तम । मर्त्त्यो भाषति देवेशे चक्रपाणौ जनार्द्दने ।
विष्णौ सर्व्वगते देवे दुष्टान् हत्वा यथान्यवान् । वासुदेवेति को नाम निष्ठत्यस्मिन् धराविति ।
को नाम वक्तुमेवेदं कृष्णो भाषति गोमती । अज्ञानाद्वक्तुमेवस्य समर्थाः प्रकृता नराः । ११०७०
हरिः सर्व्वगतो विष्णुर्द्दर्पं ते व्यपनेष्यति । अचिन्त्यविभवो विष्णुः शार्ङ्गधन्वा गदाधरः ।
आदिदेवः पुराणात्मा दर्पन्ते व्यपनेष्यति । हास्यमेतन्महाराज यच्च वै तव संस्थितं ।
शार्ङ्गं खड्गं तथा राजन् महाघोरं न दाप्यते । अतीव हास्यकालोऽयं तव संप्रति वर्त्तते ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकनारदसंवादे त्र्यशीत्यधिकद्विशततोऽध्यायः ॥ १८३ ॥
॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो महाराज पौण्ड्रो मदबलान्वितः । नारदं विप्रवर्य्यं तं प्रोवाच नृपसंसदि ।
किमिदं विप्र विप्रर्षे राजाऽहं वो द्विजैः सह । गच्छ त्वं काममथवा मुने शापप्रदः सदा । ११०७५
भीतस्त्वत्तो महाबुद्धे गच्छ त्वं काममद्य हि । इत्युक्तो नृपवर्य्येण तुष्णीमेव स नारदः ।
जगामाकाशगमनो यत्र तिष्ठति केशवः । स गत्वा विष्णुमव्यग्रं विष्णोः सर्व्वं शशंस ह ।
तच्छ्रुत्वा भगवान् विष्णुर्वैष्णवं वदतामिति । दर्पं तस्यापनेष्यामि शोभने द्विजसत्तम ।
इत्युक्त्वा विररामैव तस्मिन् बदरिकाश्रमे । ततः पौण्ड्रो महाबाहुर्वंशैश्चाङ्गभिरीश्वरः ।
अश्वैरनेकसाहस्रैर्गजैर्व्वाजिभिरन्वितः । शतकोटिसमायुक्तः स राजा वत्यमङ्गरः । ११०८०
अनेकशतसाहस्रैः पत्तिभिः समन्वितः । एकलव्यप्रभृतिभीराजभिश्च समन्ततः ।
अष्टौ रथसहस्राणि नागानामयुतं तथा । अर्व्वुदं पत्तिसंघानां तद्वत्समपद्यत ।

एतेन तु बलेनाजौ प्रस्थितो नृपसत्तम: । विरराज महाराज उदयस्थो यथा रवि: ।
स ययौ मथुरां त्यक्त्वा नगरीं द्वारकामनु । एको द्वीपिकाहस्तो रात्रौ तमसि दारुणे ।
ययुर्बहुविधशस्त्राढ्या: संपतन्तो महाबला: । द्वारकां वीर्य्यसम्पन्ना महाघोरां नृपोत्तमा: । १५०८५
रथं महान्तमारुह्य सर्व्वोपकरणै: समावृतं । पट्टिशासिसमाकीर्णं गदापरिघसंकुलं ।
शक्तितोमरसंकीर्णं ध्वजमालासमाचितं । किङ्किणीजालसंयुक्तं शरासिप्रासमंयुतं ।
महाघोरं महारौद्रं युगान्तज्वलनोपमं । धनुर्गदासमाकीर्णं महामेघोपमं महत् ।
गन्धर्व्वनगराकारं ययौ द्वारवतीमनु । प्रदीप्तदीपिको राजा वीर्य्यवान् बलवान्नृप ।
हन्तुमेकं जगन्नाथं कृष्णमेव समन्तत: । आकर्षन् बलमुख्यांस्तान् राज्ञ: सर्व्वान् महाद्युति: । १५०९०
पुरद्वारं समासाद्य बलं संस्थाप्य सर्व्वत: । इदं प्रोवाच राजा तु नृपान् सर्व्वानवस्थितान् ।
ताड्यतामद्य भेरी तु नाम विश्राव्य मामकं । युध्यतां युध्यतामद्य देयं वा प्रतिदीयतां ।
आगत: पौण्ड्रको राजा युद्धार्थी वीर्य्यवत्तर: । हन्तुकाम: समयान् व: कृष्णबाहुबलाश्रयान् ।
इति ते प्रेषिता: सर्व्वे समीयु: सूचका यदून् । दीपिकाश्च प्रदीप्यन्ते बहु: शतसहस्रश: ।
इतश्चेतश्च राजानो युध्यन्ते युद्धलालसा: । पुरीं ते पुरतस्तत्र क्षत्रिया: क्षत्रियास्तथा । १५०९५
सिंहनादं प्रकुर्व्वन्त: शस्त्रधारासमाकुला: । कुतोऽयं वृष्णिप्रवर: कुतो राजा जनार्द्दन: ।
कुतोऽयं सात्यकिर्व्वीर: कुतो हार्द्दिक्य एव च । कुतो नु बलभद्रश्च सर्व्वयादवसत्तम: ।
इत्येवं कथयन्तो वै राजान: सर्व्व एव ते ।
आदाय शस्त्राणि बहूनि सर्व्वत: शरांश्च चापानि बहूनि सर्व्वे । युद्धाय सन्नाहनिबद्धगात्रा ययुर्वरै: पुरीं द्वारवतीं नृपोत्तमा: ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकस्य द्वारकागमने चतुरशीत्यधिकद्विशततोऽध्याय: ॥ २८४ ॥
॥ वैशम्पायन उवाच ॥ ततश्च यादवा: सर्व्वे दृष्ट्वा सैनिकसम्भ्रमं । रात्रौ च व्यसनं प्राप्तं महाशस्त्रसमाकुलं । १५१००
महावातसमुद्भूतकल्पान्तसागरोपमं । सन्नद्धा: समपद्यन्त क्षत्रिया युद्धलालसा: ।
प्रदीप्तदीपिका: सर्व्वे यादवा: शस्त्रयोधिन: । सात्यकिर्बलभद्रश्च हार्द्दिक्यो निशठस्तथा ।
उद्धवोऽथ महाबुद्धिरुग्रसेनो महाबल: । अन्ये च यादवा: सर्व्वे कवचप्रपदे रता: ।
समस्तयुद्धकुशला रात्रौ शस्त्रयोधिन: । क्षत्रिया: बहिर्गताश्चैव सर्व्वे शस्त्रसमाकुला: ।
युद्धाय समपद्यन्त बहवो बाहुशालिन: । रथिनो गजिनश्चैव सादिन: सायुधास्तथा । १५१०५
नित्ययुक्ता महात्मानो धन्विन: पुरुषोत्तमा: । निर्ययुर्नगरात्तूर्णं दीपिकाभि: समन्तत: ।
कुत: पौण्ड्रक इत्येवं वदन्त: सर्व्वसात्वता: । दीपिकादीपितो देशो निस्तमा: संमपद्यत ।
ततो वितिमिरो देश: समन्तात् समपद्यत । युद्धं समभवद्घोरं वृष्णिभि: शत्रुभि: सह ।
ततो महान् समभवच्च नादो रोमहर्षण: । रथा रथै: समाकुला गजाश्च गजयूथपै: ।
रथा रथै: समायुक्ता: सादिभि: सादिनस्तथा । पत्तिन: पत्तिभि: सार्द्धं गदिभिर्गदिनस्तथा । १५११०
परस्परव्यतीकारो रण आसीत् सुदारुण: । महासमयसंक्षोभ: शब्दश्चैषां महात्मनां ।

धावन्तः प्रहरन्त्येतान् सर्व्वतो नृप घ्नन्ति नः । अयमेव महाबाहुः खड्गी पतति वीर्य्यवान् ।
अयमेव शरो घोरो वर्त्ततेऽतिसुदारुणः । गदी चायं महावीर्य्यः सर्व्वान्नो बाधते नृप ।
अयं रथी शरी चापी गदी तूणी तनुत्रवान् । पट्टिशी सर्व्वतो याति कुन्तपाणिरयं बली ।
अयमत्र महाशूली संस्थितः सर्व्वतो दिशं । गजोऽयं सविषाणाग्रो वर्त्तते सर्व्वतः प्रति । १११८५
अयं सर्व्वगः शूरो वेगवान् वातसन्निभः । शरान् शरैः समाघ्नन्ति खड्गान् खड्गैर्जगत्पते ।
कुन्तान् कुन्तैः समाजघ्नुर्गदाभिश्च गदास्तथा । परिघान् परिघैः सार्द्धं शूलान् शूलैः समन्ततः ।
एवं तेषां महाराज कुर्व्वतां रणमुत्तमं । संग्रामः सुमहानासीच्छब्दश्चापि महानभूत् ।
भूतानि सुबहून्याशो शब्दवन्ति महान्ति च । प्रादुरासन् सहस्राणि शङ्खानाञ्चैव निस्वनः ।
रात्रौ प्रादुरभूच्छब्दः संग्रामे लोमहर्षणः । प्रावर्त्तत महायुद्धं वृष्णीनाञ्चैव तैः सह । १११९०
केचिद्धताः समापेतुः शृङ्गिण्यां पृथिवीक्षितः । केचित् पतितमाक्लिष्टा विप्रकीर्णशिरोधराः ।
पेतुरुर्व्व्यां महावीर्य्या राजानः शस्त्रपाणयः । केचित्तु भिन्नमर्म्माणः समापेतुः सहस्रशः ।
परस्परं समाश्रित्य परस्परवधैषिणः । न्यस्तशस्त्रा महात्मानः समन्तात् शतविग्रहाः ।
पेतुर्गतासवः केचित् यमराष्ट्रविवर्द्धनाः । एवन्ते निहता राजन् पोथिताः सर्व्व एव तु ।
एतस्मिन्नन्तरे शूर एकलव्यो निषादपः । धनुर्गृह्य महाघोरं कालान्तकयमोपमः । १११९५
शरैरनेकसाहस्रैरर्द्दयामास यादवान् । परःशतैः शराणान्तु निशितैर्म्मर्म्मभेदिभिः ।
वृष्णीनाञ्च बलं सर्व्वं पोथयामास सर्व्वतः । युध्यतः शस्त्रपाणींश्च क्षत्रियान् वीर्य्यवत्तरान् ।
निशठं पञ्चविंशत्या शराणां नतपर्व्वणां । सारणं दशभिर्विद्ध्वा चारुदेष्णं पञ्चभिः शरैः ।
उग्रसेनं नवत्या तु वसुदेवञ्च सप्तभिः । उद्धवं दशभिश्चैव अक्रूरं पञ्चभिः शरैः ।
एवमेवेतरे सर्व्वे निहता निशितैः शरैः । विद्राव्य यादवीं सेनां नाम विश्राव्य वीर्य्यवान् । ११२००
एकलव्यो यदुवृषान् वीर्य्यवान् बलवानहं । इदानीं सात्यकिर्वीरः क्व याति महाबलः ।
मदमत्तो हली साक्षात् क्व यातोऽद्य गदाधरः । इत्याह सिंहनादेन सिंहान् विस्मापयन्निव ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे रात्रियुद्धे पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५ ॥

॥ वैशम्पायन उवाच ॥ निवृत्तेष्वथ सैन्येषु वृष्णिवीरेषु चैव हि । भीतेष्वथ महाराज हतेषु युधि सर्व्वतः ।
दीपिकासु प्रशान्तासु निःशब्दे सति सर्व्वतः । जितमित्येव तन्मत्वा वृष्णीनां बलमुत्तमं ।
ततः पौण्ड्रो महावीर्य्यो बभाषे सैनिकान् स्वकान् । शीघ्रं गच्छत राजेन्द्राः शस्त्रैः कुन्तैः पुरोत्तमां । ११२०५
कुठारैः कुन्तकैश्चैव पाषाणैः सर्व्वतो दिशं । कर्णपत्रैः क्षुरैश्चैव सर्व्वतो यात भूमिपाः ।
भिन्दन्तां प्राकारचयाः प्रासादाश्च समन्ततः । गृह्णन्तां कन्यकाः सर्व्वा दास्यश्चैव समन्ततः ।
गृह्णन्तां रत्नमुख्याश्च धनानि सुबहून्यथ । ते तथेति महात्मानो राजानः सर्व्व एव तु ।
कुठारैः सर्व्वतश्चैव चिच्छिदुः पौण्ड्रकाज्ञया । प्राकारांश्चैव सर्व्वांश्च प्रासादान् वरवेश्मनाम् ।
अथ तत्र महान् शब्दः प्रादुरासीत् समन्ततः । टङ्केषु पात्यमानेषु प्राकारेषु महाबलैः । ११२१०

पूर्व्वद्वारे महाराज भिन्नाः प्राकारसञ्चयाः । श्रुत्वा शब्दं महाघोरं सात्यकिः क्रोधमूर्च्छितः ।
मयि सर्व्वं समारोप्य केशवो यादवेश्वरः । गतः कैलासशिखरं द्रष्टुं शङ्करमव्ययं ।
अवश्यं हि मया रक्ष्या पुरी द्वारवती स्थिरं । इति सञ्चिन्त्य मनसा धनुरादाय सत्वरं ।
रथं महान्तमारुह्य दारुकस्य महात्मनः । पुत्त्रेण संस्कृतं घोरं यन्ता च स्वयमेव हि ।
धनुर्म्महत्तदादाय शरांश्चाशीविषोपमान् । आमुच्य कवचं घोरं दृढं संपातदुःसहं । १५२४५
अङ्गदी कुण्डली तूणी शरी चापी गदासिमान् । ययौ युद्धाय शैनेयः संस्मरन् केशवं वचः ।
दीपिकादीपिते देशे ययौ सात्यकिरुत्तमः । तथैव बलदेवोऽपि रथमारुह्य भास्वरं ।
गदी शरी महावीर्य्यः प्रायाद्रणचिकीर्षया । सिंहनादं प्रकुर्व्वन् वै मुञ्चन् वै भैरवं रवं ।
उद्धवोऽपि बली साक्षाद्गजमारुह्य सम्मतं । कृत्वा महारवं घोरं सर्व्वयादवसत्तमः ।
ययौ नीतिं विचिन्वानः परां प्रीतिं महाबलः । अन्ये च वृष्णयः सर्व्वे ययुः संग्रामलालसाः । १५२५०
रथान् गजान् समारुह्य हार्द्दिक्यप्रमुखास्तदा । दीपिकाभिश्च सर्व्वत्र पुरोद्दत्ताभिरीश्वराः ।
सिंहनादं प्रकुर्व्वन्तः स्मरन्तः केशवं वचः । पूर्व्वद्वारं समागम्य वृष्णयो युद्धलालसाः ।
ते समेत्य यथायोगं स्थितास्तत्र महाबलाः । स्थिते सैन्ये महाघोरे दीपिकादीपिते तथा ।
शिनिर्व्वीरः शरी चापी गदी तूणीरवान् विभो । वायव्यास्त्रं समादाय योजयित्वा महाशरं ।
आकर्णपूर्णमाकृष्य धनुःप्रवरमुत्तमं । मुमोच परसैन्येषु शिनिर्वीरः प्रतापवान् । १५२५५
वायव्यास्त्रेण ते सर्व्वे तत्रस्था नरसत्तमाः । विजिता स्वस्ववीर्य्येण यत्र तिष्ठति पौण्ड्रकः ।
तत्र गत्वा स्थिताः सर्व्वे निर्द्धूता वातरंहसा । यत्र पूर्व्वं स्थिताः सर्व्वे विद्रुता राजसत्तमाः ।
तत्र स्थित्वा च शैनेयः शरमादाय सत्वरः । निशितं सर्पभोगाभं बभाषे सात्यकिस्तदा ।
क्व इदानीं महाबुद्धिः पौण्ड्रको राजसत्तमः । स्थितोऽस्मि व्यवसायेन शरी चापी महाबलः ।
यदि द्रष्टा दुरात्मानं ततो हन्ता नृपाधमं । भृत्योऽस्मि केशवस्याहं जिघांसुः पौण्ड्रकं स्थितः । १५२६०
छित्त्वा शिरस्तु तस्याथ सर्व्वलोकस्य पश्यतः । बलिं दास्यामि भूतेभ्यः स्वभ्यस्तैव दुरात्मनः ।
को नाम ईदृशं कर्म्म चौरवच्च समाचरेत् । सुप्तेषु निशि सर्व्वेषु यादवेषु महात्मसु ।
चौरोऽयं सर्व्वथा राजा न हि राजगुणान्वितः । यदि शक्तो न कुर्य्याच्च चौर्य्यमेवं नृपाधमः ।
अहोऽस्य बलिता राज्ञश्चौर्य्यकार्य्यं प्रकुर्व्वतः । सर्व्वथा गमनं तस्य न हि पश्यामि सांप्रतं ।
इत्युक्त्वा सात्यकिर्व्वीरः प्रजहास महाबलः । विस्फार्य्य सुदृढं चापं सन्दधे कार्म्मुके शरं । १५२६५
आकर्ण्य वचनं वीरः सात्यकेस्तस्य धीमतः । क्व नु कृष्णः क्व गोपालः कुतः सोऽद्य प्रवर्त्तते ।
स्त्रीहन्ता पशुहन्ता च क्व च स्वामीति वेदितः । स इदानीं क्व वर्त्तेत गृहीत्वा मम नाम तत् ।
हन्ता सख्युर्म्महावीर्य्यो नरकस्य महात्मनः । ममैव तात युद्धेऽस्मिन् हते तस्मिन् दुरात्मनि ।
गच्छ त्वं कामतो वीर योद्धुं न क्षमते भवान् । अथवा तिष्ठ किञ्चित्तु ततो द्रष्टाऽसि मे बलं ।
शिरस्ते पातयिष्यामि शरैर्घोरैर्दुरासदैः । हतस्य तव वीरेह भूमिः पास्यति शोणितं । १५२७०

श्रूयते स तथा गोपो हतः सात्यकिरित्यपि। यो गर्व्वस्तस्य गोपस्य सर्व्वदा वर्त्तते महान्।
विनश्यतु स तु क्षिप्रं हते त्वयि यदूत्तम। त्वयि रक्षां समादिश्य गोपः कैलासपर्व्वतं।
गत इत्येवमस्माभिः श्रुतं पूर्व्वं महामते। शरं प्रहास्ये निशितं यदि शक्तोऽसि सात्यके।
इत्युक्त्वा बाणमादाय ययौ योद्धुं व्यवस्थितः।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे सात्यकियुद्धे-षडशीत्यधिकद्विशततोऽध्यायः॥ २८६॥

॥ वैशम्पायन उवाच॥ ततः क्रुद्धो महाराज सात्यकिर्वृष्णिपुङ्गवः। उवाच वचनं राजन् वासुदेवं स्मरन्निव। १४१७७
अवोचदीदृशं वाक्यं वासुदेवं नृपाधमः। को नाम जगतां नाथमित्थं ब्रूयाज्जिजीविषुः।
मृत्युसंस्था सर्व्वथा याति वदन्तं तादृशं वचः। जिह्वा ते शतधा दीर्य्येदवदत्तादृशं वचः।
एष ते पातयिष्यामि शिरः कायाच्च पौण्ड्रक। यन्नाम वासुदेवेति तव संप्रति वर्त्तते।
यावत् पतति कायात्ते शिरस्तावत् प्रवर्त्तते। स एव सो नु भगवान् वासुदेवो भविष्यति।
एक एव जगन्नाथः कर्त्ता सर्व्वस्य सर्व्वगः। दुरात्मन् सर्व्वथा देवो भविष्यति न संशयः। १४१८०
एष तेऽहं शिरः कायात् पातयिष्यामि राजक। यद्यसौ भगवान् विष्णुर्नागमिष्यति सांप्रतं।
अस्त्रवीर्य्यं बलञ्चैव सर्व्वं दर्शय साम्प्रतं। मातः परतरं राजन् वीर्य्यं तव च वर्त्तते।
सर्व्वं दर्शय यत्नेन स्थितोऽस्मि व्यवसायवान्। शरी चापी गदी खड्गी सर्व्वथाऽहमुपस्थितः।
नैतन्नगरमायासीः सत्येनैतद्ब्रवीम्यहं। सर्व्वथा कृतकृत्योऽस्मि दृष्ट्वा त्वां वासुदेवक।
तवाङ्गं तिलशः कृत्वा श्वभ्यो दास्यामि राजक। इत्युक्त्वा बाणमादाय वासुदेवं महाबलः। १४१८५
आकर्णपूर्णमाकृष्य विव्याध निशितं शरं। स तेन विद्धो यदुना वासुदेवः प्रतापवान्।
नवभिर्द्दशभिश्चैव शरैः सन्नतपर्व्वभिः। विव्याध सात्यकिं राजा नदंश्च बहुधा किल।
ततो नाराचमादाय निशितं यमसन्निभं। धनुराकृष्य भगवान् वासुदेवो नृपोत्तम।
विव्याध सात्यकिं भूयो निशि प्रह्लादयन् स्वकान्। नाराचेन समाविद्धः सात्यकिः सत्यसङ्गरः।
ललाटे सुदृढं वीरो हृष्यो नामयणीस्तदा। निषसाद रथोपस्थे निश्चेष्ट इव सत्तम। १४१९०
ततः स पौण्ड्रको राजाऽविध्यद्दशभिराशुगैः। सारथिं पञ्चविंशत्या हयांश्च चतुरो नृप।
ते हया रुधिराक्ताङ्गाः सारथिश्च समन्ततः। विह्वलाः समपद्यन्त सासुदेवस्य पश्यतः।
वासुदेवो रथे चापि सिंहनादं समादधे। तेन नादेन तत्राभूद्विबुद्धः सात्यकिर्नृप।
विद्वान् हयांस्तथा दृष्ट्वा सारथिश्च तथा गतं। शैनेयोऽथ महावीर्य्यो कुपितो नृपसत्तम।
अलं द्रक्ष्यामि ते वीर्य्यमित्युक्त्वा बाणमाददे। विव्याध तेन व[illegible]न वक्षस्येनं महाबलं। १४१९५
ततश्चाक्ष तेनाजौ वासुदेवः शरेण ह। मुमुचे रुधिरं घोरमत्युष्णं वक्षसा नृप।
रथोपस्थे पपाताशु निःसङ्गुरगो यथा। कृत्यञ्चापि न जानाति केवलं निषसाद ह।
सात्यकिस्तु रथं विद्धा दशभिः सायकैस्तथा। ध्वजं चिच्छेद भल्लेन वासुदेवस्य वृष्णिपः।
हयांश्च चतुरो हत्वा वाणैः सारथिमेव च। युयुधानोऽथ राजेन्द्र वाणैः सारथिमेव च।

सारथेश्च शिरः कायादाहरत् स रथात्तदा । रथयन्त्रं च चिच्छेद हयाश्च व्यसवोऽभवन् । १५२००
चक्रस्य निलयः कृत्वा वार्द्धिं शरभिरञ्जसा । जहास विपुलं राजन् वासुदेवं महाबलः ।
ततः परं महत्प्रायं सात्यकिर्वृष्णिनन्दनः । शब्दं कृत्वा बली साक्षात् सर्व्वसत्त्वस्य पश्यतः ।
शरैः सप्ततिसंख्याकैरर्द्दयामास सत्वरं । ते शराः शलभाकारा निपेतुः सर्व्वतस्तदा ।
शिरस्तः पार्श्वतश्चैव पृष्ठतः पुरतस्तथा । केवलं धैर्य्यनिचयस्तृषार्त्तः शरावन् यथा ।
यथा मनस्वी निष्कम्प्य तथा तिष्ठति पौण्ड्रकः । ततश्चुक्रोध बलवान् वासुदेवः प्रतापवान् । १५२०५
शार्ङ्गचक्रं समादाय विव्याध युधि सात्यकिं । विद्धा सप्तभिरायान्तं क्रोधेन प्रस्फुरन्निव ।
विद्धोऽथ सात्यकिस्तेन शरैः पञ्चभिराशुगैः । चापं चिच्छेद पौण्ड्रस्य सिंहनादं तथाऽनदत् ।
वासुदेवो गदां गृह्य भ्रामयित्वा पदात् पदं । त्वरितं पातयामास सात्यकेर्मूर्द्धनि प्रभो ।
सव्येन तां समाकृष्य करेण यदुनन्दनः । शरं प्रगृह्य विव्याध सात्यकिर्युधि पौण्ड्रकं ।
तदन्तरे गृहीत्वाशु वासुदेवः प्रतापवान् । शक्तिभिर्द्दशभिश्चैव सात्यकिं निजघान ह । १५२१०
ताभिर्विद्धो रणे वीरः सात्यकिः सत्यसङ्गरः । अपास्य धनुरन्यत्तद्धनुरादाय सत्वरं ।
आजघान गदापाणिर्वृष्णीनामग्रणीर्नृप ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकसात्यकियुद्धे सप्ताशीत्यधिकद्विशततोऽध्यायः ॥ १८७ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धो गदापाणिः सात्यकिर्वृष्णिनन्दनः । वासुदेवं जघानाशु गदया तीक्ष्णया नृप ।
सात्यकिं वासुदेवस्तु गदयाऽभ्यहनद्बली । तावुद्यतगदौ वीरौ शुशुभाते सुदारुणौ ।
दृप्तौ वने यथा सिंहौ परस्परवधैषिणौ । ततः स सात्यकिः क्रुद्धः सव्यं मण्डलमागमत् । १५२१५
दक्षिणं वासुदेवस्तु तं जघान स्तनान्तरे । युयुधानोऽथ वीरस्तु बाह्वोर्मध्यमताडयत् ।
दृढं स ताडितो वीरो जानुभ्यामपतद्भुवि । तत उत्थाय वीरस्तु ललाटेऽभ्यहनत् गदां ।
विषण्णः किञ्चिदायस्तस्तत उत्थाय सत्वरं । गदयाऽभ्यहनद्वीरः सात्यकिः पौण्ड्रसत्तमं ।
वासुदेवो बली वीरः साक्षान्मृत्युरिवापरः । जघान गदया वृष्णिं निर्द्दहन्निव चक्षुषा ।
स तया ताडितो वृष्णिर्गदया वाक्यमब्रवीत् । आलभ्य भूमिं सहसा मृत्योरन्तगतो यथा । १५२२०
संज्ञां पुनः समालभ्य पाणिभ्यां दृढमेव च । गदां तस्य महाराज गृहीत्वा प्रघर्षेण ह ।
द्विधा कृत्वा महागुर्व्वीं गदां कालायसीं शुभां । उत्सृज्य सहसा वीरः सिंहनादं व्यनोनदत् ।
तत उत्सृज्य राजा तु वासुदेवो महाबलः । सव्येन सात्यकिं गृह्य दक्षिणेन करेण ह ।
मुष्टिं कृत्वा महाघोरां वासुदेवः प्रतापवान् ताडयामास मध्ये तु स्तनयोः सात्यकेर्नृप ।
शैनेयो वृष्णिवीरस्तु गदामुत्सृज्य सत्वरं । तलेनाभ्याहनद्वीरो वासुदेवं रणाजिरे । १५२२५
तलेन वासुदेवोऽपि सात्यकिं सत्यसङ्गरं । तयोरेवं महाघोरं तलयुद्धं प्रवर्त्तत ।
जानुभ्यां मुष्टिभिश्चैव बाहुभ्यां शिरसा तदा । उरसोरः समाहत्य जानुभ्यां जानुनी तथा ।
कराभ्यां करमाहत्य तौ युद्धं संप्रचक्रतुः । तलयोस्तत्र राजेन्द्र वृष्णयोः पणिकर्णयोः ।

वने यथाऽग्निरुत्पन्नस्तथैवाभून्महाहवः। तावाशौ प्रथितौ वीरावुभौ पौण्ड्रकसात्यकी।
निर्गिन्नौ स्तिमितमूकायां शक्रं त्यक्त्वा महाबलौ। युयुधाते महारङ्गे मत्तौ द्वाविव विश्रुतौ। १५२३०
उभे सेने महाराज संशयं जग्मतुस्तदा। किन्नु स्यात् सात्यकिर्वीरो हतस्तेन भविष्यति।
आहोस्विदाग्रदेवस्तु हतस्तेन महात्मना। अथवा तौ महावीरौ परस्परवधैषिणौ।
युध्यमानौ महावीरौ सर्गौ स्वर्गं गमिष्यतः। अन्यथा नोपरम्येतां युद्धाद्वीरौ सुनिश्चितौ।
अहो वीर्य्यमहो धैर्य्यमेतयोर्बलशालिनोः। एतौ महाबलौ लोके एतौ प्रकृतिसत्तमौ। १५२३५
नैवं युद्धं महाघोरमासीद्देवासुरेष्वपि। न श्रुतो न च वा दृष्टः संग्रामोऽयं कदाचन।
एवं ते सैनिका ब्रूयुः सेनयोरुभयोरपि। राजौ निर्गाये सेनाधि दृष्ट्वा युद्धं सुदारुणं।
अथ तौ बाहुभिर्वीरौ सन्निपेततुरक्षमौ। दशभिर्मुष्टिभिर्जघ्ने सात्यकिः पौण्ड्रकं तदा।
पञ्चभिः सात्यकिं पौण्ड्रः समाजघ्ने महाबलः। तयोश्चटचटाशब्दो ह्यस्त्राण्योऽभवो महान्।
प्रादुरासीत्तु सर्व्वत्र सर्व्वान् विस्मापयन्निव।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकसात्यकियुद्धे अष्टाशीत्यधिकद्विशततोऽध्यायः॥ २८८॥

॥ वैशम्पायन उवाच॥ एतस्मिन्नन्तरे क्रुद्ध एकलव्यो निषादपः। बलभद्रमभिप्रेक्ष्य धनुरादाय सत्वरं। १५२४०
नाराचैर्दशभिर्विद्धा बाणैश्च दशभिः परैः। चिच्छेद धनुरद्धं तत सर्व्वसैन्यस्य पश्यतः।
सूतं दशभिराहत्य रथं चिच्छिन्निरेव च। ध्वजं चिच्छेद भल्लेन निषादस्य जगत्पतिः।
ततोऽपरं महच्चापं निषादो वीर्य्यसम्मतः। दृढमौर्व्वीसमायुक्तं दशतालप्रमाणतः।
कामपालं शरेणाशु जघान जनसंसदि। बलदेवो महावीर्य्यः शेषसर्प इव श्वसन्।
दशभिस्तद्धनुर्द्दिव्यं शरैः सर्व्वसहैर्बलैः। चिच्छेद मुष्टिदेशे तु माधवो माधवाग्रजः। १५२४५
एकलव्यो निषादेशः खड्गमादाय सत्वरः। प्राहिणोद्बलदेवाय निशितं घोरविग्रहं।
तमन्तरे यदुर्वीरो वृष्णिवीरः प्रतापवान्। तिलशः पञ्चभिर्बाणैश्चकार यदुनन्दनः।
ततो महत् परं खड्गं सर्व्वकालायसं शुभं। प्राहिणोत् सारथेः कायमालोक्याथ निषादपः।
तच्चापि दशभिर्वीरो माधवो यदुनन्दनः। बाणैरन्तरथोश्चैव निर्बिभेद महारणे।
ततः शक्तिं समादाय घण्टामालाकुलां नृप। निषादो बलदेवाय प्रेषयित्वा महाबलः। १५२५०
सिंहनादं महाघोरमकरोत् स निषादपः। सा शक्तिः प्रेषिता तेन बलदेवमुपागमत्।
उत्पतन्तीं महाघोरां बलभद्रः प्रतापवान्। आदायाथ निषादेशं सर्व्वान् विस्मापयन्निव।
तयैव तं जघानाशु वक्षोदेशे स माधवः। स तया ताडितो वीरः स्वशक्त्यैव निषादपः।
विह्वलः सर्व्वगात्रेषु निपपात महीतले। प्राणसंशयमापन्नो निषादो रामताडितः।
निषादास्तस्य राजेन्द्र शतशोऽथ सहस्रशः। अष्टाशीतिसहस्राणि निषादास्तस्य योधिनः। १५२५५
गदिनः खड्गिनश्चैव महेष्वासा महाबलाः। शरैरनेकसाहस्रैः शक्तिभिश्च परश्वधैः।
गदाभिः पट्टिशैः शूलैः परिघैः प्रासतोमरैः। कुन्तैरथ कुठारैश्च यादवानां महाबलं।

शलभा इव राजेन्द्र दीप्यमानं हुताशनं । ते शतं पातयाञ्चक्रू रामं राममिवापरे ।
केचित् कुठारैराजघ्नुः केचित् कुन्तैः परश्वधैः । गदाभिः केचिदाघ्नन्ति शक्तिभिश्च तथाऽपरे ।
निजघ्नुः सहसा रामं प्रस्फुरन्तं यथा यथा । ततः क्रुद्धो हली साक्षात् हलमुद्यम्य सत्वरं । १५२६०
सर्व्वानाकर्षयामास मुषलेन वि पीडयन् । ते हन्यमाना राजेन्द्र निषादाः पर्व्वताश्रयाः ।
निपेतुर्धरणीपृष्ठे शतशोऽथ सहस्रशः । शरेण ताम्महाराज हत्वा सर्व्वान्महाबलान् ।
सिंहवद्व्यनदत्तत्र तस्थौ रामो महाबलः । ततो रात्रौ महाघोराः पिशाचाः पिशिताशनाः ।
आक्रम्य मांसयूथानि भक्षयन्तः समासते । पिबन्तः शोणितं कोष्ठात् संच्छिद्य च शवं बहु ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि एकलव्यसैन्यवधे ऊननवत्यधिकद्विशततोऽध्याय: ॥ २८९ ॥
॥ वैशम्पायन उवाच ॥ क्रव्यादाः सर्व्व एवाशु भक्षयन्तस्तदा शवं । हसन्तो विविधं घोरं नादयन्तो वसुन्धरां । १५२६५
राक्षसाः पिशिताशाश्च पिबन्तः शोणितं बहु । आमिषं भुञ्जते राजन् शवस्य पिशिताशनाः ।
नृत्यन्ति स्म तदा राजन्नगर्य्यां रणतोषिणः । काका बलाका गृध्राश्च श्येना गोमायवस्तथा ।
भक्षयन्तः प्रवर्त्तन्ते राक्षसाश्चैव दारुणाः । एतस्मिन्नन्तरे वीरो निषादो लब्धसंज्ञकः ।
हतान् सर्व्वान् समालोक्य निषादान्वनचारिणः । गदामादाय कुपितो राममेव जगाम ह ।
जघान गदया राजन् जत्रुदेशे निषादपः । ततो रामो दृढं राजन्निषादं बाहुशालिनं । १५२७०
आजघ्ने गदया क्रूरं मदमत्तो हलायुधः । तयोश्च तुमुलं युद्धं गदाभ्यां समवर्त्तत ।
आकाशे शब्द आसीत्तु तयोर्युद्धे महाभुज । समुद्राणां यथा घोषः सर्व्वेषां सन्निगच्छतां ।
कल्पक्षये महाराज शब्दः सुतुमुलो ऽभवत् । क्षोभितो नागराजश्च नागाः क्षोभं समाययुः ।
पृथिवी चान्तरीक्षञ्च सर्व्वं शब्दमयं बभौ । ततः स पौण्ड्रको राजा वार्ष्णेयं वृष्णिनन्दनं ।
गदयैव जघानाशु सत्वरं रणकोविदः । युयुधानो बली राजन् वासुदेवं जघान ह । १५२७५
तयोश्च तुमुलः शब्दः प्रादुरासीन्महारणे । चतुर्णां युध्यतां राजन् परस्परवधैषिणां ।
ब्रह्माण्डक्षोभणो राजन् शब्द आसीत् सुदारुणः । ततो रजः प्रादुरभूत्तस्मिन् संग्राममूर्द्धनि ।
तारका निष्प्रभा राजंस्तमस्येवं क्षयं गते । उषसि प्रतिबुद्धायां तमो निःशेषतां ययौ ।
उदितो भगवान् सूर्य्यश्चन्द्रश्च क्षयमाययौ । तयोर्युद्धं प्रादुरभूच्चतुर्णां बाहुशालिनां ।
देवासुरसमं राजन्नुदिते भास्करे महत् । १५२८०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे नवत्यधिकद्विशततोऽध्याय: ॥ २९० ॥
॥ वैशम्पायन उवाच ॥ ततः प्रभाते विमले भगवान् देवकीसुतः । गन्तुमैच्छज्जगन्नाथः पुरीं बदरिकाश्रमात् ।
नमस्कृत्य मुनीन् सर्व्वान् ययौ द्वारवतीं नृप । आरुह्य गरुडं विष्णुर्वेगेन महता प्रभुः ।
सुमहान् शुश्रुवे शब्दस्तेषां युद्धं प्रकुर्व्वतां । गच्छता देवदेवेन पुरीं द्वारवतीं नृप ।
अचिन्तयज्जगन्नाथः को न्वयं शब्द उत्थितः । संग्रामसम्भवो घोर आर्थ्यश्चैवसंयुतः ।
व्यक्तमागतवान् पौण्ड्रो नगरीं द्वारकामनु । तेन युद्धं समभवत् पौण्ड्रकेण महात्मना । १५२८५

यदूनां वृष्णिवीराणां युध्यतामितरेतरं । शङ्खोऽयं श्रुमवान् व्यक्तो नात्र कार्य्या विचारणा ।
इत्येवं चिन्तयित्वा तु दध्मौ शङ्खं महारवं । पाञ्चजन्यं हरिः साक्षात् प्रीणयन् वृष्णिपुङ्गवान् ।
रोदसी पूरयामास तेन शङ्खेन केशवः । यादवा वृष्णयश्चैव श्रुत्वा शङ्खस्य तं रवं ।
व्यक्तमायाति भगवान् पाञ्चजन्यरवो ह्ययं । इति ते मेनिरे राजन् वृष्णयो यादवास्तथा ।
निर्भयाः समपद्यन्त वृष्णयो यादवाश्च ते । तस्मिन्नेव क्षणे दृष्टस्तार्क्ष्यश्च पततांवरः ।
ततश्च देवकीसूनुर्दृष्टो यादवेश्वरः । सूताश्च मागधाश्चैव पुरो यान्ति जगत्पतेः ।
स्तुत्या स्तुतं हरिं विष्णुमीश्वरं कमलेक्षणं । ततश्च यादवाः सर्व्वे परिवव्रुर्जनार्द्दनं ।
कृष्णस्तु गरुडं भूयो गच्छ त्वं नाकमुत्तमं । इत्युक्त्वा गरुडं विष्णुर्विसृज्य यदुनन्दनः ।
दारुकं पुनराहेदं रथमानय मे प्रभो । स तथेति प्रतिज्ञाय रथमादाय सत्वरं ।
रथोऽयं भगवन् देव किमतः कृत्यमस्ति मे । इत्युक्त्वा रथमादाय प्रणम्याग्रे स्थितो हरेः ।
गते च गरुडे विष्णूरथमारुह्य सत्वरं । यत्र युद्धं समभवत्तत्र याति स्म केशवः ।
तत्र गत्वा महाराज युध्यतांश्च महात्मनां । पाञ्चजन्यं महाशङ्खं दध्मौ यदुकुलोत्तमः ।
पौण्ड्रोऽथ वासुदेवस्तु कृष्णं दृष्ट्वा रणोत्सुकं । सात्यकिं पृष्ठतः कृत्वा वासुदेवमुपागमत् ।
क्रुद्धोऽथ सात्यकी राजन् वारयामास पौण्ड्रकं । न गन्तव्यमितो राजन् नैष धर्म्मः सनातनः ।
जित्वा मां गच्छ राजेन्द्र परं योद्धुं महारणे । क्षत्रियोऽसि महावीर स्थिते मयि रणोत्सुके ।
एष ते गर्व्वमखिलं नाशयिष्यामि संयुगे । इत्युक्त्वा चापतस्तस्थौ गच्छतो यादवेश्वरः ।
पौण्ड्रकस्य शिनेर्नप्ता पश्यतः केशवस्य च । अवज्ञाय शिनेः पौत्रं कृष्णमेव जगाम च ।
निर्भर्त्स्य सहसा भूयः सात्यकिः क्रोधमूर्च्छितः । गदया प्राहरत् पौण्ड्रं वासुदेवस्य पश्यतः ।
यथाप्राणं यथायोगं सात्यकिः सत्यविक्रमः । दृष्ट्वाऽथ भगवानेवं सात्यकिं प्रशशंस च ।
निवार्य्य सात्यकिं कृष्णो यथेष्टं क्रियतामसौ । उपारमद्यथायोगं सात्यकिः कृष्णवारितः ।
स ततः पौण्ड्रको राजा वासुदेवमुवाच ह । भो भो यादव गोपाल इदानीं क्व गतो भवान् ।
त्वां द्रष्टुमथ संप्राप्तो वासुदेवोऽस्मि साम्प्रतं । हत्वा त्वां सबलं कृष्ण सर्व्वैर्भद्रैरभिरक्षितः ।
अहमेको भविष्यामि वासुदेवो महीतले । यच्चक्रं तव गोविन्द प्रथितं सुप्रभं महत् ।
अनेन मम चक्रेण पीडितोऽसि च तद्रणे । चक्रमस्तीति यद्दर्पस्तव माधव सांप्रतं ।
नाशयिष्यामि तत् सर्व्वं सर्व्वलोकस्य पश्यतः । शार्ङ्गीति मां विजानीहि न त्वं शार्ङ्गीति शिष्यते ।
शङ्खी चाहं गदी चाहं चक्री चाहं जनार्द्दन । मामेव हि सदा श्रुत्वा जानन्तो वीर्य्यशालिनः ।
आदौ त्वबलवृद्धांश्चान् हत्वा स्त्रीबालकान् बहून् । गाश्च हत्वा महागर्व्वस्तव संप्रति वर्त्तते ।
तत्तेऽहं व्यपनेष्यामि यदि तिष्ठसि मत्पुरः । अस्त्रं प्रहाण गोविन्द यदि योद्धुं व्यवस्थितः ।
इत्युक्त्वा बाणमादाय तस्थौ पार्श्वे जगत्पतेः । एतद्वचनमाकर्ण्य वासुदेवस्य भाषितं ।
स्मितं कृत्वा हरिः कृष्णो बभाषे पौण्ड्रकं नृपं । कामं वद नृप त्वं हि पातयाम्यस्मि सदा नृप ।

गोघाती बालघाती च स्त्रीहन्ता सर्व्वथा नृप। चक्री भव गदी राजन् शार्ङ्गी च सततं भव।
नामधेयं तथा मह्यं वासुदेवेति च प्रभो। शार्ङ्गी चक्री गदी शङ्खीत्येवमादि यथा मम।
किन्तु वक्ष्यामि किञ्चित्तु शृणुष्व यदि मन्यसे। चक्रिया बलिनो ये तु स्थिते मयि जगत्पतौ।
तथाऽनुवर्त्तते त्वां हि जीवत्येव मयि प्रभो। यच्च चक्रं महाघोरमसुरान्तकरं महत्।
तत्तुल्यं मम चक्रस्य हन्ततो न तु वीर्य्यतः। आयुधेष्वथ सर्व्वत्र शब्दसादृश्यमस्ति ते। १५३२०
गोपोऽहं सर्व्वदा राजन् प्राणिनां प्राणदः सदा। गोप्ता सर्व्वेषु लोकेषु शास्ता दुष्टस्य सर्व्वदा।
कत्थनं सर्व्वदा कार्य्यं जित्वा राजन्नृपाधम। अजित्वा किं भवान् ब्रूते स्थिते मयि च शास्तरि।
हत्वा मां ब्रूहि राजेन्द्र यदि शक्तोऽसि पौण्ड्रक। स्थितोऽहं चक्रमाश्रित्य रथी चापी गदासिमान्।
रथमारुह्य युद्धेऽस्मिन् सन्नद्धो भव मानद। इत्युक्त्वा भगवान् विष्णुः सिंहनादं व्यनीनदत्।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि कृष्णपौण्ड्रकयुद्धे एकनवत्यधिकद्विशततोऽध्यायः ॥२९१॥
॥ वैशम्पायन उवाच ॥ ततः शरं समादाय वासुदेवः प्रतापवान्। पौण्ड्रं जघान सहसा निशितेन शरेण ह। १५३२५
पौण्ड्रोऽथ वासुदेवस्तु शरैर्द्दशभिराशुगैः। वासुदेवं जघानाशु वार्ष्णेयं वृष्णिनन्दनं।
दारुकं पञ्चविंशत्या हयान् दशभिरेव च। सप्तत्या वासुदेवन्तु यादवं वासुदेवकः।
ततः प्रहस्य सुचिरं केशवः केशिसूदनः। हृष्टोऽसाविति मनसा संपूज्य यदुनन्दनः।
आकृष्य शार्ङ्गं बलवान् सन्धाय रिपुसूदनः। नाराचेन सुतीक्ष्णेन ध्वजं चिच्छेद केशवः।
सारथेश्च शिरः कायादाहृत्य यदुनन्दनः। अश्वांश्च चतुरो हत्वा चतुर्भिः सायकोत्तमैः। १५३३०
रथं राज्ञः समाहत्य तयोर्भौ पार्ष्णिसारथी। चक्रञ्च तिलशः कृत्वा हसन् किञ्चिदवस्थितः।
पौण्ड्रको वासुदेवस्तु रथादाप्लुत्य सत्वरः। आदाय निशितं खड्गं प्राहिणोत् केशवाय सः।
स खड्गं शतधा कृत्वा तूष्णीमासीच्च केशवः। ततोऽपरं महाघोरं परिघं कालसन्निभं।
गृहीत्वा वासुदेवाय वासुदेवः प्रतापवान्। प्राहिणोद्वृष्णिवीराय सर्व्वलोकस्य पश्यतः।
तद्द्विधा जगतां नाथश्चकार यदुनन्दनः। ततश्चक्रं महाघोरं सहस्रारं महाप्रभं। १५३३५
त्रिंशद्भारसमायुक्तमायसश्लक्ष्णमिचहा। आदायाथ महाराज केशवं वाक्यमब्रवीत्।
पश्येदं निशितं घोरं तव चक्रविनाशनं। अनेन तव गोविन्द दर्पं दर्पवतांवर।
अपनेष्यामि वार्ष्णेय सर्व्वलोकस्य पश्यतः। त्वामुद्दिश्य महाघोरं कृतमन्यद्दुरासदं।
यदि शक्तो हरे कृष्ण दारयेदं महास्त्रदं। इत्युक्त्वा तच्छतगुणं भ्रामयित्वा महाबलः।
चिक्षेपाथ महावीर्य्यः पौण्ड्रको नृपसत्तमः। अवप्लुत्य ततो देशात्तदुत्सृज्य महाबलः। १५३४०
सिंहनादं महाघोरं व्यनदद्वीर्य्यवांस्तदा। ततो विस्मयमापन्नो भगवान् देवकीसुतः।
अहो वीर्य्यमहो धैर्य्यमस्य पौण्ड्रस्य दुःसहं। इति मत्वा जगन्नाथ उत्पितश्च रथोत्तमात्।
ततः शिलां समादाय प्रेषयामास केशवे। तां शिलां प्रेषयामास तस्मै यदुकुलोद्वहः।
पौण्ड्रेण सुचिरं कालं विक्रीड्य भगवान् हरिः। ततश्च चक्रमादाय निशितं रक्तभोजनं।

दैत्यमांसप्रदिग्धाङ्गं नारीगर्भविमोचनं । शातकुम्भमयं घोरं दैत्यदानवनाशनं । १५४४५
महस्रारं शतारन्तदद्भुतं दैत्यभीषणं । ऐश्वर्य्यवच्च परमं नित्यं सुरगणार्च्चितं ।
विष्णुः कृष्णस्तथा शार्ङ्गी नित्यं युक्तः सदा हरिः । जघान तेन गोविन्दः पौण्ड्रकं नृपसत्तमं ।
तस्य देहं विदार्य्याशु चक्रं पिशितभोजनं । कृष्णस्याथ करं भूयः प्राप सर्व्वेश्वरस्य च ।
ततः स पौण्ड्रको राजा गतासुः प्रापतद्भुवि । निहत्य भगवान् विष्णुर्दुर्विज्ञेयगतिः प्रभुः ।
प्रतिपेदे सुधर्म्मान्तु यादवैः पूजितो हरिः । १५४५०
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥
॥ वैशम्पायन उवाच ॥ निषादेशं ततो रामः श्रेष्ठो वीर्य्यवतांवरः । आजघान स्तनद्वन्द्वे सिंहनादं तथाऽनदत् ।
ततः क्रुद्धो निषादेशो रामं मत्तं महाबलं । गदया लोकविख्यातो जघान स्तनवक्षसि ।
आहतः स तु तेनाशु बलभद्रो महाबलः । उभाभ्यामेव रामस्तु कराभ्यां वृष्णिपुङ्गवः ।
गदां गृह्य महाघोरामभ्यान्तीं प्राणहारिणीं । दुद्रावाथ निषादेशः समुद्रं मकरालयं ।
धावत्येवं तदा राज्ञि एकलव्ये निषादपे । धावत्येव च रामोऽपि यत्र यातो निषादपः । १५४५५
सागरं स प्रविश्याशु गत्वा योजनपञ्चकं । भीत एव तदा राजन्नेकलव्यो निषादपः ।
कञ्चिद्द्वीपान्तरं राजन् प्रविश्य न्यवसत्तदा । ततो रामो निषादेशं जिगाय यदुनन्दनः ।
तां सभां मणिरत्नाढ्यां प्रविवेश हलायुधः । सात्यकिर्युद्धसंसक्तस्तां सभां प्रविवेश ह ।
अन्ये च यादवा राजन् यथायोगमुपस्थिताः । आसीनेषु च सर्व्वेषु वृष्णिवीरेषु सर्व्वतः ।
अभिवाद्य यथायोगं वृष्णीन् सर्व्वांश्च केशवः । उवाच वचनं काले भगवान् देवकीसुतः । १५४६०
दृष्टं कैलासशिखरं शङ्करो नीललोहितः । स तु मह्यं यदुवरा प्रीतिमांश्च ददौ वरं ।
तत्र देवाः समायाता मुनयश्च तपोधनाः । दृष्ट्वा मां शङ्करस्यैव प्रीतः स्तुत्वा समाययौ ।
अत्यद्भुतं मया दृष्टं राचो यादवसत्तमाः । पिशाचौ द्वौ महाघोरौ वदन्तौ धार्म्मिकीं कथां ।
मृगयां चक्रतुस्तौ तु चिन्तयन्तौ तु मां सदा । दृष्ट्वा मां तौ तु राजेन्द्राः प्रीतिमन्तौ तपस्विनौ ।
भक्तिमन्तौ महात्मानौ प्रणामं चक्रतुस्तदा । ततोऽहं सर्व्वथा प्रीतस्तौ नीतौ स्वर्गमुत्तमं । १५४६५
तोषयित्वा महादेवं मया चात्र समागतं ।
॥ वैशम्पायन उवाच ॥ ततस्ते वृष्णयः सर्व्वे देवदेवं शशंसिरे । सर्व्वथा कृतकृत्यास्ते वृष्णयः केशवाश्रयाः ।
यादवाः सर्व्व एवात्र स्वं स्वं जग्मुर्यथालयं । अभ्यन्तरं जगन्नाथः प्रविश्य हरिरीश्वरः ।
रुक्मिणीसत्यभामाभ्यामाचचक्षे यथाऽभवत् । ते प्रीते प्रीतियुक्तेन केशवेन समन्विते ।
एतत्ते सर्व्वमाख्यातं केशवस्य च चेष्टितं । शशास पृथिवीं कृत्स्नां दुष्टान् हत्वा महाबलान् । १५४७०
नरकं घोरकर्म्माणं पौण्ड्रकं नृपसत्तमं । हयग्रीवं निशुम्भञ्च तथा सुन्दोपसुन्दकौ ।
ररक्ष विप्रान् देवांश्च मुनीन् मुनिवरार्च्चितः । विप्रेभ्यश्च ददौ वित्तं गाश्च दत्त्वा स केशवः ।
अग्निहोत्रं प्रयुञ्जानो ब्राह्मणांश्च सुतर्पयन् । मुनींश्च ब्रह्मचर्य्येण देवान् यज्ञैरनेकधा ।

स्वधया च पितॄन् सर्व्वान् प्रीणयन्नेव सर्व्वदा । तस्मिन् शासति देवेशे राज्यं निष्कण्टकं प्रभो ।
सुखमेव प्रजाः सर्व्वा जीवन्ति ब्राह्मणादयः । १५२७५
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि पौण्ड्रकवधे त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३ ॥
॥ जनमेजय उवाच ॥ भूय एव द्विजश्रेष्ठ शङ्खचक्रगदाभृतः । चरितं श्रोतुमिच्छामि विस्तरेण तपोधन ।
न हि मे तृप्तिरस्तीह शृण्वतः वैष्णवीं कथां । को नु नाम हरेर्विष्णोर्देवदेवस्य चक्रिणः ।
शृण्वन् स्तुवं स्मरन् वाऽपि तृप्तिं याति दिवानिशं । पुरुषार्थोऽयमेवैको यत्कथाश्रवणं हरेः ।
कथमासीज्जगद्धेतोर्हंसस्य डिम्भकस्य च । सनितिः सर्व्वभूतानां सदा विस्मयदायिनी ।
विचक्रस्य कथं युद्धं दानवस्य महात्मनः । स तयोर्न्निधनं यात इत्येतमनुशुश्रुम । १५२८०
तौ सुतौ वीर्य्यसम्पन्नौ ब्रह्मदत्तस्य च । सर्व्वास्त्रकुशलौ वीरौ हराच्छवरौ किल ।
संग्रामः सुमहानासीदित्युक्तं भवता पुरा । तयोश्च नृपयोर्विप्र केशवस्य जगत्पतेः ।
कस्य पुत्रौ समुत्पन्नौ यथाऽभूद्विग्रहो महान् । अष्टाशीतिसहस्राणि दानवानां तरस्विनां ।
बलान्यथ विचक्रस्य शितशूलधराणि च । आसन् युद्धे महाराज दानवस्य जयैषिणः ।
यदूनामन्तरप्रेप्सुर्यदूनां युद्धकाङ्क्षया । देवासुरे महायुद्धे देवान् जयति दुर्द्धरः । १५२८५
तद्वधार्थं महद् युद्धमकरोच्चैव केशवः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने जनमेजयवाक्ये चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥२९४॥
॥ वैशम्पायन उवाच ॥ आसीत् शाल्वेषु राजेन्द्र ब्रह्मदत्तो नृपोत्तमः । नाम्ना राजन् स पूतात्मा सर्व्वभूतदयापरः ।
पञ्चयज्ञपरो नित्यं जितात्मा विजितेन्द्रियः । ब्रह्मविद्वेदविच्चैव सदा यज्ञपरः शिवः ।
तस्य भार्य्ये महीपाल रूपौदार्य्यगुणान्विते । बभूवतुः सुभगे ते अनपत्ये नृपोत्तम ।
स ताभ्यां सुमुदे राजा शच्या शक्र इवाम्बरे । नाम्ना मित्रसहो नाम सखा चासीन्महामते । १५२९०
तस्य राज्ञो महायोगी वेदवेदान्ततत्परः । अनपत्यः स विप्रेन्द्रो यथा राजा बभूव ह ।
स राजा सहितस्ताभ्यामर्च्चयामास शङ्करं । पुत्रार्थं शूलिनं शर्व्वं दशवर्षाण्यनन्यधीः ।
स विप्रो वैष्णवं सत्रं पुत्रार्थं समयोजयत् । अर्च्चितस्तेन राजेन्द्र शङ्करो नीललोहितः ।
आत्मानं दर्शयामास स्वप्ने राजानमब्रवीत् । प्रीतोऽस्मि तव भद्रन्ते वरं वरय सुव्रत ।
अथ राजा जगन्नाथमुवाचेदं स्मयन्निव । पुत्रौ मम भवेतां हि तथेत्युक्त्वा वृषध्वजः । १५२९५
अन्तर्द्धानं गतः शम्भुः प्रतिबुद्धस्ततो नृपः । सोऽपि मित्रसहो विद्वान् देवं केशवमव्ययं ।
पञ्चवर्षं जगन्नाथमर्च्चयामास भक्तितः । अर्च्चितस्तेन विप्रेण देवदेवो जनार्द्दनः ।
पुत्रमेकं ददौ तस्मै स्वात्मना सदृशं हरिः । ते भार्य्ये गर्भमाधत्तां तेजसा शङ्करस्य च ।
विप्रभार्य्या महाराज वैष्णवं तेज आदधत् । सहितौ ते महावीर्य्यौ पुत्रौ शङ्करनिर्म्मितौ ।
असूयतां महीपाल क्रमेणैव नृपस्य च । स तयोश्च महाराज नामकर्म्मादिकाः क्रियाः । १५३००

चकार विधिवत् सर्व्वं विप्रेभ्यो ऽदात्महद्धनं। स च विप्रो विनीतात्मा पुत्रमेकं हि लब्धवान्।
साक्षादिव जगन्नाथं स्थितं पुत्रात्मना नृप। जातकर्म्मादिकं सर्व्वं ब्राह्मणः स चकार ह।
तौ कुमारावयं चैव वयः सुवपुषोऽभवन्। वेदानधीत्य ते सर्व्वान् श्रुत्वा चान्वीक्षिकीं तथा।
धनुर्व्वेदे तथाऽस्त्रे च निपुणास्त्वभवंस्तदा। हंसो ज्येष्ठो नृपसुतो डिम्भकोऽनन्तरोऽभवत्।
स च विप्रसुतो राजन् जनार्द्दन इति स्मृतः। अन्योन्यमित्रतां याताः सर्व्वे चैव कुमारकाः। ११४०५

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

॥ वैशम्पायन उवाच ॥ हंसश्च डिम्भकश्चैव तपश्चर्त्तुं महामती। मनश्चक्रतुरात्मानौ शङ्करस्य नृपोत्तम।
गत्वा तु हिमवत्पार्श्वं तपश्चक्रतुरञ्जसा। उद्दिश्य शङ्करं शर्व्वं नीलग्रीवमुमापतिं।
वीर्य्यास्त्रे चैव नौ स्यातामित्याधाय तु मानसे। एकाग्रौ प्रयतौ भूत्वा वाय्वम्बुप्राशिनौ नृप।
नमस्ते देवदेवेति शङ्करेति दिवानिशं। हर शर्व्व शिवानन्द नीलग्रीव उमापते।
वृषध्वज विरूपाक्ष हर्य्यक्ष जगतांपते। भक्तिप्रिय गिरीशेश वामदेव शिवाच्युत। ११४१०
सद्योजात महादेव देवदेव गुहाश्रय। भूतभावन भूतेश प्रणवात्मन् सदाशिव।
इत्यादिनामभिर्नित्यं स्तुवन्तौ शङ्करं भवं। हृदि कृत्वा विरूपाक्षं तपस्तेपतुरञ्जसा।
निर्म्ममौ निरहङ्कारौ मौनव्रतसमास्थितौ। वर्षाणि च तदा राजन् पञ्च चक्रतुरोजसा।
ततः प्रीतो ऽभवच्छर्व्वस्ताभ्यां संयमनेन च। स ददौ दर्शनं भीमं व्याघ्रचर्म्माम्बरो हरः।
त्रिचक्षुः शङ्करः शर्व्वः शूलपाणिरुमापतिः। अग्रतः संस्थितं शर्व्वं चन्द्राङ्कितशिखरं। ११४१५
तौ दृष्ट्वा प्रीतमनसौ नमश्चक्रतुरञ्जसा।

॥ श्रीभगवानुवाच ॥ वरं वरय भद्रं वो यथेच्छा वां तथाऽस्तु वो। तावूचतुस्तदा राजन् प्रीतस्त्वं भगवन् यदि।
देवासुरमनुष्यैश्चोरगगन्धर्व्वदानवैः। आवामजय्यौ सर्व्वात्मन्नेष नौ प्रथमो वरः।
द्वितीयो नौ विरूपाक्ष रौद्राद्यस्त्राणाञ्च संग्रहः। माहेश्वरं तथा रौद्रमस्त्रं ब्रह्मशिरो महत्।
अभेद्यं कवचं दिव्यमच्छेद्यञ्चापि कार्म्मुकं। परशुञ्च तथा शर्व्व सदा रक्षार्थमेव च। ११४२०
सहायौ दौ महादेव भूतौ युद्धे हि गच्छतां। एवमस्त्विति देवेश आह धूर्ज्जटिर्हरः।
कुण्डोदरं विरूपाक्षं सर्व्वप्राणिहिते रतं। युवामथ च भूतेशौ सहायौ सततं रणे।
सपार्श्वं गच्छतां घोरमेतयोर्श्शूलमालिनौ। इत्युक्त्वा भगवान् शर्व्वस्तत्रैवान्तरधीयत।
ततस्तौ वीर्य्यसम्पन्नौ हंसो डिम्भक एव च। कृतास्त्रौ शस्त्रसम्पन्नौ चापिनौ वीर्य्यवत्तरौ।
आमुक्तकवचौ वीरावजय्यौ देवदानवैः। अत्यन्तभक्तौ देवेशे शङ्करे नीलकण्ठिते। ११४२५
नित्योत्सवकरौ देवे भक्त्योद्धूलनशोभितौ। कृतत्रिपुण्ड्रकौ नित्यं जटायुक्तशिरोधरौ।
रुद्राक्षार्पितसर्व्वाङ्गौ व्याघ्रचर्म्मकृताम्बरौ। नमः शिवाय शान्ताय महादेवाय धीमते।
इत्यादिभिर्म्महादेवं स्तुवन्तौ नामभिः शिवं। साक्षादिव महादेवौ देहतुर्जलधारिणौ।
ततः स्वभवनं गत्वा पितुः पादाववन्दतां। पितुश्च सख्युर्म्मलिनौ मातुश्च चरणौ तदा।

जनार्द्दनोऽपि धर्म्मात्मा कालेन महता नृप । विद्यापारं महाबुद्धिर्योगेनावाप्तवेदवित् । १५४३०
स च विष्णुं हृषीकेशं पीतकौशेयवाससं । ब्रह्मतत्त्वपरो नित्यमुपास्ते विजितेन्द्रियः ।
हंसश्च डिम्भकश्चैव कृतदारौ बभूवतुः । जनार्द्दनोऽपि धर्म्मात्मा कृतदारो बभूव ह ।
सर्व्वे ते यज्ञनिरताः पञ्चयज्ञपरास्तथा । स्वदारनिरताः सर्व्वे गुरुशुश्रूषणे रताः ।
धर्म्म एव परं श्रेय इति ते मेनिरे नृप ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥
॥ वैशम्पायन उवाच ॥ ततः कदाचित्तौ वीरौ मृगयामाटतुः किल । जनार्द्दनेन सहितौ रथैर्नागैरपि । १५४३५
वनं गत्वा तु तौ वीरौ सिंहव्याघ्रांश्च जघ्नतुः । शितैर्बाणैर्महाराज वराहानथ सर्व्वशः ।
व्यालानन्यान्मृगान् हिंस्रान् सभिश्च सहितौ नृप । एष आयाति विपुलो वराहो दीर्घलोचनः ।
एनं बाणेन सञ्छिन्धि याति चायं मृगाधिपः । अयमन्योऽथ महिषः शृङ्गप्रोतसरीसृपः ।
एते खलु मृगाः सार्द्धं शावैर्धावन्ति सर्व्वशः । एतच्छ्रमति सर्व्वत्र चित्रं शशकुलं महत् ।
शावैस्समं पिवत् सार्द्धं न हन्तव्यमिदं शुभं । ग्रहीतव्यमिदं सर्व्वैर्गृहाय नगरेऽपि ह । १५४४०
इत्यादिशब्दः सुमहान् मृगयां कुर्व्वतां नृप । क्षत्रियाणां नृपश्रेष्ठ व्याधानां चैव धावतां ।
हत्वा मृगान् सुबहुशो व्याघ्रान् सिंहान्नृपोत्तमौ । श्रमश्च जग्मतुर्वीरौ मध्यं याते दिवाकरे ।
अहं हि मृगयाऽस्माकं श्रमः समुपजायते । इत्यूचतुर्महाराज पुष्करं जग्मतुः सरः ।
सरःसमीपमागम्य मुनिभिर्मुनिसेवितं । वीजनाद्यतपानाद्यं जनाच्च सुखं स्थितौ ।
ततो जनाः सरः सर्व्वे विगाह्य श्रमकर्षिताः । विसान् प्रवालान् पद्मानां भक्षयामासुरात्तवत् । १५४४५
जनार्द्दनेन सहितौ हंसो डिम्भक एव च । सरः कञ्चित् समाश्रित्य श्रमं संत्यज्य तिष्ठतः ।
विश्रम्य सरसस्तीरे तदा याते सुखं नृपौ । शुश्रुवतां परं ब्रह्म मुनिमुख्यैः समीरितं ।
माध्यन्दिनं तदा सर्व्वैः सवनं सुस्वरं नृपौ । ततः प्रीतौ नृपौ भूत्वा श्रुत्वा वेदध्वनिं तदा ।
ऐच्छतां तौ तदा द्रष्टुं यज्ञं मुनिकृतं तदा । स्थापयित्वा ततः सेनां सर्व्वां मृगसमन्वितां ।
आदाय च महावीर्य्याः शरान् कतिचिदेव च । जनार्द्दनस्तदा वीरो हंसो डिम्भक एव च । १५४५०
पदातिनो महाराज जग्मुस्तेवाश्रमं किल । महर्षेः कश्यपस्याथ सवं वैष्णवसंश्रितं ।
यजतो मुनिभिः सार्द्धं जपहोमपरायणैः ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥
॥ वैशम्पायन उवाच ॥ जनार्द्दनश्च धर्म्मात्मा हंसो डिम्भक एव च । सहः प्रविश्य यज्ञस्य जनस्तत्र मुनीश्वरान् ।
तानागतान् महात्मानो मुनयः शिष्यसंयुताः । अर्घ्यपाद्यासनादीनि चक्रुः पूजाञ्च यत्नतः ।
तौ नृपौ स च विप्रेन्द्रः सपर्य्यां प्रतिगृह्य च । प्रीतात्मानो महात्मान आसते सुसुखं नृप । १५४५५
ततो हंसो बभाषे तान्मुनीन् संयतवान्नृप । पिता हि नौ मुनिश्रेष्ठा यष्टुमैच्छत् समाधनं ।
गन्तव्यं तत्र युष्माभिः सर्व्वे मुनिसत्तमाः । राजसूयेन यज्ञेन कृत्वा द्विजिश्रवं यथं ।

याजयिष्यामहे विप्राः पितरं धार्म्मिकं नृपं। आयान्तु तत्र विप्रेन्द्राः क्षत्रियाः सपरिच्छदाः ।
वयमद्यैव सहिता दिशो जेष्यामहे ध्रुवं। शक्ता वयमवेतत् कर्त्तुं सैनिकसञ्चयैः ।
आवयोः पुरतः स्थातुं न शक्ता देवदानवाः । कैलासनिलयाद्देवादन्यो वा यत्नतः । ११४६०
अजेय्या शत्रुसंघानामस्त्राणि विविधानि च । इत्युक्ता निरगामैव हंसो डिम्भकसान्वितः ।
॥ मुनय ऊचुः ॥ यदि स्यात्तत्र गच्छामो वयं शिष्यैर्नृपोत्तम । आस्महे चान्यथा राजन्नित्यूचुः किल तापसाः ।
॥ वैशम्पायन उवाच ॥ ततो हंसौ महाराज गन्तुं निश्चितमानसौ । पुष्करस्योत्तरं तीरं दुर्व्वासा यत्र तिष्ठति ।
यतयो नियता भूत्वा सन्न्यस्ताग्निनिवेशिनः । ब्रह्मसूत्रपदे सक्ता सदर्थालोकतत्पराः ।
निर्ममा निरहङ्काराः कौपीनाच्छादनव्रताः । तमात्मानं जगद्योनिं विष्णुं विश्वेश्वरं विभुं । ११४६५
ब्रह्मरूपं शुभं शान्तमक्षरं सर्व्वतोमुखं । वेदान्तमूर्त्तिमव्यक्तमनन्तं शाश्वतं शिवं ।
नित्ययुक्तं विरूपाक्षं भूताधारमनामयं । ध्यायन्तः सर्व्वदा देवं मनसा सर्व्वतोमुखं ।
दुर्व्वाससा सहोपास्यं वेदान्तैकरसं प्रभुं । तर्कनिश्चिततत्त्वार्थाः सुविनिर्म्मलचेतसः ।
हंसाः परमहंसाश्च शिष्या दुर्व्वाससः प्रभो । तत्र गत्वा महात्मानौ तौ दृष्ट्वा तमूर्द्ध्वरेतसं ।
दुर्व्वाससं महाबुद्धिं विचिन्वानं परं पदं । क्रुद्धो यदि स दुर्व्वासा दग्धुं लोकानिमान् क्षमः । ११४७०
देवा अपि च यं द्रष्टुं क्रुद्धं वै न क्षमाः सदा । रोषमूर्त्तिः सदा यस्तु रुद्रात्मा विश्वरूपधृक् ।
रक्तकौपीनवसनो हंसः परम एव च । दृष्ट्वैनञ्च तयोरेवं बुद्धिरासीन्महामते ।
को नामायं महाभूतः काषायी वर्णवित्तमः । कस्यायमाश्रमो नाम विहाय च गृहाश्रमं ।
गृहस्थ एव धर्म्मात्मा गृहस्थो धर्म्मवित्तमः । गृहस्थो धर्म्मरूपस्तु गृहस्थो वर्ण एव च ।
गृहस्थश्च सदा माता प्राणिनां जीवनं सदा । तं विनाऽन्येन रूपेण वर्त्तते यो हि मूर्खवत् । ११४७५
उन्मत्तोऽयं विरूपोऽयमथ वा मूर्ख एव च । ध्यायन्निव सदा चायमास्ते वञ्चयिताऽपि वा ।
किन्नेते प्राकृतात्मानो ध्यायन्त इव किञ्चन । वयमेतान् दुराचारानाश्रमान्तरकल्पकान् ।
स्थापयिष्यामहे सर्व्वानस्मद्बुद्ध्यानिमान् गृहे । बलादेव हि शास्मैतान्मूढविज्ञानतत्परान् ।
असद्दुष्टगृहीतांश्च बालिशान्दुर्मतीनिमान् । एषां शास्ता च को मूढो न विप्रो वयमेव च ।
धर्म्मवर्त्मनि संस्थाप्य पुनर्यास्याव निश्चितौ । इति सञ्चिन्त्य तौ वीरौ विप्रेण सहितौ नृप । ११४८०
जनार्द्दनेन राजानौ मोहाद्भाग्यक्षयातुरौ । समीपं तस्य राजेन्द्र यतेरभ्येतुरञ्जसा ।
गत्वा च प्रोचतुस्तौ दुर्व्वाससमतीन्द्रियं । यतींश्च नियतान् क्रुद्धौ राजानौ राजसत्तम ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥

॥ हंसडिम्भकावूचतुः ॥ ज्ञानयोगादिहीनात्मन् किन्ते यतिमतं द्विज । कस्यायमाश्रमो विप्र भवता यः समाश्रितः ।
गृहमेधं परित्यज्य किन्त्वया साधितं पदं । दम्भ एव भवान् व्यक्तं लोके नाशस्य कारणं ।
लोकानिमान् सदा मूढ नाशयिष्यसि निश्चितः । एतान् सर्व्वान् विनेताऽपि नरके पातयिष्यसि । ११४८५
स्वयं नष्टः परान्मूर्ख नाशयिष्यसि यत्नतः । अहो शास्ता कथं नास्ति तव मन्दमतेर्द्विज ।

सर्व्वथा त्वद्विनेता च पापं नास्त्यत्र संशयः । त्यक्त्वेममाश्रमं विप्र गृही भव यतात्मवान् ।
पञ्चयज्ञान् सदा विप्र कुरु यज्ञपरो भव । ततः स्वर्गं परं गत्वा स्वर्गे हि सुमहत्सुखं ।
एष श्रेयः परो विप्र जीविते चेत् स्पृहा तव । इत्युक्तवन्तौ धर्म्मात्मा श्रुत्वा विप्रो जनार्द्दनः ।
उवाच च यतिं दृष्ट्वा प्रणम्यासौ सुभीतवत् । मा ब्रूतामीदृशं वाक्यं राजानौ मन्दचेतसौ । ११४९०
श्रश्राव्यमीदृशं घोरं लोकयोरुभयोरपि । को वक्तुमीशो मन्दात्मा यदि जीवेत् सबान्धवः ।
सर्व्वथा काल एवायं युवयोर्म्मन्दचेतसोः । समाप्त आयुषः शेषो ब्रह्मदण्डहतौ युवां ।
एते हि यतयः शुद्धा ज्ञानदीपितचेतसः । ज्ञानाग्निदग्धकर्म्माणः प्राणान् प्राणेषु जुह्वति ।
वाते वामीदृशं वाक्यं कः समर्थो ह्यनुब्रुवन् । सर्व्वथा ज्ञातमस्माभिः समाप्तमिह जीवितं ।
चत्वार आश्रमाः पूर्व्वमृषिभिर्व्विहिता नृपौ । ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः । ११४९५
तेषामग्र्यस्तुर्य्योऽयमाश्रमो भिक्षुकः स्मृतः । आस्ते तस्मिन्महाबुद्धिः स हि पुण्यतमः स्मृतः ।
सोपासिता भवद्भ्यां च दुष्टाः सम्यग्विनीतवत् । ज्ञानं नाप्तं ततस्तेभ्यस्तथा चैवं वदेत कः ।
अश्राव्यमीदृशं घोरं मया प्राणभृता नृप । किं करिष्यामि मन्दात्मन् मिथ्यात्वाद्ब्रुवतो नृप ।
ज्ञानं यदाप्तं भवता गुरुभ्यस्तदत्र दुःखाय हि केवलं नृप । ज्ञानं हि धर्म्मप्रभवं यथेष्टं बलाद्धि पापस्य विघातरूपं ।
युवां विहाय यास्ये वा पतेयं वा शिलातले । पिबे वाऽपि विषं घोरं पतेयं वा महोर्म्मिषु । ११५००
आत्मानं वाऽत्र संत्यक्ष्ये पश्यतां युष्मतां पुनः । इत्युक्त्वा विललापैवं मा ब्रूतामिति तौ वदन् ।

इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने नवनवत्यधिकद्विशततमोऽध्यायः ॥ २९९ ॥

॥ वैशम्पायन उवाच ॥ ततः क्रुद्धोऽथ दुर्व्वासा धक्ष्यन्निव तयोरसून् । एकेनाक्ष्णाऽथ दुर्व्वासा रौद्रेणाग्निमुखा सदा ।
पश्यंस्तौ च दुरात्मानौ रोषव्याकुलितेन्द्रियः । कुर्व्वन्निव तदा लोकान् भस्मभूतानिमान्नृप ।
ब्राह्मणं चक्षुषा पश्यन् सौम्येनान्येन केवलं । उवाच वचनं राजन् ध्वंसत ध्वंसतेति च ।
इतो गच्छत राजानौ किं विलम्बत माचिरं । न वां वचनसंभूतं रोषं धारयितुं क्षमे । ११५०५
अन्यथा वो महीपालान् सर्व्वान्दग्धुमहं क्षमः । किमतः साहसं वक्तुं कश्च शक्नोति मत्पुरः ।
दर्पं वो लोकविख्यातः शङ्खचक्रगदाधरः । व्यपनेष्यति मन्दज्ञौ किं वा वक्ष्यामि साम्प्रतं ।
तत उत्थाय धर्म्मात्मा गन्तुमैच्छद्यतीश्वरः । तस्य बाहुं समादाय हंसो नृपवरोत्तमः ।
कौपीनं चिच्छिदे क्रूरः कृतान्त इव सत्तम । यतयोऽन्येऽपलायन्त डिम्भो दण्ड विचेतसः ।
कष्टं चेति वदन् विप्रो मित्रभावाज्जनार्द्दनः । न्यवारयद्यथाशक्ति किमिदं साहसन्त्विति । ११५१०
दुर्व्वासा सत्यधर्म्मस्तु हन्तुमीशोऽपि तं ततः । मन्दं मन्दमुवाचेदं हंसं डिम्भकमेव च ।
शापेनाहं समर्थोऽपि हन्तुं राजकुलाधमौ । तथाऽपि न करोम्यत्र यतयो यत्र ते वधं ।
यो हि देवो जगन्नाथः केशवो यादवेश्वरः । शङ्खचक्रगदापाणिर्गर्व्वं ते व्यपनेष्यति ।
लोके तस्मिन् यदुश्रेष्ठे रक्षत्येव जगत्पतौ । युवयोः सर्व्वथा जीवः सुजीव इति मे मतिः ।
जरासन्धेऽपि वां बन्धुः स च वक्तुं न चेच्छति । ईदृशं लोकविद्विष्टं स हि धर्म्मपथे सदा । ११५१५

एतावता स वां बन्धुर्न हि भूयो भविष्यति । विद्वेषोऽप्यस्तु वां तस्य मागधस्य महीपतेः ।
श्रुत्वेदं घोररूपन्तु स हि बन्धुः सहेत चेत् । धर्म्मनाशो भवेत्तस्य नात्र कार्य्या विचारणा ।
इत्युक्त्वा गच्छ गच्छेति हंसं प्राह पुनः पुनः । जनार्द्दनमुपाश्रित्य दुर्व्वासा यतिसत्तमः ।
स्वस्त्यस्तु तव विप्रेन्द्र भक्तिरस्तु जनार्द्दने । संस्तुतिस्तव तस्यास्तु शङ्खचक्रगदाभृतः ।
अद्य श्वो वा परश्वो वा साधुरेव सदा भवान् । न हि साधोर्विनाशोऽस्ति लोकयोरुभयोरपि । ११११०
गच्छ सर्व्वं पितुर्ब्रूहि ज्ञात्वा वृत्तं यथाखिलं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने शिततमोऽध्यायः ॥ २०० ॥
॥ वैशम्पायन उवाच ॥ ततस्तौ हंसडिम्भकौ क्रुद्धौ कालेन चोदितौ । शिक्यं कमण्डलुञ्चैव द्विदलं दारुमेव च ।
दण्डान् पात्रविशेषांश्च छित्त्वा भित्त्वा च सर्व्वशः । तस्मिन् देशे महाराज व्याधिभीसान्यदोदनम् ।
भक्षयित्वा च तद्देशात् स्वपुरीं तौ प्रजग्मतुः । जनार्द्दनस्य धर्म्मात्मा स्नेहादनुययौ तयोः ।
नष्टाविमाविति तदा स मेने दुःखितः परं । गतेषु तेषु सर्व्वेषु दुर्व्वासा यतिसत्तमः । ११११५
पलायनपरान् सर्व्वानिदमाह यतीश्वरान् । इतो देशाद्विनिर्गत्य पुष्करात् पुण्यसंयुतात् ।
मन्दं मन्दं समाश्वस्य विश्रम्य च ततस्ततः । प्रविश्य द्वारकां देवं शङ्खचक्रगदाधरं ।
दृष्ट्वा च तस्मै प्रभवे वक्ष्यामो यतिसत्तमाः । स हि रक्षन् जगदिदं धर्म्मवर्त्मनि संस्थितः ।
आद्यो लोकगुरुर्विष्णुर्यतात्मा तत्त्वविन्प्रियः । उद्धृत्य कण्टकान् सर्व्वान् शशास पृथिवीमिमां ।
स च पापान्महाघोरान् पापकर्म्मकृतान् प्रभुः । रक्षेन्नः सकलान् सर्व्वान् ध्यानेषु नियतात्मनः । १११२०
इदमद्य समं विप्रा यानमद्य विधीयतां । साहसं यत् कृतं ताभ्यां पात्रभेदादि सत्तमाः ।
एतत् सर्व्वमशेषेण दर्शयामो जनार्द्दनं । तथेति ते प्रतिज्ञाय यतयो ज्ञानचक्षुषः ।
छिन्नांस्ताभ्यां समादाय शिक्यं दारुमयं तथा । द्विदलं कर्पटञ्चैव कौपीनस्य वल्कलं ।
कमण्डलुं तथा राजन्नर्द्धभीतकपालकं । एतानन्यान् समादाय द्रष्टुं केशवमाययुः ।
पञ्च चैव सहस्राणि पुरस्कृत्य महामुनिं । दुर्व्वाससं तपोयोनिमीश्वरस्यात्मसम्भवं । १११२५
अहोरात्रेण ते सर्व्वे द्वारकां कृष्णपालितां । ययुर्द्दान्ता महात्मानो भीमसत्त्वाः केशवर्च्चिताः ।
प्रातः प्रविश्य राजेन्द्र वापिकायां यतीश्वराः । स्नात्वोपस्पृश्य ते सर्व्वे धर्म्मेण महता तदा ।
द्रष्टुमभ्युद्यता विष्णुं कण्टकोद्धृतितत्परं । एकरूपं समास्थाय सुधर्म्मायामवस्थितं ।
इति श्रीमहाभारते खिलेषु हरिवंशे भविष्यपर्व्वणि हंसडिम्भकोपाख्याने एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
॥ वैशम्पायन उवाच ॥ अथ सर्व्वेश्वरो विष्णुः पद्मकिञ्जल्कलोचनः । श्यामः पीताम्बरः श्रीमान् प्रलम्बाम्बरभूषणः ।
किरीटी श्रीपतिः कृष्णो नीलकुञ्चितमूर्द्धजः । अव्यक्तः शाश्वतो देवः सकलो निष्कलः शिवः । १११३०
क्रीडाविहारोपगतः कदाचिदभवद्धरिः । कुमारैरपरैः सार्द्धं सात्यकिप्रमुखैर्नृप ।
गोलक्रीडां सुधर्म्मायां मध्ये यादवसत्तमः । चकार प्रियकृष्णोऽपि वसुधानेन केशवः ।
ममायं प्रथमो गोलस्तु पश्चाद्भविष्यति । इति ब्रुवंस्तदा विष्णुः सात्यकिं सर्व्वदा ।

पार्श्वस्था यादवास्तस्य वसुदेवपुरोगमाः । उद्धवप्रमुखा राजन्नासेदुः कश्चिदत्र वै ।
अन्यव्यापाररहितो भूतात्मा भूतभावनः । विजहार यथा रामः सुग्रीवेण पुरा नृप ।
मध्यन्दिने महाविष्णुः प्रेमेणैव सहाच्युतः । विक्रीड्य सुचिरं कृष्ण उपारंसीत् स यादवः ।
द्वाःस्थैश्च वारिताः पूर्व्वं द्वार्य्येव च समाश्रिताः । इदमन्तरमित्येवं विविशुस्ते सभां नृप ।
यतयो दीर्घतपसः पुरस्कृत्य तपोधनं । दुर्व्वाससं सुमनसो ददृशुर्यादवेश्वरं ।
गोलक्रीडासमायुक्तं करसंस्थितगोलकं । पद्मपत्रविशालाक्षं विष्णुं ससात्यकिं हरिं ।
एकेनाहत्य ह्लादयन्तं परेणान्येन गोलकं । यतयश्च महाराज प्रत्यदृश्यन्त तत्पुरः ।
कृष्णाद्यः पुण्डरीकाक्षः सात्यकिर्व्वलभद्रकः । वसुदेवस्तथाऽक्रूर उग्रसेनस्तथा नृपः ।
अन्ये च यादवाः सर्व्वे संभ्रमं प्रतिपेदिरे । इदं किमिदमित्येवं व्याकुलमनसोऽभवन् ।
पृष्ठतोऽप्यनुगच्छन्तं दिधक्षन्तं जगत्त्रयं । अर्द्धकौपीनवसनं स्मरन्तं कमपि द्विजं ।
अन्तस्तापसमायुक्तं छिन्नदण्डधरं यतिं । अन्तर्ज्वलन्तं रोषेण संग्रामादितकल्मषं ।
नेत्रोत्थितमहावह्निं प्रेक्षन्तं यादवेश्वरं । दुर्व्वाससं ते ददृशुर्भीता यादवसत्तमाः ।
किं करिष्यत्ययं क्रुद्धः किं वा वक्ष्यति नः प्रभुः । इति प्राञ्जलयः सर्व्वे यादवाः प्रतिपेदिरे ।
इदमासनमित्येवं किञ्चिदुत्थाय कृष्णाद्यः । ततः कृष्णो हृषीकेशः किञ्चिदुत्थाय तत्पुरः ।
इदमासनमित्येवं स्थीयतामिह निष्ठितः । अहमद्य स्थितो विप्र किङ्करोऽस्मीति चाब्रवीत् ।
ततः किञ्चिदिवासीत आसने यतिकिल्बिषः । आसने संस्थिते तस्मिन् यतयो वीतमत्सराः ।
आसनानि यथायोगं भेजिरे निष्ठिताः किल । अर्घ्यादिसमुदाचारं चक्रे कृष्णः किरीटभृत् ।
आह भूयो हृषीकेशो यतिं दुर्व्वाससं प्रभुं । किमर्थं ब्रूहि विप्रेन्द्र अस्मिन् प्रत्यागमो हि वः ।
दृष्टं वाऽप्यथ वा किञ्चित् कारणं वोऽस्ति वा महत् । संन्यासिनो द्विजश्रेष्ठा यूयं विगतकल्मषाः ।
निस्पृहाश्च सदा यूयमस्मत्तो द्विजपुङ्गवाः । प्रार्थ्यं नाम न चैवास्ति स्पृहा नैवास्ति वो यतः ।
स्पृहाप्रेरितकर्म्माणः क्षत्रियान् यान्ति सुमताः । निरूप्यमाणमस्माभिर्विप्र किञ्चिन्न दृश्यते ।
न जाने कारणं ब्रह्मन् युष्मदागमनं प्रति । एतावता चानुमेयं किञ्चित् कारणमस्ति वै ।
तद्ब्रूहि यदि विद्येत त्वत्तो ज्ञास्यामहे वयं । इत्युक्तवति देवेशे चक्रपाणौ जनार्द्दने ।
तस्यापि राजन् विप्रस्य भूयः कोपो महानभूत् । तस्मादभ्यधिकः पूर्व्वात् कोपः कोपायते महान् ।
दिधक्षन्निव लोकांस्त्रीन् भक्षयन्निव पश्यतः । रोषरक्तेक्षणः क्रुद्धो हसन्निव दहन्निव ।
उवाच वचनं विष्णुं दुर्व्वासाः क्रोधमूर्च्छितः । न जाने इति कस्मात्त्वं ब्रूषे नो यादवेश्वर ।
जानामि त्वां महादेवं वञ्चयन्निव भाषसे । पुरातना वयं विष्णो पूर्व्ववृत्तान्तवेदिनः ।
तथापि देवदेवोऽसि मायामानुषदेहवान् । निगूहसे प्रभुरतः कस्मात्त्वं जगतीपते ।
सोऽसि ब्रह्मविदां मूर्त्तिस्तदेतत् परमं पदं । यद्भाव्यं पुरा ब्रह्म यत्र ज्ञाता वयं पुरा ।
यत्तो विश्वमिदं भूतं तदेतत् परमं पदं । यच्च सूक्ष्मं विजानन्ति पुरातत्त्वेन चेतसा ।

पुराविदोऽय विश्वेश तदेतत् परमं वपुः । कर्म्मणा प्राप्यते यत्तु यत् ख्यात्वा निर्वृता वयं ।
प्रत्यचमपि यद्रूपं नैव जानन्ति मानुषाः । न हि मूढधियो देव न वयं तादृशा हरे । ११५७५
न जाने इति यद्ब्रूषे किमतः साहसं वचः । ये हि मूलं विजानन्ति तेषान्तु प्रविचेतनं ।
कुर्व्वतः किं फलं देव तव केशिनिषूदन । वेदान्ते प्रथितं तेजस्तच्च वेदं विचार्य्यते ।
ये च विज्ञानदृप्तास्तु योगिनो वीतकल्मषाः । पश्यन्ति ह्यन्तरात्मन्हि तदेवेदं वपुः प्रभो ।
वेदेर्यच्छ्रूयते तेजो ब्रह्मेति प्रतिपाद्य वै । तदेवेदं विजानेऽहं रूपमैश्वरमेव च ।
वैष्णवं परमं तेज इति वेदेषु पठ्यते । अवगच्छाम्यहं विष्णो तदेवेदं वपुस्तव । ११५८०
य ओमित्युच्यते शब्दो यश्च वागिति गीयते । स एवासि प्रभो विष्णो न जाने इति मा वद ।
परोचे यदि किञ्चित् स्यात्तव वक्तुं प्रयुज्यते । न जाने इति गोविन्द मा वादीः साहसं हरे ।
विश्वं यदा प्रादुरासीदयज्ञिन् लीनं चये सति । इदं तदैश्वरं तेजस्त्वगच्छामि केशव ।
कर्त्ता त्वं भूतभव्येश प्रतिभासि सदा हृदि । यद्यद्रूपं स्मरे नित्यं तत्तदेवासि मे हृदि ।
वायुरेव यदा विष्णुरिति मे धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो । ११५८५
आकाशो विष्णुरित्येव कदाचिद्धीयते मतिः । तदा तद्रूप एवासि हृन्मध्ये संस्थितो विभो ।
पृथिवी विष्णुरित्येव कदाचिद्धीयते मतिः । तदा पार्थिवरूपस्त्वं प्रतिभासि सदा मम ।
रसोऽयं देव इत्येव कदाचिच्चिन्त्यते मया । तदा रसात्मना विष्णो हृन्मध्ये संस्थितो विभो ।
यदा त्वं तेज इत्येव स्मर्त्ता त्वां पुरुषोत्तम । तदा तद्रूपसम्पन्नः प्रतिभासि सदा हृदि ।
चन्द्रमा हरिरित्येव तदा चान्द्रमसं वपु । निरीच्य चक्षुषा देव ततः प्रीतोऽस्मि केशव । ११५९०
यदा सौरं वपुरिति स्मर्त्ता त्वां जगतीपते । तदा तद्भावनायोगात् सूर्य्य एव विराजसे ।
तस्मात् सर्व्वं त्वमेवासि निश्चिता मतिरीदृशी । अतो न जानेऽहमिति वक्तुं नेशो जनार्द्दन ।
इत्यर्थे संस्थितो विष्णो पीडां नो नैव चिन्तयसे । अत्यन्तदुःखिता विष्णो वयं त्वामनुसंस्थिताः ।
ईदृशीयमवस्था नो नेतां स्मरसि केशव । तत्पुनर्भागधेयं नो नष्टमित्येव चिन्तये ।
मन्दभाग्या वयं विष्णो यतो नो न स्मरेः प्रभो । कौपिन् उत्तियदाषादो नित्यशवरमार्श्वनो । ११५९५
नाना च हंसत्रिशको बाधेते नौ जनार्द्दन । गार्हस्थ्यं हि सदा श्रेयो वदन्तीति केशव ।
इतस्ततश्च धावन्तो वदन्तो बहुकिल्बिषं । अयुक्तं बहुभाषन्तो धर्षयन्तो च नः सदा ।
इदमन्यत् कृतं देव अनघ पापमुच्यते । पश्येदं बहुधा देव भिन्नं भिन्नं सहस्रशः ।
भिक्षायां दारवं पात्रं द्विदलान् वेणुकान् बहून् । इदमप्यपरं पश्य तयोः साहसचेष्टितं ।
कौपीनं बहुधा छिन्नं तदस्माकं भवद्धनं । त्वां कपालमात्रेण कमण्डलु जगत्पते । ११६००
त्वन्तु नो रक्षसे नित्यं चात्तं वै शतमाश्रितः । चिन्तं चिन्तमिदं देव रक्षयसि सदानिशं ।
किं करिष्यामि मन्दात्मा मन्दभाग्या वयं विभो । किञ्च शरणमेव तद्ब्रूहि जगतां पते ।

